॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवरमुनये नमः

श्रीकाञ्चीप्रतिवादिभयङ्कर-अण्णङ्गराचार्यकृतिषु द्राविडाम्नायदिव्यप्रबन्ध-
विवर्ते प्रथमसहस्रे तृतीयो दिव्यप्रबन्धः

# ॥ तिरुप्पावै-श्रीव्रतप्रबन्धः ॥

( श्रीगोदादेवीप्रणीतः । )

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

( तिरुप्पावैदिव्यप्रबन्धस्य असाधारणमुखपद्यानि ॥ )

नीलातुङ्गस्तनगिरितटीसुप्तमुद्बोध्य कृष्णं
पारार्थ्यं स्वं श्रुतिशतशिरस्सिद्धमध्यापयन्ती ।
स्वोच्छिष्टायां स्रजि निगलितं या बलात्कृत्य भुङ्क्ते
गोदा तस्यै नम इदमिदं भूय एवास्तु भूयः ॥

(विवरणम्- ) श्रीकृष्णावतारे श्रीमहालक्ष्मीः गोकुले कुम्भनामकगोपालतल्लजस्य भवने *नप्पिन्नै-प्पिराट्टिनाम्नाऽवतीर्य स्थिता । सा कृष्णेन भगवता सप्तर्षभौद्धत्यनिरसनपूर्वकं परिणीतेति प्रसिद्धिः । सैव संप्रदाये नीलानाम्ना व्यपदिश्यते । गोपालकुले अभिवृद्धस्य श्रीकृष्णस्य सैव प्रधानमहिषीत्वेनानुसन्धी-यते श्रीपराङ्कुशपरकालादिभिस्सर्वैरपि दिव्यसूरिप्रवरैः । अस्मिन्नपि * तिरुप्पावैदिव्यप्रबन्धे तयैव नीला-देव्या सह शयानः कृष्णो भगवान् प्रबोध्यते । अष्टादशप्रभृतिषु तिसृषु गाथासु तस्या देव्याः प्रस्तावोऽत्र प्रेक्ष्यते । * कुत्तुविळक्करियेत्येकोनविंशगाथाप्रक्रियामनुसृत्य तदिदं मुखपद्यं श्रीपराशरभट्टार्यैः प्रणिन्ये ॥ ''नीलातुङ्गस्तनगिरितटीसुप्त हे कृष्ण ! जागृहि'' इति तस्यां गाथायां कथयति श्रीमती गोदा; तथा चोक्तमिह * नीलातुङ्गस्तनगिरितटीसुप्तमुद्बोध्य कृष्णम् * इति । तादृशं कृष्णमुद्बोध्य किं कृतवती गोदा ? श्रुति-शतशिरस्सिद्धं स्वकीयं पारार्थ्यमध्यापयामास; तदुच्यते द्वितीयचरणे । * शिन्नञ्शिरुकाले वन्दुन्नै-च्चेविप्पु * इत्येकोनत्रिंशगाथाप्रक्रियामनुसृत्य द्वितीयपादोऽभिहित इति ध्येयम् । पारार्थ्यं नाम—अनन्यार्हशेष-त्वम् । तत—श्रुतिशतशिरस्सिद्धम्—सकलवेदान्तप्रतिपाद्यमितियावत् । तदध्यापयन्ती—इति कथनेन एतद्विषये गोदादेवी कृष्णस्य आचार्यपदमाधितिष्ठतीत्युक्तं भवति । एकोनत्रिंशगाथायाम् ''अस्मत्स-काशे निशमय कृष्ण !'' इत्युक्तत्वात् तामुक्तिमनुसृत्य इयं रसोक्तिः रसिकमनोविनोदिनी भवितुम-

इति । बहोः कालात्प्रभृति प्राय स्सर्वैरपि जनैः स्वकीयस्यानन्यार्हशेषत्वस्य विस्मृतत्वेन भगवत्सन्निधावना गमनात् भगवानपि विस्मृतवानिव स्वं रूपम् । अत एव तस्मा अध्यापनं प्राप्तमिति वेदितव्यम् । स्वकीयामनन्यार्हशेषतां विज्ञापयन्त्या गोदादेव्यैव भगवानपि स्वकीयं सर्वशेषित्वमनुस्मृतवानित्युक्तं भवति । एतेन च गोदादेव्या उक्तिप्रागल्भ्यं सर्वातिशायीति सूचितं भवति ।

[ स्वोच्छिष्टायां स्रजि निगलितं या बलात्कृत्य भुङ्क्ते ] इत्यनेन तृतीयचरणेन गोदादेव्याश्चरित-प्रसिद्धो महिमविशेषोऽनुसन्धीयते । अनुपदमेवात्र प्रकाशयिष्यमाणे श्रीगोदावैभवे स द्रष्टव्यः । जगत्प्रसिद्धश्च । इह एकोनत्रिंशगाथायाम् ✽ कुत्तेवलेङ्गळ्कॊळ्ळामल्पोहादु ✽ [ अस्मत्सकाशात् कैङ्कर्यमवश्यमेव स्वीकर्तव्यम् ] इत्युक्तिमनुसृत्य "बलात्कृत्य भुङ्क्ते" इत्यनुगृहीतम् । तस्यै गोदायै नमो नमः ॥

## द्वितीयं मुखपद्यम्—✽ अन्नवयल्पुदुवै ✽ ॥

हंसविभूषितकेदाराढ्यश्रीधन्विनव्यनगरावतीर्णा श्रीमती गोदा श्रीरङ्गनाथाय सुप्रशस्तानि श्रीव्रत-प्रबन्धपद्यानि अतिमधुरं गेयानि समार्पिपत्; पुष्पमालिकां च स्वचिकुरबन्धधृतां प्रददौ । तां संकीर्तय भो हृदय ! ॥ ✽ ॥

## तृतीयं मुखपद्यम्—✽ शूडिक्कॊडुत्तशुडर्क्कॊडिये ✽ ॥

भगवते स्वचिकुरविधृतमाल्यसमर्पणसंजातौज्ज्वल्यशालिनि ! कनकलतिके ! श्रीव्रतप्रबन्धप्रणयनप्रकाशितकारुण्यवैभवे ! गोदे ! श्रीवेङ्कटपतेर्नाथस्यानन्यार्हशेषत्वं प्रार्थितवत्या भवत्याः श्रीसूक्तिषु निष्ठां संविधेहि मम ॥

इति तनियन्समाख्यमुखपद्यविवरणं समाप्तम् ॥

॥ श्रीरस्तु ॥

श्रीमत्यै गोदादेव्यै नमः।

श्रीपराङ्कुशयतीन्द्रवरवरमुनीन्द्रचरणा एव शरणम्।

# श्रीगोदाव्रतप्रबन्धप्रतिकृतिः॥

श्रीकाञ्ची. प्रतिवादिभयंकर अण्णङ्गराचार्यकृतिः॥

## अवतरणिका।

श्रीवैष्णवसंप्रदाये सरोयोगि—शठकोपमुनीन्द्र—विष्णुचित्तमुनीन्द्र—परकालसूरिप्रभृतयो दिव्यसूरिवरा स्सुप्रथिताः। ते खलु परमकारुणिकेन भगवता स्वकीयनिर्हेतुककृपया समुद्बोधितास्सन्तः प्रबुद्धा अभूवन्। तेषां सर्वेषामपि सूरीणां दिव्यदुहितृस्थानमलङ्कुर्वती गोदादेवी स्वयंभवेन तानप्यतिशयाना तुलसीव स्वाभाविकज्ञान भक्तिसौरभसमृद्धा अतिप्रबुद्धं भगवन्तमपि स्वयं प्रबोधयन्ती परमविलक्षणा प्रथिता। पुरुषोत्तमं भगवन्तं भोक्तुं पुरुषापेक्षयाऽपि वनिता एव हि प्रभवन्ति विशेषतः। पराङ्कुशपरकालादयो हि दिव्यसूरयो निजपुरुषजन्मनि जुगुप्सामुद्वहन्त इव मध्येमध्ये वनिताभूमिकाधारिणस्सन्तो भगवन्तमन्वभूवन् स्त्रीभावनानिगुम्फितगाथाविशेषैः। अस्यां खलु गोदादेव्यां तादृगारोपितभावनाया नैव प्रसक्तिः। जन्मनैव वनिता सती समुत्पन्ना सेयं भगवन्तं सुसमृद्धमनुभवन्ती सर्वभक्तसमुदयातिशायिवैभवा भासते। अत एव गोदास्तुतावनुगृहीतं निगमान्तसूरिवरैः—* भोक्तुं तव प्रियतमं भवतीव गोदे! भक्तिं निजां प्रणयभावनया गृणन्तः। उच्चावचैर्विरहसंगमजैरुदन्तैः शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः॥ * इति।

### प्रसङ्गादवतारमहिमानमस्या मनागुपवर्णयामः।

पुरा त्रेतायुगे विदेहदेशे मिथिलापुर्यां जनकचक्रवर्तिनो यज्ञशालार्थक्षेत्रे यथा हि वैदेहीवपुषा श्रीरुदियाय, तथैव कलियुगेऽस्मिन् पाण्ड्यमण्डलान्तर्गत श्रीधन्विनव्यनगरे श्रीविष्णुचित्तमुनेः पुष्पोद्याने तुलसीवर्धनार्थमुपकल्प्यमाने भूभागे सैव श्रीरुदैद्विष्णुचित्तात्मजावपुषा कर्कटमासि पूर्वफल्गुनीनक्षत्रे परमपवित्रे। * जनकानां कुले कीर्तिमाहारिष्यति मे सुतेति यथा ह्यनुसंदधे विदेहभूपतिस्तथैव विष्णुचित्तसूरिरपि विशेषतोऽनुसंदधानः अनपत्याय स्वस्मै परमकारुणिकेन भगवता प्रदत्तां तां दुहितरं भावयन् गोदेति नाम तस्याः कुर्वन् * धन्वाधन्वस्य धारासलिलमिव धनं दुर्गतस्येव दृष्टिर्जात्यन्धस्येव पङ्गोः पदविहृतिरिव * इत्युक्तरीत्या अलभ्यलाभेन तेन परमानन्दपारावारनिमग्नहृदयस्स तां लोकोत्तरप्रक्रियया परिपोषयन् काले पञ्चभिश्च संस्कारैस्संस्कृत्य परज्ञानपरभक्तिविरक्तिसंपत्समुज्ज्वलामद्वितीययशस्विनीमकार्षीत्॥

पित्रोः परमानन्दसंदोहसंदायिनी सेयमाशैशवादच्युते भगवत्यप्रच्युतभक्तिभूमा तस्यैव पत्नीभावं स्वस्मिन्नध्यवस्यन्ती * तमन्तरेण नैवान्यं मनसाऽपि पतिं वृणे * इति सुस्पष्टं च संगिरमाणा विष्णोरिव तस्य वैभवं विपुलं विचिन्तयन्ती व्याहरन्ती विलिखन्ती च विवर्धतेस्म। जनकः श्रीमान् विष्णुचित्तः प्रत्यहं वटदलशायिभगवते समर्पयितुं पुष्पमालां सज्जीकृत्य कण्डोले निधाय कार्यान्तरपरस्स्यात्। तदात्वे सेयं दिव्याम्बरदिव्याभरणभूषिता सती तामेव पुष्पमालां स्वकीयचिकुरप्रकरे रहसि बिभ्रती "भगवतोऽहमनुरूपा मनोहरा च किमु वर्ते!" इति स्वात्मानं परीक्षमाणा, पुनः पितुरुपस्थानादर्वागेव तां पुष्पमालिकां चिकुरबन्धादुद्धास्य कण्डोले तस्मिन्नेव यथायथं विनिदधती नित्यमेवमाचरन्ती, अविदितैतत्समाचारेण पित्रा समर्पितया तयैव स्रजा भगवन्तममन्दानन्दकन्दलितस्वान्तमाकलयन्तीचावर्तत॥

एवमपगच्छति बहुतिथे काले कस्मिंश्चन दिने यथावत्पुष्पमालां सन्नाह्य कार्यवशाद्बहिर्गतो विष्णुचित्तस्सहसा च प्रतिनिवर्तमानो दुहितुश्चिकुरप्रकरे विन्यस्तां तां स्रजमवलोक्य, आः ! कीदृशमिदमपचरितमित्यवसीदन् अमर्षपरवशश्च सन् 'साध्वि ! नैवंविधं कर्म कर्तुमर्हति भवती; मनसाऽपि चिन्तयितुमयोग्यमिदं कर्म हन्त कथं नु भवती कर्मणाऽपि कलयति ? किमेवं नित्यशः कलयन्ती वर्तसे ? हा बत ! मामपि स्वत्वपचारगर्ते निपातितवत्यसि, दुःसहमिदं मे दुःखं त्वया कृतम्' इत्यादिकमभिधाय 'मा स्म तावदितः परमेवं कार्षीः' इति च शिक्षयित्वा तस्मिन्दिने भगवत्सन्निधौ पुष्पसमर्पणमकुर्वाणः कैङ्कर्यविच्छेदविषादाभिभूतस्तूष्णीक आसीत ॥

अनुपदमेव निशीथे स एव वटपत्रशायी भगवान् मुनेरस्य स्वप्ने दर्शनं दिशन् 'कुतो नु भवानद्य मे स्रजं न समार्पिपत ?' इत्यनुयुज्य, दुहितुरपचरितमेव तत्र निमित्तमिति मुनिना विज्ञापितमाकर्ण्य सादरमेवमादिदेश—भगो ! चिरात्तदुच्छिष्टामेव स्रजमुपभुज्य सुरभिमौलिस्समृद्धानन्दश्चाहमस्मि, तादृशाय मह्यं तादृशीमेव मालां नियतमुपहर्तुं महति भवान् इति । आदिश्य चैवमन्तर्हितो हरिः ॥

अथ शयनादुत्थितो विष्णुचित्तो गोदां स्वदुहितरं साक्षादस्येशानां जगतो विष्णुपत्नीमेवावधारयन् ततः प्रभृति भगवद्दिव्याज्ञानुसारेण तादृशीमेव स्रजमुपहरन् तस्य निरवग्रहमनुग्रहमैकान्तिकमाससाद । अनेनैव हेतुना दुहितुश्च नाम चक्रे * शूडिक्कोडुत नाच्चियारिति [ स्वोच्छिष्टमाल्यदात्री देवीति ] इदमैतिह्यमस्मिन्दिव्यदेशे अद्याप्यनुष्ठानगोचर आलक्ष्यते । प्रत्यहं प्रातर्गोदादेवीमन्दिरात्तदुपभुक्तं माल्यं वाद्यघोषादिमर्यादासनाथमानीयते श्रीभगवन्मन्दिरमिति ॥

गोदादेव्या वयो वर्धते ज्ञानभक्तिविरक्तिभिस्सह । भगवत्येकस्मिन्नेव चास्या अनुरागोऽप्यभिवर्धते * पतिसंयोगसुलभं वयो दृष्ट्वा च मे पिता । चिन्तार्णवगतः पारं नाससादाप्लवो यथा * इति श्रीरामायणोक्तप्रक्रियया अस्या जनकोऽपि विष्णुचित्तो वैवाहिकचिन्तार्णवविनिमग्न आस्त । भगवन्तमेकमन्तराऽन्यं कापुरुषं नैव मनसाऽपि कलयेयमिति तावदेषा सुदृढमध्यवस्यति । पिता च तदीयं वस्तु स एव कामं स्वीकुरुतामिति निर्भरोऽवतस्थे । इयं च स्वकीयप्रेमपूरपरीवाहरूपं दिव्यप्रबन्धद्वितयं प्रादुर्भाव्य भगवन्तमनवग्रहानुग्रहोन्मुखं कर्तुमयतत । तच्च दिव्यप्रबन्धद्वयम्—तिरुप्पावै, नाच्चियार् तिरुमोऴि इति प्रसिद्धम् ॥

प्राथमिकस्य तिरुप्पावैनाम्नो दिव्यप्रबन्धस्य प्रभावः सर्वातिशायी सुप्रथितः । भगवान् रामानुजमुनिर्भाष्यकारो गुरुवर इममेव दिव्यप्रबन्धं नित्यमनुसंदधानः * तिरुप्पावैजीयारिति दिव्यनाम्नैव प्रथामाश्नुतेति संप्रदायविदो विदन्ति । दिव्यप्रबन्धेऽस्मिन्नशेषा अपि वेदान्तार्था स्समुल्लसन्तीति नातिशयोक्तिः । कृष्णावतारसमये गोप्यः कात्यायनीव्रतविशेषमन्वतिष्ठन्मार्गशीर्षमास इति पौराणिकी प्रथा वरीवर्ति । तदनुकार एव क्रियते दिव्यप्रबन्धेनानेन । ( पावै ) इति द्राविडभाषायां व्रतस्य नाम । ( तिरु ) इति श्रीशब्दपर्यायः । श्रीव्रतप्रबन्ध इत्युक्तं भवति ।

द्राविड्यां वाचि त्रिंशद्गाथात्मकोऽयं दिव्यप्रबन्धः संस्कृतवाणीविचक्षणानां रसिकानां भक्ताग्रेसराणां प्रमोदाय नित्यानुभवाय च दासेन स्रग्धरावृत्तबन्धुरत्रिंशत्पद्यात्मना विवर्तितो व्याख्यातश्च संक्षेपेण ।

इत्यवतारिका ।

श्रीः

श्रीकाञ्चीप्रतिवादिभयङ्कर-अण्णङ्गराचार्यकृत—सटीक-

# श्रीगोदाव्रतप्रबन्धप्रतिकृतिप्रारम्भः ॥ [ तिरुप्पावै ]

—•—

## १. प्रथम गाथा—मार्गळित्तिङ्गळ् ।

### १. प्रथमगाथायाः पद्यम् ।

संप्राप्तो मार्गशीर्षो हिमकरकिरणोद्गाररम्यश्च वारः
स्नानं पुण्यं व्रताङ्गं कलयितुमभिलाषोऽस्ति यासामिहाद्य ।
गोप्यस्ताः काममायान्त्वनवधिकरुणो नन्दसूनुर्यशोदा-
सिंहोऽनुग्राहकस्स्यादिति कथितवती नः पुरो भातु गोदा ॥ १ ॥

विष्णुचित्तात्मजया श्रीमत्या गोदादेव्या प्रणीतस्य तिरुप्पावैनाम्नो दिव्यप्रबन्धस्य विवर्तरूपेऽस्मिन् पूलोकमय प्रबन्धे प्रतिपद्यं तस्या गोदादेव्याः स्तुतिरपि संकल्पिता । गाथया योऽर्थ उक्तस्तमर्थं पद्यतो विशदीकृत्य, एतादृशार्थ प्रदात्री गोदादेवी नः शरणमिति अन्ते प्रतिपादनं क्रियत इति यावत् ।

मार्गशीर्षव्रतविशेषानुष्ठानार्थं संमिलिता गोपिका अन्या अपि गोपीः स्वगोष्ठ्यामन्वेतुमाह्वयन्तीति भावबन्धं निधाय निबध्नाति स्म गोदा प्रथमां गाथाम् * मार्गळित्तिङ्गळ्मदिनिरैन्दनन्नाळालित्यादिकाम् । मार्गशीर्षमासस्संप्राप्तः; आपूर्यमाणपक्षश्च [ राका च ] सन्निदधे । अद्य यासामिह गोपीनां व्रताङ्गभूतं पुण्यस्नानं कर्तुमभिरुचिरास्ते ताः काममागच्छन्त्विह । असीमकरुणावरुणालयो यशोदास्तनन्धयो नन्दनन्दनो भगवान् कृष्ण एतदस्मदीयं व्रतं फलेग्रहि संविधास्यति । अतो निश्शङ्कमागन्तव्यमागन्तुका-मैर्ललनानिवहैः—इति गोपीगिरा या गोदादेवी कथितवती सा नः पुरो भातु—इति पद्यार्थः ॥

[ विशेषविवरणम् । ] चिरं निगलबन्धे स्थितो जनः कदाचित्तस्माद्बन्धाद्दैवाद्विमुक्तस्सन् बन्ध-मोक्षप्रापको दिवसोऽयं सुशोभन इति यथा तं दिवसं पुनःपुनरभिनन्दति, यथा च धनुर्यागोत्सवप्रेक्षणाप-देशेन कृष्णबलरामौ व्रजादानेतुं कंसेनादिष्टो महात्मा अक्रूरः * अद्य मे सफलं जन्म सुप्रभाता च मे निशा । यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम् * इति तं दिनविशेषं श्लाघतेस्म, तथा गोप्योऽपि श्रीकृष्णविश्लेषेण चिरमवसन्नास्स्थिता अधुना व्रतानुष्ठाननिर्वर्तनच्छलेन तन्मुखारविन्दसेवाप्राप्तिहेवा कभरिता व्रतानुष्ठानार्थं गोपवृद्धानामनुमतिं यस्मिन्दिने प्रापुस्तदेव सुदिनं सुष्ठु श्लाघन्ते । गीताचार्यो भगवान् ( दशमेऽध्याये ) * मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः * इति मार्गशीर्षमासं स्वांशभूतम-कथयदिति सुप्रथितम् । तादृशः पावनो मासो यदृच्छयाऽद्य संप्राप्त इति संतोषभूमानं प्रकाशयन्ति गोप्यः * संप्राप्तो मार्गशीर्षः * इति । ब्राह्ममुहूर्तवदसौ मासः सत्त्वोत्तरकालविशेषः खलु । वैष्णवो हि मासोऽयम् । * चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः । यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् * इति श्रीरामचन्द्रयौवराज्याभिषेकमनोरथसमयोपस्थितचैत्रमासोपलालनवदिहापि मासोपलालनं स्थाने । माङ्गलिककार्यानुष्ठानम् * आपूर्यमाणपक्षे पुण्ये नक्षत्रे * कर्तव्यमिति शास्त्रचोदितम् । तादृशोऽपि दिन-विशेषो यदृच्छया समुपनत इति पुनस्संतोषातिशयः प्रकाश्यते * हिमकरकिरणोद्गाररम्यश्च वारः संप्राप्तः * इति ।

अथ * पुण्यं स्नानमिति यत्प्रस्तूयते तत्रेदमवधेयम् । दिव्यप्रबन्धेऽस्मिन् मार्गशीर्षस्नानप्रस्तावः पञ्चषगाथासु क्रियते। परन्तु स्नानार्थं जलाशयतीरं गता इमाः कन्यका इति तु नात्र मात्रयाऽपि प्रतिपाद्यते। भगवतो नीलापतेः कृष्णस्य सन्निधिमभ्येत्य स्वमनोरथं विज्ञाप्य कृतकृत्या अभूवन्नित्येव सुस्पष्टमवगम्यते। तथाचात्र क्रियमाणः स्नानप्रस्तावो भगवदनुभवमेव विवक्षतीति वेदितव्यम्। * * करचरणसरोजे कान्तिमन्नेत्रमीने श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे । हरिसरसि विगाह्यापीय तेजोजलौघं भवमरुपरिखिन्नः खेदमद्य त्यजामि ॥ * इति मुकुन्दमालापद्यरत्नम्, * उत्फुल्लपङ्कजतटाकमिवोपयानि श्रीरङ्गराजमिह दक्षिणसव्यसीम्नोः। लक्ष्मीं विहाररसिकामिव राजहंसीं छायामिवाभ्युदयिनीं मवनीं च तस्याः ॥ पिब नयन पुरस्ते रङ्गधुर्याभिधानं स्थितमिव परिफुल्लत्पुण्डरीकं तटाकम्। श्रियमपि विहरन्तीं राजहंसीमिवास्मिन प्रतिफलनमिवास्याः पश्य विश्वंभरां च * इति श्रीरङ्गराजस्तवपद्यरत्ने चात्र संवादतयाऽनुसन्धेयानि । [ अभिलाषोऽस्ति यासां ताः काममायान्तु ] इति कथनेन- भगवद्विषयावगाहने इच्छामात्रमधिकारः, नान्या योग्यतासंपदपेक्षिता-इति सूचितं भवति । * अत्रैव कारणं पुंसामष्टाक्षरपरिग्रहे * इत्येतदपि वचनमत्र स्मर्तव्यम् । देशनियमः कालनियमः प्रकारनियमः अधिकारिनियम इत्येवंविधेषु नियमेषु नैकोऽप्यत्रापेक्षितः, अभिलाष एक एवापेक्षितः, तस्य च भगवद्विषयकत्वमावश्यकम्—इत्युक्तं भवति। * विदितस्स हि धर्मज्ञः शरणागतवत्सलः। तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ * इति प्रतिकूलाग्रेसरं महापापिनं रावणमपि खल्वाह्वयति भगवती जानकीदेवी। अथ भृशमनुकूलानामाह्वाने को विस्मयः।

अचेतनक्रियाकलापस्य फलप्रदत्वमसंभवि, क्रियया स्वत एव वा सुप्रसन्नो भगवानेव फलप्रदान प्रवीण इति * फलमत उपपत्तेरित्यादिब्रह्मसूत्रसाधितोऽर्थः प्रकाश्यते-* अनवधिकरुणो नन्दसूनुर्यशोदासिंहोऽनुग्राहकस्स्यात् * इत्यनेन वाक्येन । मूलगाथायां * कार्मेनिच्चेङ्गण कदिर्मदियम्पोलमुकत्तान् * इति द्राविडसूक्तेः परमतात्पर्यम् * अनवधिकरुणः * इत्यनेन विशेषणेन संगृहीतम् । दिव्यमङ्गलविग्रहे दिव्यनेत्रे दिव्यमुखारविन्दे च भासमानामनवधिकरुणां बिभ्राणो भगवानित्युक्तं भवति । [ नन्दसूनुः ] * * जन्माद्यस्य यत इत्याद्युक्तरीत्या सर्वकारणभूतोऽपि भगवान् * अजायमानो बहुधा विजायते * पिता पुत्रेण पितृमान् योनियोनौ * इत्याद्युक्तप्रक्रियया केवलं करुणाभूम्ना नन्दनन्दनस्सन्नवततार अस्मादृशान् समुत्सुकजनाननुग्रहीतुमेवेत्युक्तत्यभिप्रायः । [ यशोदासिंहः ] कृष्णकिशोरो हि हितकामनन्दगोपसकाशे अतिविनीतोऽतिचकितश्च वर्तेत; प्रियकामाया यशोदाया मातुस्सकाशे तु सिंहशाव इव व्यतिवेलखेलस्स्यादिति प्रसिद्धिः। तदेवात्र विशेषणद्वयेन सूच्यते। स्वातन्त्र्यं पारतन्त्र्यं चेत्युभयमप्यपर्यनुयोज्यं हि भगवतः।

[ अनुग्राहकस्स्यात ] उपरि षड्विंशगाथायाम् ( * माले मणिवण्णा । इत्यस्याम् ) अभ्यर्थयिष्यमाणव्रतोपकरणवस्तुवर्गप्रदानेन व्रतनिष्पादकस्स्यादिति सर्वजनवेद्योऽर्थः । व्रतानुष्ठानमपदिश्य कृष्णकामनैकनिरतानामस्माकं स परिपूर्णानुभवप्रदानेन अस्मदीयमनोरथपूरकस्स्यादिति अन्तरङ्गाभिप्रायः ॥ इतोऽपि बहवोऽर्थविशेषाः श्रवणैकगम्या इति विरम्यते ॥ ... ... ( १ )

## २. द्वितीयगाथा-वैयत्तु वाळ्वीर्हाळ् नामुम् नम्पावैक्कु.

### २. * द्वितीयगाथायाः पद्यम् *

दुग्धाब्धीशस्य विष्णोः पदकमलयुगं कीर्तयध्वं. कुरुध्वं
कल्ये स्नानं च, गव्याशनरुचिरुचिता नैव, पुष्पाञ्जनादि।
नो सेव्यं, त्याज्यकृत्यं त्यजत, कटुवचो नैव वाच्यं यथाश-
क्त्यास्थेयं पात्रदानं व्रतनियतय इत्यूचुषी पातु गोदा ॥ २ ॥

प्रकृतव्रतसमाप्तिपर्यन्तं यानि यानि कर्तव्यानि, यानि यानि च त्याज्यानि तान्यभिधीयन्ते गाथयाऽनया। कृत्याकृत्यविवेकसंकल्पप्रकाशिका सेयं गाथेति यावत । क्षीराब्धिनाथभगवत्पादारविन्दद्वंद्वकीर्तनम्, प्रत्यूषे स्नानकरणम्, यथाशक्ति सत्पात्रेषु वितरणं चेत्यमूनि कृत्यानि कर्तव्यत्वेन कथ्यन्ते। घृतक्षीरादिगव्यस्वीकारत्यजनं पुष्पधारण-अञ्जनाञ्जनप्रहाणम् सर्वसाधारण्येन शास्त्रेषु निषिद्धानामकृत्यानां वर्जनम् कटुवचसां वाचाऽनुद्घाटनं चेति एतान्यकृत्यत्वेन कथ्यन्ते। किमर्थमेतत्प्रस्ताव इदानीमितिचेत [ व्रतनियतये ] उपक्रान्तव्रतसाद्गुण्याय । एवं नाम संकल्पप्रकारं प्रकथितवती गोदाऽस्मान् पातु ॥

[ दुग्धाब्धीशस्य ] प्रकृते परमदैवतभूतं नन्दनन्दनं कृष्णकिशोरं विहाय क्षीराब्धिनाथस्य संकीर्तनमधुना कुतः शिष्यत इति चेत; * एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् * इति सुप्रसिद्धप्रमाणरीत्या क्षीरार्णवनिकेतनस्यैव श्रीकृष्णत्वेनावतीर्णत्वात मूलकन्दभूतस्थानात्प्रभृत्युद्देश्यतां हृदिनिधाय कथितमेवमिति विभाव्यम । * क्षीराब्धीशं कीर्तयध्वमित्यनुक्त्वा तस्य पदकमलयुगं कीर्तयध्वमिति कथनेन मन्त्ररत्नप्रक्रियया चरणारविन्दद्वंद्वनिष्ठैव स्वरूपोचितेति सूचितं भवति । [ कुरुध्वं कल्ये स्नानम् ] किमिदं प्रत्यूषे स्नानं व्रताङ्गतयाऽनुष्ठेयम ? प्रत्यहमपि यावज्जीवं प्रभात एव खलु स्नातव्यम, एवमेव हि शास्त्रचोदना । कथं तर्हि संप्रति व्रतनियमार्थमिदमुच्यत इति चेत; अधुना विवक्षितः प्रत्यूषकालस्तु नित्यस्नानोचितकालापेक्षया विशिष्टो वेदितव्यः । [ गव्याशनरुचिः नैवोचिता ] उपरिष्टात्सप्तविंशगाथायां "क्षीरान्नं प्राशयैथाः" इति गोविन्दसकाशे प्रार्थयिष्यते, भगवता सहैव क्षीरादिभोग्यवस्तुजातं स्वीकर्तव्यम; अधुना तु व्रतनिष्पत्तये देहधारणमात्रौपयिकं किमप्याश्यमिति भावः । गव्यशब्देनात्र दुग्धघृतादि सर्वं संगृह्यते । उपवासकृशा दीना वयमिति स्वात्मगात्रप्रदर्शनेन स कृष्णोऽनुकम्पयितव्य इति हृदयम् । * वासुदेवस्सर्वमिति स महात्मा सुदुर्लभ इत्युक्तरीत्या भगवन्तं वासुदेवमेव धारकपोषकभोग्यादिसकलवस्तुत्वेन परिगृह्य प्राकृतेषु धारकपोषकभोग्यवस्तुषु वीततृष्णा भवेमेति हृदयम् ।

[ पुष्पाञ्जनादि नो सेव्यम ] व्रतसमाप्तिपर्यन्तं पुष्पधारणवर्जनं दृशोरञ्जनाञ्जनवर्जनं च संकल्प्यते। अस्याउक्तेर्हृदयमित्थमवधेयम,—जगति पुष्पधारणेन अञ्जनलेपेन च देहालङ्करणमेव खलु क्रियते ललनाभिः; शमदमाद्यात्मालङ्कारसमुपार्जनैकदत्तदृष्टीनां मुमुक्षूणामुत्तरोत्तरमात्मालङ्कारविवर्धनैकवैयग्री समुचिता; न पुनर्हेयदेहालङ्करणप्रवणता युक्ता भवतीति सूचितं भवति। [ त्याज्यकृत्यं त्यजत ] हेयतया शास्त्रेषु कथितानि कृत्यानि त्यजत । शास्त्रेष्वनुष्ठेयतया कथितान्यपि कानिचन कृत्यानि शिष्टैरननुष्ठितानिचेत्तेषामपि प्रहाणमिह प्रोक्तं भवति। तैत्तरीयोपनिषदि * अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात । ये तत्र ब्राह्मणास्संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामास्स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः * इत्याम्नातत्वात * धर्मज्ञसमयः प्रमाणमिति सूत्रितत्वाच्च त्याज्योपादेयविवेके शिष्टाचार एव ह्यनुसर्तव्यः ॥ [ कटुवचो नैव वाच्यम ] * सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् * नारुन्तुदस्स्यान्न नृशंसवादी * इत्याद्यनेकप्रमाणानुरोध इह द्रष्टव्यः । [ यथाशक्ति पात्रदानमास्थेयम् ] * दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् * इति गीतोक्तप्रकारेण यथाशक्ति दानश्रद्धया भवितव्यम् । एतदधुना किमर्थमुच्यत इति चेत [ व्रतनियतये ] इदानीमनुतिष्ठासितव्रतनियमार्थमिति कथितं भवति । ननु व्रतनियमार्थमिति कथनात् व्रतसमाप्त्यनन्तरं नित्यत्याज्यानामपिकृत्यानामुपादानं कटुवचसः कथनमित्यादिनिषिद्धसेवनं किमु स्वीकर्तव्यमितिचेत; न तथा मन्तव्यम् । "तस्यैतद्व्रतम् । नानृतं वदेत । न मांसमश्नीयात" इत्यादौ—नित्यशः परिहरणीयस्याप्यनृतकथनमांसाशनादेः व्रतकाले विशिष्य परिहरणीयत्वकथनेन तदा तस्य । द्विगुणपातकोपधापकत्वं यथा प्रतिपन्नं तथाऽत्रापि प्रतिपत्तव्यम् ॥ ... ... (२)

# ३. तृतीयगाथा–ओङ्गियुलहळन्द उत्तमन्पेर्पाडि

३. ❀ तृतीयगाथायाः पद्यम् ।

त्रैलोक्याक्रामिपादोत्तमपुरुषहरेर्नाम संकीर्त्य दिव्यं
संपाद्येत व्रतं चेत्सकलजनपदक्षेममव्याहतं स्यात् ।
वृष्टिश्च स्याद्यथावत्तदनु समुदियात्सस्यवृद्धिस्समृद्धा
स्याद्गव्यस्याभिवृद्धिर्भृशमिति गृणती पातु गोदा सदा नः ॥ ३ ॥

प्रकृतव्रतानुष्ठानेन संपत्स्यमानं फलं संकुचितं न भविष्यति, अपितु सर्वलोकव्यापि भविष्यतीत्यभिधीयते गाथयाऽनया । एतत्प्रबन्धाध्ययनफलम् अन्तिमगाथायामभिधीयते, एतत्प्रबन्धप्रतिपाद्यव्रतानुष्ठानफलम् अनया गाथया निगद्यत इति प्रतिपत्तव्यम् । त्रिविक्रमस्य पुरुषोत्तमस्य दिव्यनामसंकीर्तनपूर्वकं प्रस्तुतव्रतनिर्वर्तने सति सर्वेषामपि जनपदानां क्षेममनपायं भवेत । वृष्टिश्च मासि मासि त्रिः स्यन्देत सस्याभिवृद्धिश्च सुसमृद्धा भवित्री । तथा गव्याभिवृद्धिश्च भवेदिति गोपिकागिरा कथयन्ती गोदा सदा नः पातु ॥

सत्कृत्यानुष्ठातारो महानुभावा यत्र निवसन्ति तत्र सर्वा अपि संपदस्समृद्धा भवन्ति, विपदश्च दवीयस्यो भवन्तीत्ययमंशः ❀ यत्राष्टाक्षरसंसिद्धो महाभागो महीयते । न तत्र संचरिष्यन्ति व्याधिदुर्भिक्षतस्कराः ❀ इत्यादि प्रमाणावगतः । इदानीं श्रीकृष्णकिशोरे अनन्यप्रीतिभरं बिभ्राणा इमा गोपकन्याः त्रिविक्रमभगवद्गुणकीर्तने किमर्थं प्रवृत्ता इतिचेत्, त्रिविक्रममूर्तेः पूर्वतनी या वामनमूर्तिस्तस्यास्सौन्दर्यं कृष्णस्यास्य सौन्दर्यं च मिथस्समानमिति प्रसिद्धिभूम्ना यशोदा तदातदा कृष्णमाह्वयन्ती "आयाहि [वामन हरे मम कृष्णबाल!" इत्याह्वयतिस्मेति प्रसिद्धम् । सैव वासना गोपीनामपि भवति । उपरिष्टात् कृष्णप्रबोधनसमयेऽपि सप्तदशगाथायां ❀ लोकविक्रान्तपाद ! स्वामिन् देवाधिदेव ! त्यज शयनरुचिम् ❀ [अम्बरमूडरुत्तोङ्गियुलहळन्द उम्बर्कोमाने उरङ्गादेलुन्दिराय] इत्युक्तमिह ध्येयम् । अथ च सिंहासने निषण्णस्य मङ्गलाशासनसमयेऽपि ❀ विक्रान्ताशेषलोकप्रभुवर ! जयतात्ते पदाम्भोजयुग्मम् ❀ [अन्रिव्वुलहमळन्दायडिपोत्ति] इत्यभ्यधायि । अतश्च गोपीनां श्रीमति कृष्णकिशोरे त्रिविक्रमाभेदभावना सर्वथा समुल्लसतीति सुस्पष्टमवधार्यते ।

[ उत्तमपुरुषहरेः ] त्रिविक्रमस्यैव भगवत उत्तमपुरुषत्वं संप्रतिपन्नम् । परेषां हानिमुत्पाद्य स्वयं जीवन् पुरुषः अधमः । स्वजीवनाविरोधेन परजीवनमनुमन्यमानो मध्यमः । स्वहानिं सर्वथा सकृतूहलं सोढ्वा परेषां जीवनमेव परम पुरुषार्थं मन्यमानः पुमानुत्तमः । ( परहानिकृते स्वहानिमपि संमन्यमानस्त्वधमाधम इति तिष्ठतास्ताम् । ) भगवान् खलु देवेन्द्रस्य श्रेयसे स्वयं सर्वजनपरिहासार्हवामनमूर्तिम् बिभ्राणो याच्ञावृत्तिमप्यवालम्बतेति सत्यममुष्यैव संप्रतिपन्नमुत्तमत्वम् । ❀ याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमाशु ❀ इत्युक्तरीत्या स्वस्य महत्त्वहानिसंपादनक्षमां याच्ञावृत्तिमप्यसौ यदधात्सोत्साहं तदहो केवलं परजीवनार्थमेव खलु । एतादृशस्योत्तमपुरुषस्य हरेर्नाम संकीर्त्य यदि वयं प्रस्तुतं व्रतं संपादयेम, तर्हि ❀ अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । अतिक्रूराश्च राजानः षडेता ईतयस्स्मृताः ❀ इत्युक्त-ईतिबाधाविरहेण सर्वजनपदक्षेमसमृद्धिस्स्यात । क्षेमप्रकारश्च कीदृश इति चेत [ वृष्टिश्च स्याद्यथावत ] यथावद्वृष्टिर्नाम मासिमासि त्रिर्वर्षणमिति मूले स्पष्टमुच्यते । ब्राह्मणानां वेदाध्ययनानुष्ठानसंपत्समृद्धिनिमित्तमेका वृष्टिः, भूपतीनां यथान्यायराज्यपरिपालननिमित्तमेका वृष्टिः, सतीनां वनितानां पातिव्रत्यपरिपालननिमित्तमेका वृष्टिरिति आहत्य त्रिर्वर्षणं विचक्षणा व्याहरन्ति ।

[तदनु सस्यवृद्धिस्समुदियात] अयमपि जनपदक्षेमप्रभेदः। यथावद्वृष्ट्या यत्फलं तदिदंनाम। ( गव्यस्याभिवृद्धिर्भृशं समृद्धा स्यात् ) इदमेव हि व्रजभूमिजुषां प्रधानं फलम्। दुग्धदधिघृतादिसमृद्धिरनपाया स्यात्—इति गोपिकागिरा कथयन्ती गोदा सदा नः पातु॥

अस्या गाथाया ध्वन्यर्थश्चैवमवधेयः;—* साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्। मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना * इत्युक्तरीत्या नारायणापरावतारभूत आचार्य इह हरित्वेनाभिधीयते। आचार्येषु अधमा मध्यमा उत्तमाश्च सन्ति; कर्मकाण्डार्थोपदेष्टारः अधमाः। ब्रह्मकाण्डार्थोपदेष्टारो मध्यमाः। रहस्यत्रयार्थोपदेष्टार उत्तमाः। सर्वथा परोपदेशमकुर्वाणा अधमाः। शिष्यनिर्बन्धभूम्ना परोपदेशं कुर्वाणा मध्यमाः। स्वकीयनिर्हेतुककृपया सकृत्हलमुपदेष्टार उत्तमाः। त्रिविक्रमो भगवानिव श्रीपादतीर्थप्रदानेन पातकिजनान् यः पुनीते तस्योत्तमस्याचार्यस्य नाम्नः * गुरोर्नाम सदा जपेत * इत्युक्तरीत्या संकीर्तनमेव प्रकृते व्रतम्। अनेन व्रतेन सकलजनपदक्षेममव्याहतं स्यात्—आचार्यभक्तिभरिता महान्तो यत्र निवसन्ति तत्र सर्वप्रकाराभ्युदयसमृद्धिरनपायेति वेदितव्यम्। अथ त्रिर्वृष्टिर्नाम रहस्यत्रयार्थतत्वत्रयार्थप्रकाशनम्। परमपदमाप्यनन्तरम् * अहमन्नमहमन्नमहमन्नम् * इति मुक्तात्मानः कथयन्तीत्याम्नानात् एतेऽत्र सस्यपदाभिलष्याः। मुमुक्षुत्वाभिवृद्धिरिह विवक्षिता। ( गव्याभिवृद्धिः ) पञ्चगव्यवत्परमपावन—पञ्चसंस्कार--अर्थपञ्चकाद्यभिवृद्धिरभिप्रेता॥ ३॥

## ४. चतुर्थीगाथा—आलिमळैक्कण्णा.

* चतुर्थगाथायाः पद्यम् *

अब्धौ गाढं विगाह्याम्बुद! सलिलमुपादाय लक्ष्मीशतन्वा
तौल्यं प्राप्याथ शंखध्वनिसमनिनदं जृम्भयन् चक्रवद्भाम्।
भूत्वा श्रीशार्ङ्गवत्त्वं कलय जलमहावर्षमस्मद्व्रताये-
त्यादेशं मेघदेवं प्रति कलितवती पातु गोदाख्यगोपी॥ ४॥

अधस्तनगाथायां देशक्षेमप्रस्तावना कृता, देशक्षेमस्य पर्जन्यदेवाधीनत्वात् स किञ्चित्कारापेक्षी सन् समुपस्थितोऽभूत। तमादिशन्ति गोप्यो गाथयाऽनया। * द्रवन्ति दैत्याः प्रणमन्ति देवताः नश्यंति रक्षांस्यपयन्ति चारयः। यत्कीर्तनात्सोऽद्भुतरूपकेण ममास्तु माङ्गल्यविवृद्धये हरिः * इति श्रीविष्णुधर्मवचनम्। 'यत्कीर्तनात् प्रणमन्ति देवताः' इत्यभिधानात् पर्जन्यदेवस्य प्रणतत्वम् अथ तस्मै आज्ञाप्रदानं च नानुपपन्नमिति प्रतिपत्तव्यम्। हे अम्बुद! त्वं सागरे गाढमवगाह्य ततः सलिलमुपादाय श्रीनारायणदिव्यमङ्गलविग्रहवन्नीलिमानमनुप्राप्य अथ तदीयश्रीपाञ्चजन्यध्वनिवद्गम्भीरं ध्वनिमुत्पाद्य तदीयश्रीसुदर्शनवद्भासमानस्सन् शरवर्षितदीयश्रीशार्ङ्गवत् महावर्षं कलयन् अस्मदीयं व्रतं निर्वर्तय--इति पर्जन्यं प्रति गोपीगिरा आदेशं कृतवती गोदा पालयत्वस्मान्॥

४. गाथायामस्यां मेघापदेशेन विद्वांसो भक्तोज्जीवनतत्परा महाभक्ताग्रेसरा एव संबोध्यन्त इति वेदितव्यम्। १. मेघो यथा क्षारमपि सागरसलिलं स्वयं निपीय स्वादु वर्षति तथा श्रुतिसागरगतानर्थान् दुरवगाहानपि कटूनपि स्वादिष्ठानाचय्य सर्वोपभोग्यतया प्रतिपादयन्ति महान्तः। २. मुदिरो यथा तत्र तत्र सञ्चरन् वर्षति तथा महान्तोऽपि क्षेत्रतीर्थयात्रापदेशेन तत्रतत्र पर्यटन्तस्सन्तः सर्वोपजीव्यानर्थविशेषानभिवर्षन्ति। ३. जीमूतो यथा निम्नस्थलानि वृष्ट्या परिपूरयति तथा ज्ञानिनोऽपि सदुपदेशवृष्टिभिर्नीचानपि ज्ञानपरिपूर्णान् विदधति। ४. जलदस्तु सर्वदाऽपि न वर्षति; अपितु कालविशेषेष्वेव। एवं गुरु-

बोऽपि समयविशेषेष्वेव सदुपदेशनिष्णाता भवन्ति। ५. जलधरो यदि प्राप्तकालेषु न वर्षति तर्हि जगति नानाविधाः पीडास्संभवन्ति। एवं समयेषु सदाचार्यसदुपदेशविरहे सति देहात्मभ्रम—स्वस्वातन्त्र्यभ्रम-अन्यशेषत्वभ्रम--स्वरक्षणेस्वान्वययोग्यताभ्रम--अबान्धवेषु बन्धुत्वभ्रम--विषयप्रावण्यादिरूपाः पीडा उत्पद्येरन्। ६. वलाहका अत्यधिकं वर्षन्तोऽपि कदाऽपि तृप्तिं नाधिगच्छन्ति, नापि प्रत्युपकारप्रतीक्षिणो भवन्ति। एवमाचार्या अपि अधिकाधिकमर्थविशेषोपदेशनिरता अपि सन्तो न पर्याप्तिमधिगच्छन्ति नापि प्रत्युपकारं प्रेप्सन्ति। अनन्यप्रयोजनास्सन्त उपर्युपर्युपदेशानुकूलसमयप्रतीक्षिणस्समुत्कण्ठिता एव भवन्ति। ७. तोयदः कदाचित् कतिपयान् पयःकणान् विकीर्य विरमति, कदाचन तु अलमलमित्युक्तिं जनयन्तीं महावृष्टिमुत्पाद्य विश्वं विस्मापयति। एवं प्राज्ञपुंगवा अपि कदाचित्कर्णमूले मंत्रोपदेश इति कानिचिदक्षराण्युपदिश्य विरमन्ति; अन्यदा तु श्रुतिस्मृतीतिहासपुराणोभयवेदान्तरहस्यसारार्थरत्नामृतान्युद्वेलं सुचिरमुपदिशन्तो हन्त! केयं महावृष्टिरिति श्रोतृजनान् विस्मयविवशान् विदधति। ८. वलाहकैः कदाचित्कुत्रचित्सिच्यमानं सलिलं तप्तायःपिण्डे क्षिप्तं जलमिव सद्य एव भजत्यसत्कल्पताम्; कदाचिदन्यत्र सिच्यमानमुदकं मुक्ताफलात्मना परिणमति; एवमाचार्यैः कुत्रचिदुपदिश्यमाना अर्था अनवधानविस्मरणादिभिरसत्कल्पतामाप्नुवन्ति। अन्यत्र तु मेधाविष्वनर्घाम् पुष्टिमनुविन्दन्ति। मुक्ताफलवत् श्रीवचनभूषणादिनामभिर्भूषणतामुपयन्ति च। ९. तोयदप्रत्तं तोयं सरित्कूपसरस्यादिषु प्रविष्टं सत् सर्वोपजीव्यं भवति। अन्यत्र प्रविष्टं तद् ग्रहीतुमप्ययोग्यं भवति। एवमभिज्ञैरधिकारिषु सत्पात्रेषु समुपदिष्टा अर्थाः * पूर्वे पूर्वेभ्यो वच एतदूचुः * ( काठके ) इत्याम्नातरीत्या सदुपदेशपरम्परायामुपजीव्या भवन्तिः अनधिकारिषु निविष्टास्तु ते निष्प्रयोजना भवन्ति हन्त। १०. जीमूता अनन्यगतिभिश्चातकादिभिस्सततं प्रतीक्ष्यमाणा भवन्तिः त एव अर्कक्षुपादिषु वर्षन्तः * त्वयि वर्षति पर्जन्य! सर्वे पल्लविता द्रुमाः। अस्माकमर्कवृक्षाणां पूर्वपत्रेषु संशयः॥ * इत्युक्तरीत्या अपायप्रदा भवन्ति। एवं सदाचार्यैरनुगृह्यमाणास्तदर्था अनन्यगतीनां सादरं सकुतूहलं प्रतीक्षणार्हाः इतरेषां तु * गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना * इत्युक्तरीत्या प्रणाशप्रदाश्च भवन्ति। एवमेवं बहुधा निर्वाह्यैस्साम्यप्रकारैरिह मेघत्वेन विवक्षितास्सदाचार्या एवेति सुगमम्। प्राज्ञोऽपि प्रकृतोपयोगि श्लोकरत्नमिदमन्वगृह्णन्—* लक्ष्मीनाथाख्यसिन्धौ शठरिपुजलदः प्राप्य कारुण्यनीरं नाथाद्रावभ्यषिञ्चत्तदनु रघुवराम्भोजचक्षुर्झराभ्याम्। गत्वा तां यामुनाख्यां सरितमथ यतीन्द्राख्यपद्माकरेन्द्रं संपूर्य प्राणिसस्ये प्रवहति सततं देशिकेन्द्रप्रमौघैः॥ * इति। तदिदमिह सुसंगतमनुसन्धेयम्। तथाच सदर्थराशिवर्षुको महामाज्ञ आचार्य इह अम्बुदेति संबोधितोऽभूत्। (अब्धौ गाढं विगाह्य) * श्रुतिसागरः * द्राविडवेदसागरः * इति सुप्रथितवेदान्तद्वंद्वाख्यसागरे तलस्पर्शि यथातथा अवगाह्य। * अब्धिर्लङ्घित एव वानरभटैः किंत्वस्य गम्भीरताम् आपातालनिमग्नपीवरतनुर्जानाति मन्थाचलः * इत्युक्तप्रक्रियया सारस्वतसारावबोधक्षमतां प्राप्येति यावत्। (सलिलमुपादाय) जीवराशिसंजीवनसमर्थमर्थसार्थं संगृह्य। (लक्ष्मीशतन्वा तौल्यं प्राप्य) * क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् * (भोजचम्पूरामायणे) इत्युक्तरीत्या, * अपि फणिपतिभावाच्छुभ्रमन्तश्शयालोर्मरकतसुकुमारै रङ्गभर्तुर्मयूखैः। सकलजलधिपानश्यामजीमूतजैत्रं पुलकयति विमानं पावनं लोचने नः * इति श्रीरङ्गराजस्तवोक्तरीत्या च स्वान्तर्विराजमाननीलमेघनिभभगवद्दिव्यमङ्गलविग्रहकान्तिम् बहिः प्रदर्श्येत्युक्तं भवति। (अथ शंखध्वनिसमनिनदम् जृम्भयन्) * स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् * इति हि पाञ्चजन्यघोषप्रथा गीयते। तद्वत् बाह्यानां कुदृशां च हृदयविदारणविशारदमुदारं कण्ठनादमुपबृंह्येति कथितं भवति। * कार्यः कथाहवकुतूहलिभिः परेषां कर्णो स एष कवितार्किकसिंहनादः * इतीयम् यतिराजसप्ततिसूक्तिरिहानुसन्धेया। ( चक्रवत् भां भृत्वा ) असुरराक्षसनिरसनैकनिपुणहेतिराजवदासुरप्रकृतीनां खलानामवलेपलोपनऽप्यग्रेण भवितव्यमाचार्येणेत्यवबोधितं भवति। किञ्च, * यस्मिन्विन्यस्य भारं विजयिनि जगतां जङ्गमस्थावराणां लक्ष्मीनारायणाख्यं मिथुनमनुभवत्ययुदारान् विहारान् * (सुदर्शनशतकावसाने) इत्युक्तरीत्या भगवत्कृत्य-

मखिलमाचार्येणैव निर्वोढव्यमित्यपि सूचितं भवति। विदेशेष्वपि गत्वा यथा हेतिराजो विरोधिनिरसनं वितनुते तथा कर्तव्यमित्यपि। (श्रीशार्ङ्गवत् कलय जलमहावर्षम्) * शरासनविनिर्मुक्ताश्शरा आशीविषोपमाः। वैरिव्रातं विनिघ्नन्ति राघवस्य महात्मनः * इत्युक्तरीत्या शार्ङ्गधन्वनो राम भद्रस्य धनुषो विनिर्गता बाणाः * ब्रह्मदण्डप्रकाशानां विद्युत्सदृशवर्चसाम। स्मरन् राघवबाणानां विव्यथे राक्षसेश्वरः * इत्युक्तां क्रियां यथा ह्यकुर्वन् तथा आचार्यमुखविनिर्गताः प्रमाणयुक्तिपुञ्जाः परेषां भृशमरुन्तुदा भवेयुरित्युक्तं भवति ॥ ... ... ... ... ... ... ...

(अस्मद्व्रताय) * पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत। आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत् * इति, * आचार्यादिह देवतां समधिकामन्यां न मन्यामहे * इति चोक्तरीत्या आचार्यवत्त्वमेव अस्मदीयं व्रतम्; एतत्परिपूरणायेति यावत ॥ ४ ॥

## ५. पञ्चमी गाथा–मायनै मन्नु वडमदुरै मैन्दनै

- पञ्चमगाथा पद्यम् -

अत्याश्चर्यैकतानं स्थिरतरमथुरावासिनं सूर्यकन्या–
क्रीडारक्तं व्रजेशं व्रजपतिदयिताभाग्यपाकं मुकुन्दम्।
अभ्यर्च्य प्राज्यपुष्पैस्त्रिकरणशुचयश्चेद्वयं कीर्तयेम
स्याद्भस्मैवान्तरायात्मकदुरितमिति प्रोचुषीं स्तौमि गोदाम् ॥ ५ ॥

व्रतानुष्ठानार्थं संमिलितासु गोपीषु काचिद्विघ्नशङ्कामुदभावयत; * श्रेयांसि बहुविघ्नानि भवन्ति महतामपि * इत्युक्तरीत्या श्रेयस्करकार्योपक्रमे विघ्नसंभवात, श्रीरामभद्रयौवराज्याभिषेकप्रयत्नरूपशुभकार्यस्यापि विघ्न प्रतिहतत्वात चिरादस्मत्कृतप्रबलपापराशिफलतया प्रस्तुतशुभकृत्यस्यापि प्रत्यूहस्संभवितुमर्हति, विघ्नपरिहारः कथमिवेति शङ्कतेस्म। वेदान्तपरिचयशालिन्यो गोपिका अथ विघ्नशङ्कापरिहारमकुर्वत। तदनया गाथया वक्ति गोदा। अत्याश्चर्यगुणगणैकनिलयं * नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीमित्युक्तरीत्या मथुरापुर्यामवतीर्णं यमुनानदीविहारलोलं व्रजमण्डलभूषणं व्रजपतिनन्दगोपपत्नीभाग्यपरिपाकरूपं च दामोदरं भगवन्तं वयं मनोवाक्कायरूपत्रिकरणतश्च शुद्धाः परमपवित्रपुष्पैरभ्यर्च्य संकीर्तयेम यदि, श्रेयःप्रत्यूहात्मकं सकलदुरितमपि भस्मसाद्भवेदेवेति तदात्वे गोपिकाभिरुक्तं तद्भावभावनया या प्रोवाच गोदा तां स्तौमि ॥

श्रीवैकुण्ठपतिः श्रियः पतिरवाप्तसमस्तकामश्च सर्वेश्वरो भुवि कृष्णकिशोरात्मनाऽवतीर्य गोगोपानामपि सुलभस्सन् नवनीतचौर्यनगरक्षोभाद्युच्चावचकृत्यबृन्दैरत्याश्चर्यतया विरराजेत्ययमर्थोऽनुसन्धीयते [अत्याश्चर्यैकतानम्] इत्यनेन प्रथमविशेषणेन। भगवान् यदा रामचन्द्रस्सन्नवततार तदा शंखचक्रादिदिव्यायुधविरहित एव जातः; तथाऽपि रावणवधानन्तरं तमिमं दृष्टवती मन्दोदरी * तमसः परमो धाता शंखचक्रगदाधरः। श्रीवत्सवक्षा नित्यश्री रजय्यः शाश्वतो ध्रुवः * इति स्तुवन्ती शंखचक्रपाणिमेव तुष्टाव। तदाकर्णितवान् रामचन्द्रो हन्त ! शंखचक्रगदाधरत्वं नास्ति हि मयीदानीम्; इतः परमवतरणसमये अवश्यं भवानि शंखचक्रगदाधरः इति मनसि कलयामास। अथ च कृते कृष्णावतारे * जातोऽसि देवदेवेश ! शंखचक्रगदाधर ! * इति प्रशंसनार्हस्सन् अत्याश्चर्यमूर्तिराविर्बभूव। तदिदमभिधीयते [अत्याश्चर्यैकतानम्] इत्यनेन. इत्यपि वेदितव्यम्। श्रीपराङ्कुशमुनिः तिरुविरुत्ताभिधाने प्रथमप्रबन्धे * शूडुनन्मालैकळ् तूयनवेन्दि * इत्यस्यां गाथायां किमप्यद्भुतमभ्यधात; तदप्यत्रानुसन्धातुं योग्यम्। तच्चैवम्–श्रीमति

वैकुण्ठे दिव्यलोके नित्यसूरयो विमलमाल्यपाणयस्सन्तो भगवतः स्नानासनं समर्प्य धूपं समर्पयन्त आसन्। तदात्वे धूमेन मुखाच्छादनं भवति खलु भगवतः; अथ दीपसमर्पणकाले हि मुखप्रकाशो भविता। धूपदीपयोर्मध्ये प्रच्छन्नो भगवान् सहसा भुवि नवनीताशनलोलुपस्सन्नवतीर्य तदुपभुज्य नीलादेवीपाणिग्रहणाय सप्तर्षभमदध्वंसमपि विरचय्य अवतारं समाप्य गतः स्वं स्थानमुत्तममिति। एवंविधबह्वाश्चर्यकथानुसन्धानमिह प्राप्तम्।

[स्थिरतरमथुरावासिनम्] मथुरायाः स्थिरत्वं नाम चिराद्भगवदास्पदभूतत्वम्। वामनावतारे अत्रैव सिद्धाश्रमः परिकल्पित इति प्रथा। शत्रुघ्नोऽत्र चिरमाधिराज्यमवहदिति च। एवं नाम भगवत्संबन्धनैरन्तर्यमिह विवक्षितम्। * मथुरा नाम नगरी पुण्या पापहरी शुभा। यस्यां जातो जगन्नाथः इत्यादिकमिह भाव्यम्।

[सूर्यकन्याक्रीडासक्तम्] सूर्यकन्या-यमुना। तस्यां विविधक्रीडास्वनुरक्तम्। मथुरातो व्रजप्रयाणकाल एव यमुनायां काचन क्रीडा कृता हि भगवता; * यमुनांचातिगम्भीरां नानावर्तझषाकुलाम्। वसुदेवो वहन् कृष्णं जानुमात्रोदको ययौ * इत्युक्तियोग्यपरमाद्भुतचर्याकरणमेव सा। (व्रजेशम) व्रजेशत्वावस्थायामप्यत्याश्चर्यैकतानत्वमनुसन्धेयम्, * अन्तर्गृहे कृष्णमवेक्ष्य चोरं बध्वा कवाटं जननी गतैका। उलूखले दामनि बद्धमेनं तत्रापि दृष्ट्वा स्तिमिता बभूव * इत्यादिपरस्सहस्रपद्यप्रथिताश्चर्यचर्याविशेषा व्रजे वर्धमानेन कृष्णकिशोरेण प्रदर्शिता अत्र ध्येयाः।

(व्रजपतिदयिताभाग्यपाकम्) व्रजपतिः—नन्दगोपः। तस्य दयिता-यशोदा। तस्या भाग्यपरिपाकायितो हि भगवान् कृष्णः। * इमं कुमारं सुषुवे हि या, सा तपो यशोदा किमु हन्त तेपे * इति हि व्रजस्था सर्वाऽपि जनता समकण्ठं जगाद। एवंविधं मुकुन्दमत्युत्तमैः पुष्पैर्मल्लीमतल्लीवकुलचाम्पेयमालतीमागधीप्रभृतिभिरभ्यर्च्य मनोवाक्कायपरिशुद्धियुक्ता वयं यदि संकीर्तयेम, तर्हि अस्मदनुतिष्ठासितव्रतप्रत्यूहात्मकं दुरितमखिलं भस्मसाद्भवेत्; निरन्तरायमेव नो व्रतमवसास्यति इति गोपीगिरा कथितवतीं गोदां स्तौमि॥

* तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात * इति शारीरकमीमांसासूत्रार्थ इह बोधितो वेदितव्यः। अधिगतब्रह्मविद्यस्य पुंसः उपनिषत्सु पूर्वाघविनाश उत्तराघाश्लेषश्च श्रूयेते— * एवं हास्य सर्वे पाप्मानः प्रदूयन्ते * एवंविदि पापं कर्म न श्लिष्यते * इति। अन्यत्र तु * नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति पाप्मनामनुभवैकविनाश्यत्वं श्रूयते। तद्विरोधेन, पाप्मनामश्लेषविनाशश्रुतिः कथञ्चिद्विद्यास्तुत्यर्थतया नेयेति पूर्वपक्षे प्राप्ते सूत्रं तदिदं सिद्धान्तमवतारयति। कर्मणामनुभवैकविनाश्यत्वप्रतिपादकस्य शास्त्रस्य, तेषामश्लेषविनाशप्रतिपादकस्य शास्त्रस्य च भिन्नविषयत्वेन मिथो विरोधप्रसक्तिरेव नास्ति। * नाभुक्तं क्षीयते कर्मेति शास्त्रं कर्मणां फलजननसामर्थ्यं द्रढयति। * एवं हास्य सर्वे पाप्मानः प्रदूयन्ते * एवंविदि पापं कर्म न श्लिष्यते * इत्यादिकं शास्त्रं तु ब्रह्मविद्यायाः कर्मगतफलजननसामर्थ्यनिवारणशक्तिविषयकमिति भिन्नविषयत्वं वेदितव्यम्। (यथा) कश्चिदग्निप्रभावं कथयन् तस्य दहनशक्तिद्रढिमानं ब्रूते; अपरस्तु अपां प्रभावं ब्रुवन् तासां दहननिरोधशक्तिद्रढिमानमाह; कोऽत्र मिथो विरोधः? न खलु कोऽपि। सलिलसन्निधानविरहितोऽनलो दहनशक्तः; सलिलसन्निधियुक्तो वह्निस्तु दहनशक्तिविकलः— इति हि प्रतीयेत। एवमेव, ब्रह्मविद्याविरहे सति कर्माणि अनुभवैकविनाश्यानि; तत्समवधाने तु तानि विनश्यन्ति न श्लिष्यन्ति चेति सर्वमवदातम्॥ ५॥ ... ... ...

## ६. षष्ठी गाथा—पुळ्ळुम् शिलम्बिन.

षष्ठगाथापद्यम्।

पक्षिव्रातप्रणादं खगपतिनिलयादुद्गतं शंखनादं
दैत्यारिध्यानयुक्तैर्हरिरिति मुहुरुद्घोषितं कीर्तनं च।

उक्त्वा प्रत्यूषकालोदयपिशुनतया बालिशां बोधयन्ती
गोदा गोपीतदात्मा विलसतु हृदये विष्णुचित्तात्मजा मे ॥ ६ ॥

अथ दशभिः पद्यैर्गोपीनां प्रबोधनं निबध्यते । इदानीं बहिस्संमिलिता गोप्यः काश्चित । अन्तश्शयालवो गोप्यश्च काश्चित । याः प्रबुद्धा बहिस्संमिलितास्तिष्ठन्ति, ता अन्तः शयने स्थिता गोपीः प्रतिबोधयन्ति । ननु व्रजे सर्वासामपि गोपीनां भगवति कृष्णे भक्तिर्निर्विशेषा; सा कासाञ्चिदधिका कासाञ्चित न्यूना. इति तावन्न सुवचम् । एवं च काश्चित्पुरस्तादेव प्रबुद्धास्सत्यः प्रबोधयन्ति; काश्चित्प्रबोधविरहिता अन्तश्शेरते रजस्तमोविवशा इति कथमिदं निबध्यत इतिचेत् नैवम् । प्रबुद्धानां वल्लवीनामधिकः कृष्णानुरागः, प्रबोध्यमानानां शयनस्थितानां गोपीनां मितस्स इति प्रतिपत्तेर्न मनागप्यवकाशः । भगवद्गुणाः खलु राघव-बाणा इव काश्चिद्व्यामोहयन्ति, काश्चित्ससंभ्रमयन्ति । लोके सर्पदष्टानां जनानां मध्ये केचिन्मूर्च्छिता भवन्ति, केचिदार्तिभूम्ना आक्रोशपरा भवन्ति इत्यध्यक्षयामः । तद्वदेव भगवतो गुणा अनुसन्धीयमानाः केषाञ्चिज्जनानां मूर्च्छाहेतुभावं भजन्ति, अपरेषां जनानामाक्रन्दननिदानतामाप्नुवन्ति । अत एव कासा-ञ्चिद्वनितानां प्रबोधनकर्तृत्वम् । अपरासां च तत्कर्मत्वमिति नैतन्मनागपि व्याहन्यते ।

अथ, याः प्रबुद्धास्ताः स्वयं व्रतानुष्टानाय कुतो न गच्छन्ति ? निद्राणानामपि प्रबोधनात्मके प्रयासे किमर्थं प्रवृत्ताः ? इतिचेत् श्रूयताम् । * एकस्स्वादु न भुञ्जीतेति हि स्थितम् । परमभोग्यभगवदनुभवो ह्यत्र व्रतानुष्ठानव्यपदेश्यः । अस्मिन् या या अनुरक्ताः ताभिस्सर्वाभिरपि मिलित्वाऽनुभोक्तव्यमिति तावदु-त्कण्ठिताः प्रबोधने प्रवर्तन्ते । किञ्च श्रीवैकुण्ठमूर्त्यपेक्षया विभवावतारमूर्तौ गुणाधिक्यमिति अप्रकम्प्यम् । तमेव वैकुण्ठनाथमनन्तकोटिसंख्या नित्यसूरयो भुञ्जते यदि, ततोऽप्यभ्यर्हितगुणशालिनं श्रीकृष्णं भगवन्त-मनुभुञ्जाना जनाः कथमिव परिमिता भवितुमर्हन्ति; भुवि स्थितैस्सर्वैरपि जनैस्संमिलितैः खलु भोक्तव्य-मिति चासामभिसन्धिः । किञ्च, भगवद्विषयो ह्यप्रमेयो महोदधिः । अत्र हि परिमितैर्जनैरवतरितुं न शक्यम् ; अपरिमिता जना यद्यवतरन्ति ते मिथस्सहायभूता भवितुमर्हन्ति, निर्भयतयाऽवगाहनं संपद्येत इति चाभिसन्धिः । किञ्च, भगवत्सन्निधिप्राप्त्यपेक्षयाऽपि भागवतमण्डल्यामन्वय एव परमः पुरुषार्थ इति सतां सिद्धान्तः । अत एव श्रीवत्साङ्कमिश्राः श्रीवैकुण्ठस्तवेऽनुजगृहुः--* कैङ्कर्यनित्यनिरतैर्भवदेकभोगैः नित्यैरनुक्षणनवीनरसार्द्रभावैः । नित्याभिवाञ्छितपरस्परनीचभावैः मद्दैवतैः परिजनैस्तव संगसीय * इति । तथाच परमपुरुषार्थभूतपरमभागवतगोष्ठीपौष्कल्यकांक्षणमिह युक्तरूपम् । प्रधानतमस्सत्संप्रदायसारा-र्थस्तु-- * उत्पपात गदापाणिश्चतुर्भिस्सह राक्षसैरित्युक्तरीत्या श्रीराघवपादारविन्दप्रेप्सया सपरिजन-स्समुत्थितो विभीषणो द्वारपालप्रतिरोधादिनिर्बन्धगन्धरहितां श्रीराघवसन्निधानप्राप्तिं सहसा स्वयं कर्तुं प्रभवन्नपि * सर्वलोकशरण्याय राघवाय महात्मने । निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् * इति वानरवीराणां सविधे सविनयमभ्यर्थयतेस्मेति स्थितं श्रीरामायणे । विवादप्रशमानन्तरं विभीषणं तं परिजिघृक्षन् भगवान् रामचन्द्रोऽपि स्वयं साक्षादनाह्वयन् * आनयैनं हरिश्रेष्ठ ! दत्तमस्याभयं मयेति भागवतोत्तम-[ सुग्रीव ] पुरस्कारेणैव पर्यगृह्णादिति प्रपश्यामः । तदवगतं सर्वथाऽपि भागवतपुरस्कारोऽ त्यावश्यक इति । सएवात्रानुष्ठीयते गोपीभिरिति वेदितव्यम् । श्रीगोदादिव्यप्रबन्धो ह्ययं सकलशास्त्रार्थसार-सर्वस्वसमुद्बोधनतत्परः । तथाहि प्राञ्चः प्राहुः *वेदमनैत्तुक्कुम् वित्ताहुम् कोदैतमिळैयेन्दुमैन्दुम्--सकल-वेदबीजभूतो गोदादिव्यप्रबन्धः * इति ।

अथ पद्यार्थः । पक्षिणोऽप्युत्थाय प्रणादं वितेनुः ; विहगेश्वरमन्दिराद्विजृम्भमाणो महान् पाञ्चजन्य-ध्वनिरपि प्रहमरः । दैत्यारेर्भगवतो ध्याने निरता योगिनोऽपि हरिर्हरिर्हरिरिति उच्चैस्संकीर्तयन्त उत्ति-ष्ठन्ति--इत्येवंविधानि प्रत्यूषकालोदयलक्षणानि कथयित्वा काञ्चन गोपबालिकां प्राबोधयन् पुरा गोप्यः ; तत्तादात्म्यभावनया तथा गदितवती विष्णुचित्तसूर्यात्मजा गोदादेवी मम मनसि विलसतु ॥

पक्षिणः प्रबुद्धा अभूवन्निति कथनमिह ज्ञानानुष्ठानसंपन्नानां सतां श्रीवैष्णवानां प्रबोधकथनं मन्तव्यम् । * उभाभ्यामेव पक्षाभ्यामाकाशे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते पुरुषोत्तमः * इति वदन्ति महान्तः । पक्षिणामुच्चैर्गतिसाधनं यथा पक्षद्वयं भवति तथा भक्तानामुत्तुङ्गस्थानाप्तिसाधनं ज्ञानमनुष्ठानं चेति द्वितयमेव हि भवति । ज्ञानहीनोऽनुष्ठानशीलः अन्धसधर्मा । अनुष्ठानहीनो ज्ञानी पङ्गुसमानः । उभयपरिकर्मितस्यैव निराबाधगमनं संभवितुमर्हति । तदेवं ज्ञानानुष्ठानसंपन्ना महान्तो भजनायोद्युक्ताः कोलाहलसमृद्धास्सन्तीति सूचितं भवति । अत्र प्रथमतः पक्षिवृत्तान्तकथनं वेदान्तगतमितिहासविशेषं स्मारयितुमिति मन्तव्यम् । तथाहि--शारीरकमीमांसायां * शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि * ( १--३--३३ ) इतिसूत्रश्रीभाष्ये " जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव ; तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोः हंसरूपेण निशायामस्य अविदूरे गच्छतोरन्यतर इतरमुवाच " इत्युपक्रम्य औपनिषद इतिहास विशेष उपाख्यातः । ब्रह्मज्ञानविधुरस्य जानश्रुतेः रैक्वसविधे ब्रह्मज्ञानसंपादनं प्रति हंसरूपपक्षिविशेषप्रचोदनमेव निदानमभूदिति तदितिहाससर्वस्वम् । तत्स्मारणमिह क्रियमाणं ब्रह्मज्ञानसंपादनसमुत्कण्ठातिशयं प्रकाशयतीति प्रतिपत्तव्यम् ।

[ खगपतिनिलयादुद्गतं शङ्खनादम् ] खगपतिः—गरुत्मान् । तदालयात् इति वा ; खगो गरुत्मान्, तस्य पतिः गरुडध्वजो भगवान् ; तदालयादिति वा अर्थस्सुवचः । विभवमूर्तेः कृष्णस्य शुभगुणानेव सततमनुभुञ्जानैर्महात्मभिरापूरिते व्रजे अर्चामूर्तिमन्दिरमपि किमुवर्तते ? इति केषांश्चिदाशङ्का जायेत । अत्रावधेयम् । श्रीरामावतारकालेऽप्ययोध्यायामासीद्रामस्याप्युपास्या अर्चामूर्तिरिति * सह पत्न्या विशालाक्ष्या नारायणमुपागमदिति श्रीरामायणसूक्त्या साधु समवगम्यते । तथैव कृष्णावतारेऽपि तत्सद्भावस्संप्रतिपन्नः । अर्चामूर्तेरनिदम्प्रथमत्वादिति ।

ध्वन्यर्थोऽत्र—खगपतिनिलयो वेदः । * सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुरित्यादि श्रुतितः * वेदात्मा विहगेश्वरः * तार्क्ष्यः श्रुतीनां निधिरित्याद्याचार्य श्रीसूक्तितश्च । तत उद्गतः शङ्खः—प्रणवः । प्रणवस्य शङ्खाकारतायास्सुप्रसिद्धत्वात् । तस्य नादो नाम ध्वन्यर्थभूतं भागवतशेषत्वम् । प्रणवे हि भगवच्छेषत्वम् कण्ठरवेण प्रतिपाद्यते; भागवतशेषत्वं ध्वनिमर्यादयेति * मुमुक्षुप्पडिप्रभृतिपूर्वाचार्यग्रन्थरत्नावसेयम् । तथाच भागवतशेषत्वं विदित्वा भागवतगोष्ठीसहानुभूतिरेव समुचितेति प्रतिपद्य सत्वरमुत्थाय समायाहीति कथितं भवति ।

( दैत्यारिध्यानयुक्तैर्हरिरिति मुहुरुद्घोषितं कीर्तनं च ) पूतनाया विषदिग्धं स्तनं पीत्वा कृत्रिमशकटं चरणाघातेन भञ्जयित्वा पयोनिधौ भोगिभोगशयनीयमधिशयानं भगवन्तं ध्यायन्तो महायोगिनः शनैरुत्थाय हरिर्हरिरिति कीर्तयन्तीति मूले गाथायामनुगृहीतम् । तत्संग्रहरूपमिदं * दैत्यारिध्यानयुक्तैरिति । * * कदाचिदन्तर्हितपूतनात्मा कंसप्रयुक्ता किल कापि माया । निद्रापराधीनजने निशीथे व्रजं यशोदाकुक्षि तथा विवेश ॥ स्तन्येन कृष्णः सह पूतनायाः प्राणान्पपौ लुप्तपुनर्भवायाः । यदद्भुतं भावयतां जनानां स्तनन्धयत्वं न पुनर्बभूव * इति यादवाभ्युदय श्लोकरत्नाभ्यां पूतनावधवृत्तान्तो वेदितव्यः । काचन माया हि स्वस्मिन् भोग्यबुद्धिं जनयन्ती सती वधाय समुपागता । तथा * स्वविषयायाश्च भोग्यबुद्धेर्जननीं दैवीं गुणमयीं मायाम् * इति शरणागतिगद्योक्तरीत्या वस्तुतो विषमयी छलवृत्त्या भोग्यताबुद्धिजननी च माया इह पूतनास्थाने प्रतिपत्तव्या । तस्या मारणं नाम--दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते * इति भगवद्गीतोक्तरीत्या मायाबन्धवैवश्यवैधुर्यमेव । एवंच मायाबन्धविदूरगा महान्तः कथिता भवन्ति । भगवता कृष्णेन कृतः शकटभङ्गस्सुप्रसिद्धः । शकटो नाम स्थलात् स्थलान्तरं प्रापयन् साधनविशेषः । अस्माल्लोकाल्लोकान्तर गमन साधनभूतः पन्था द्विविधो वर्तते साधुर-

साधुश्चेति । तथाहि गीयते— * शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिम् अन्ययाऽऽवर्तते पुनः * इति । कृत्रिमशकटं कृष्णः पादाघातेन यथा जघान, तथा पुनरावृत्तिकारणभूतनरकस्वर्गमार्गविध्वंसनेन अपुनरावृत्तिलक्षणमोक्षं प्रापयितुमर्हति येषां पादारविन्दसंबन्धः तादृशा महान्तोऽत्र कथिता भवन्ति । अथ * पयोनिधौ भोगिभोगशयनमधिशयान इत्यनेन, भगवद्गुणामृतसागरे अस्तमितान्यभावतया तदनुभवैकसंगेन महान्तमानन्दमनुभवन्तः सकलविधकैङ्कर्यवृत्तिनिष्ठया आदिशेषसाधर्म्यभाजो महान्तः स्फोरिता भवन्ति । तथाच मायाविदूरगाः पुनरावृत्तिलक्षणदुर्गतिध्वंसदायकपादारविन्दप्रभावभासुरा भगवद्गुणामृतसागरे सानन्दं निविष्टा मुक्तिबीजभूता आचार्या इह शब्दसंदर्भतः कीर्तिता भवन्ति ।

* साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम् । मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना * आचार्यस्स हरिस्साक्षात् * इत्याद्यनेकप्रमाणानुरोधेन दैत्यारिशब्दत एव आचार्यकथनमिह सूपपन्नम् । तादृशा महानुभावाः प्रत्यूषे उत्थानकाले हरिर्हरिरिति कथयन्तस्सन्त सममुत्तिष्ठन्तीत्युक्तं भवति । यद्यपि तैः स्वाचार्यनामकीर्तनमेव कर्तव्यं भवति, तथाऽपि तमाचार्यं हरिरेव हि परमकारुणिको घटयामासेत्युपकारदृष्ट्या हरिनाम संकीर्तयन्तीति नैतदनुपपन्नम् ।

( बालिशां बोधयन्तीं ) * पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् * इति श्रुतिरिह स्मर्तव्या । ग्रहणधारणपोषणपटुर्बालः ॥ ६ ॥ ... ... ... ... ... ...

## ७. सप्तमी गाथा–कीशु कीशेन्नेङ्गुमानैच्चात्तङ्कलन्दु

* सप्तमगाथा पद्यम् ।

भारद्वाजाभिधानां कलकलमधिकं पक्षिणां, गव्यमन्थे
सक्तानां वल्लवीनां करवलयरवेणान्वितं मन्थघोषम् ।
श्रीमन्नारायणस्य प्रचुरगुणगणोत्कीर्तनं चाभिधाय
श्रेष्ठामुद्बोधयन्ती कलयतु कुशलं वल्लवीतुल्यगोदा ॥७॥

द्राविडवाण्याम् " आनैच्चात्तन् " इति कथ्यमानानां पक्षिणां कोलाहलमधिकम् दधिमथनसक्तानां मथनकालिककरभूषणचलनजध्वनिम् मन्थघोषं श्रीमन्नारायणगुणगानं च प्राभातिकचिन्हतया कथयित्वा वल्लवीगोष्ठ्यां नायकमणित्वेन विराजमानाम् अतएव श्रेष्ठां कांचन वल्लवीं गोपीगिरा समुद्बोधितवती गोदा कुशलं कलयतु ॥

"श्रेष्ठामुद्बोधयन्ती" इत्यनेन श्रेयान् व्यक्तिविशेषो गाथायामस्यां प्रतिबोध्यत इति गम्यते । "अस्मदीयगोष्ठ्या नायकमणिभूते गोपिके !" इतितावत्संबोधनं मूलगाथायां स्थितम् । * अमुना तपनातिशायिभूम्ना यतिराजेन निबद्धनायकश्रीः । महती गुरुपंक्तिहारयष्टिर्विबुधानां हृदयंगमा विभाति * इति यतिराजसप्तत्यनुगृहीतरीत्या गुरुपरम्परां सुष्ठु संशोभयितुमर्हः श्रेयान् व्यक्तिविशेष इह संबोधितो भवतीति वेदितव्यम् ।

(भारद्वाजाभिधानां पक्षिणाम् अधिकं कलकलमभिधाय) द्राविडभाषायाम "आनैच्चात्तन्" इति व्यवह्रियमाणा पक्षिजाति स्संस्कृतवाचि भारद्वाजाभिधयाऽभिधीयते । तज्जातीयाः खलु पक्षिणो नेत्रसौन्दर्यभूम्नि सुप्रसिद्धाः; * चक्षुष्मन्ता तु शास्त्रेणेत्युक्तरीत्या शास्त्रतो द्रष्टारो महान्तोऽत्र सुभगचक्षुषो विवक्षिताः । अथ च, * भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास * इत्युपक्रम्य काठकश्रुत्याम्नातत्वाद्दत-

रोपाख्यानरीत्या ( भरद्वाजमहर्षिसधर्माणः ) सर्वविद्यासारार्थवेदिनो विद्वज्जना ग्रहीतव्याः।'' भारद्वाज-पक्षिणः परस्परं सम्मिलितास्सन्तः कीरकीति श्राव्यस्वरविशेषतो यत्संभाषन्ते तस्य संभाषणस्य ध्वनिः किं त्वया न श्रूयते?'' इति मूलगाथायां स्थितम्। अत्र बहवो विषयाः स्वादीयांसोऽवधानार्हा विभान्ति। तैत्तिरीयसंहितायां द्वितीयकाण्डपञ्चमप्रपाठके * यत्क्रौञ्चमन्वाह आसुरं तत्, यन्मन्द्रं मानुषं तत्, यदन्तरा तत्सदेवम्, अन्तराऽनूच्यं सदेवत्वाय * इति शिक्षितरीत्या संश्रवे मधुरतरेण मध्यमस्वरेण भगवत्कीर्तनादिषु निरतानां भक्तानां मुनिवाहनदिव्यसूरिजयदेवमहाकविसधर्मणां सुभगः कण्ठनादोऽस्माकं श्राव्य इति। यथोक्तम्-* माश्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातमिति। ''परस्परं संमिलितास्सन्तो भाषन्ते'' इति कथनेन अस्मदीयाः पूर्वाचार्यास्सर्वेऽपि * भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते * इति श्रीभाष्यानुगृहीतरीत्या परस्पर विरोधकथावकाशमन्तरेण समकण्ठमेव शास्त्रार्थतत्वप्रकथनपरा इति, तथाविधास्सूक्तय एव श्राव्या इति च सूचितं भवति। भगवता बादरायणेन गुरुणा * अथातो ब्रह्मजिज्ञासेत्युपक्रान्तं स्वकीयं मीमांसाशास्त्रम्। तच्छिष्येण जैमिनिना तु * अथातो धर्म जिज्ञासेत्युपाक्रम्यत स्वकीयंमीमांसाशास्त्रम्। ''सेश्वरवादी गुरुः, निरीश्वरवादी शिष्यः'' इति काचिदपप्रथा जगति पप्रथे। यद्यप्यान्यपर्यवादादिभिस्तत्परिहारः क्रियते शास्त्रविद्भिः, तथाऽपि प्रक्षालनाद्धीतिन्यायेन विरोधप्रसङ्गस्याप्यवकाशवैधुर्येण भाषणमेव हि वरम्। तादृशे परमपावन भाषणे प्रावर्येण प्रावीण्येन चैककण्ठ्यमाविष्कृतवन्तोऽस्मदीयाचार्यपरम्पराकलामभूता स्सर्वेऽपि गुरुचरणा इति स्फोर्यते। तादृशमेव खलु भाषणं श्रवणेन्द्रियसाफल्याय श्राव्यम्।

''भाषणं किं त्वया न श्रूयते?'' इत्यभिधातव्ये ''भाषणस्य ध्वनिः किं त्वया न श्रूयते'' इति (मूल गाथायां) कथनेन—ध्वन्यर्थप्रधानतयैव भाषन्ते महान्तः; वाचनिकादर्थादपि व्यंग्यार्थ एव साभिनिवेशं ग्राह्य इति ग्राहितं भवति। अत एव ह्यस्मदाचार्याः प्रणवे शाब्दार्थतया प्रतिप भगवच्छेषतारूपमर्थमधरीकृत्य व्यंग्यार्थ विशेषभूते भागवतशेषत्वे स्पृहातिशयशालिनो विलसन्ति। अन्वग्राहि हि श्रीपरकालमुनीन्द्रैः (* मन्नञ्जाम्पेरिलुम् निन् तिरुवेट्टेलुत्तुम् कत्तु नान्—उनदु मुन्नडियार्क्कडिमै *) ''श्रीमत्कृष्णपुराधिनाथ! भवदीयाष्टाक्षराभ्यासतः त्वद्भक्त प्रवणत्वमेव भगवन्नग्राहि नान्यन्मया'' इति। अथ ( गव्यमन्थे सक्तानां वल्लवीनां करवलयरवेणान्वितं मन्थघोषम् ) इति। इममपि घोषं किं त्वं न शृणोषीति तावदुच्यतेऽत्र। मथनेन सारभूतं नवनीतं लभ्यत इति साक्षात्कुर्मः। एवं * निर्मथ्य श्रुतिसागरादित्युक्तरीत्या वेदाब्धिमथनेन अतिसुभगसारार्थग्राहिणो महान्त इह विवक्षिताः। मुमुक्षुप्पडिनाम्नि रहस्यत्रयार्थविवृति दिव्यग्रन्थे * मून्रुतालिलिले तिरिये निरैन्दुकडैन्दु वेण्णेय् तिरट्टिनाप्पोले मून्रुवेदङ्गलिलुम् मून्रक्षरङ्गैयुमेडुत्तदु * इत्युक्तरीत्या वेदत्रयसारत्वेन निर्मथनोद्धृतानां स्वरूपानुरूपसकलार्थप्रतिपादनक्षमाणां त्रयाणामप्यक्षराणाम् (-प्रणवस्य) अर्थविशेषा यदि न श्रुतास्तर्हि तच्छ्रवणमत्यावश्यकम्, क्षिप्रमुत्थाय समागम्यतामित्याह्वानमिहावधेयम्। ( करवलयरवेणान्वितम् ) इति कथनेन चैतत् स्फोर्यते-; हस्तयोर्भूषणमञ्जलिरेवेति भक्तिधनानां विदुषां सिद्धान्तः तथा ह्याहुः * कृष्णांघ्रितुलसी मौलिः पट्टं कृष्णाभिवन्दनम्। कुण्डले कृष्णचरितश्रवणं कङ्कणोऽञ्जलिरिति। तादृशभूषाविशेषस्य घलघलेतिशब्दितत्वं मूलगाथायामभिधीयते। सर्वजनोदितप्रशंसावाक्यपात्रत्वमेव तत्। * नित्याञ्जलिपुटा हृष्टा नमइत्येव वादिनः * इति श्वेतद्वीप वासिनो महापुरुषा यथा प्रशस्यन्ते तथा विनयसंपत्तिसनाथं वेदाब्धिमथनसामर्थ्यपर्यवसायिविद्यावैदुष्यातिशयमधिकृत्य जगति प्रशंसागिरः प्रवर्धन्त इत्युक्तं भवति। तथाविधप्रशंसापात्रभूतपरमाचार्यसकाशात् सारार्थश्रवणं किं न कर्तव्यम्? कर्तव्यमेव ह्यवश्यम्; तदायाहि तूर्णमिति समुद्बोध्यते।

मथननिरतानां सुगन्धिकुन्तलवत्त्वविशेषणं मूलगाथायां स्थितम्। * तच्छिरो यत्प्रणमति * नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिमित्याद्युक्तरीत्या प्रणतिशालित्वमेव हि शिरसस्सौरभम्। तथाच अवलेप दुर्गन्ध विरहिता एवात्र विवक्षिता इति कथितं शिरोऽर्थो भजति स्थेमानम्।

(श्रीमन्नारायणस्य प्रचुरगुणगणोत्कीर्तनं चाभिधाय) "नारायणं केशवमधिकृत्यास्माभिर्गीयमानं गीतमाकर्ण्यापि हन्त त्वं नोत्तिष्ठसि, श्रवणसुखानुभवेनैव किं शेषे?" इति मूलगाथायां स्थितम्। एतेन * पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः * ऋषिर्हि दीर्घश्रुत्तमः * इत्याद्युक्तप्रक्रियया श्रीमन्नारायणस्य तत्पर्यायभूतस्याचार्यस्य वा गुणगणश्रवणमेव श्रवणेन्द्रियपरमानन्दकन्दमिति सूचितं भवति ॥ ७॥

## ८. अष्टमी गाथा—कीळवानम्।

अष्टम गाथापद्यम्।

प्राच्यां सूर्यप्रकाशोदयमथ महिषीनिर्गमं घासजग्ध्यै
स्नानार्थं प्रस्थितानां पथि बहुसुदतीनां निरोधं च वक्त्री।
केशिघ्नं मल्लजैत्रं निरुपधिकरुणं सेवितुं देवदेवं
द्रागायाहीति कौतूहलभरभरितां बोधयन्ती गतिः श्रीः ॥८॥

प्राच्यां दिशि सूर्यप्रकाशतः शौक्ल्यदर्शनात्प्रभातसमय उदित इत्यवगम्यते, तुहिनशिशिरघासजग्धि-निमित्तं महिष्यो विनिर्गताः; व्रतस्नानार्थं प्रस्थितानां भूयसीनां वल्लवीनां गच्छन्तीनां गमनं प्रतिषिध्य, त्वामाकारयितुमागतास्स्मो वयम्। केशिहन्तारं चाणूरमुष्टिकादिमल्लवधविशारदं च देवाधिदेवं यदि वयं गत्वा सेवेमहि तर्हि स भगवान् हाहेति स्वनिर्वेदं प्रकाश्य कुशलप्रश्नादि कुर्यात्, तद्वयं गच्छेम, आयातु-मुत्तिष्ठ हे कुतूहलवति गोपिके! इति, आह्वानं कृतवती [श्रीः] गोदा अस्माकं गतिरिति गाथार्थः ॥

परमपावने धनुर्मासि सूर्यप्रकाशोदयपर्यन्तमपि काचन भक्ता प्रबोधयितव्या सती शय्यामधिशिश्य इति नैतत्संभावनार्हमिति केचिन्मन्येरन्। तमोगुणप्राचुर्यनिबन्धननिद्रापारवश्यं नैवात्राभिधीयत इति प्रति-पादितचरं तः प्रतिपत्तव्यम्। अन्तश्शयाना गोपिका हि स्वानुभूयमानभगवद्गुणविवशैव सती तल्पं विहा-योत्थातुं न प्रभवतीति पुनरुक्तमेतत। प्राच्यां सूर्यप्रकाशोदयकथनमिदं किमभिप्रायकमिति अनु-पदमेव विशदीकरिष्यते। (महिषीनिर्गमं घासजग्ध्यै) महिषीणां गवां च घासग्रासार्थं बन्धान्मो-क्षणेन निर्गमनं द्विर्भवति। गृहनिष्कुट एव ऐदम्पर्येण संवर्धितानां तृणानामदनार्थं निर्गमनं पुरस्तात्। वनेषु यदृच्छया संभूतानां तृणानां खादनार्थं निर्गमनं परस्तात्। महिषीणां प्राथमिको निर्गमोऽत्राभिधीयत इति मूलस्थशब्दसंनिवेशसुगमम्। स खलु प्रत्यूषकालिकः। भवतीमेकाकिनीं विना अन्यास्सर्वा अपि सुभ्रुवो व्रतानुष्ठाननिलयप्राप्तये प्रयाता इति बहिरवस्थिताभिर्गोपीभिरभिहितं श्रुतवती शयनस्था वनिता 'कथमहो मां विहाय ताः प्रययुः? कुतो मय्येतावती तासामभूदलक्ष्यताधीः?' इति पृष्टवती। अथ प्रत्युक्तं बहिस्स्थिताभिः—यद्यपि तास्सुदूरं गमनाय सरभसं प्रस्थिताः, तथाऽपि भवती-समाधानामेवास्माकं गमनं समुचितमिति औचित्यं प्रतिपाद्य प्रतिषिद्धं तासां गमनमस्माभिः; अथ ताश्च स्थिता एव विरतगतय इति। सर्वाभिरस्माभिस्संमिलिताभिः किमथ कर्तव्यमिति शयनस्थिताया अनु-योगस्समजनि। तत्र प्रतिवचनम्—केशिघ्नं मल्लजैत्रं निरुपधिकरुणं देवदेवं सेवितुमिति। कंसः स्वजिघां-सया वसुदेवसूनुः कृष्णो नन्दनन्दनस्सन् व्रजमधिवसति गुप्त इति विदित्वा कृष्णस्य तस्य हननार्थमासुर-वर्गाननेकान् प्रजिघाय व्रजंप्रति। प्रेषितास्ते सर्वेऽपि क्षणमात्रे कृष्णकिशोरेण विनिहता इति प्रसिद्धम्। तेष्वन्यतमः केशिनामा दैत्यः। अयं बृहत्तरं वाजिवपुः परिगृह्य कृष्णजिघांसया व्रजं गतो भगवता तेन व्यापादितोऽभूदिति * केशिघ्नमित्यत्र वेदितव्यो वृत्तान्तः। अथ धनुर्यागप्रेक्षणार्थच्छलेन अक्रूरद्वारा कंसेन मथुरां प्रति व्रजादानीतौ बलरामरामानुजौ हन्तुमुद्युञ्जानावुभौ मल्लौ चाणूरमुष्टिकनामानौ कंसभवन-

गोपुरद्वारावस्थितौ। तावपि केशवेन क्षणमात्रे विध्वस्ताविति * मल्लजैत्रमित्यत्र विज्ञेया कथा। पाण्डवदूतस्सन् यदा दुर्योधनसभामगात्कृष्णः, तदा तत्र क्षितितलविवरकुहरे स्थापितानां कृत्रिमासनादधस्स्थितानामायुधपाणीनां मल्लानां वधो बभूवेति साऽपि कथाऽत्रानुसन्धेया।

[ निरुपधिकरुणं देवदेवं सेवितुमायाहि ] मूलगाथायां तु 'देवदेवसकाशं यदि वयं गत्वा तं सेवेमहि तर्हि स भगवान् हाहाहाहेति करुणां प्रदर्शयेत' इति वचनविन्यासो वर्तते। * पद्भ्यामभिगमाच्चैव स्नेहसंदर्शनेन चेत्याद्युक्तप्रकारेण गत्वा यदि तं सेवेमहि अथ स भगवानस्मदीयं क्लेशमनुसंदधानो भृशमसहमानो दूयमानमनाश्च सन् परदुःखदुःखित्वरूपस्वकरुणाभूम्ना हाहाकारं कुर्वन् आः ! बालिशा यूयं किमित्येवमकाले किसलयसुकुमार चरणान् क्लेशयन्त्यस्समागताः ! हा मदर्थे महान् खलु क्लेशो युष्माभिरन्वभावि, हा प्रसीदन्तु भवत्यो मे ह्रीरेषा हि ममातुला-इत्यादि कथयिष्यति; तथाविधैरौपचारिकैर्मधुमधुरैर्द्राक्षाधिक्षेपदक्षैस्तदीयवाग्भरैः प्रकाशं नीयमानं कारुण्य गुणमत्यद्भुतमनुभवेम- इति हृदयमिहावसेयम्। * निरुपधिकरुणमित्यस्मिन् विशेषणे एतावानर्थस्सहृदयैरनुसंधेयः।

" हे कुतूहलशालिनि गोपिके !" इति संबोधिता प्रकृतगाथया प्रतिबोध्यमाना गोपी। कुतूहलवत्त्वं च द्वेधा संभवति—भगवद्विषयकस्वकर्तृककुतूहलवत्त्वमेकम्, स्वविषयकभगवत्कर्तृककुतूहलवत्त्वमपरम्। * प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इति गीतोक्तरीत्या उभय्यपि प्रीतिस्साधीयसी ननु। भक्तजनेषु भगवतः प्रीतिरधिका वा ? भगवति भक्तजनानां प्रीतिरधिका वेति विकल्पयितव्यं खलु भवति। तथाच निरुक्तोभयविधकुतूहलवत्त्वमपि गोपिकायामस्यां सुवचमिति विज्ञयम।

आचार्यपादसेवार्थमायाहीति प्रतिबोधनमस्या अपि गाथायाः परमार्थः। केशिघ्नमित्यादीनि सर्वाण्यपि विशेषणानि आचार्यवर्ये सुभगान्वयानीत्युपपाद्यते। [ केशिघ्नम् ] तुरगरूपेणाभिभवितुमागतस्योद्धतस्य दैत्यस्य हनने पटुः कृष्णः। * इन्द्रियाणि हयानाहुरित्युपनिषदाम्नातरीत्या बाधकाग्रसराणां विषयवीथीषु सरभसधावनव्यग्राणामिन्द्रियरूपवाजिनां विनेता गुरुवरः। * श्रीमान्पराङ्कुशमुनिर्जीयाद्यज्ज्ञानमुद्रया। नेन्द्रियाश्वयुजो नृणां नित्यं विषयवीथय इत्युक्तरीत्या इन्द्रियदौष्ट्यनिवर्तननिपुणः खलु जितेन्द्रियाग्रणीराचार्यः। [ मल्लजैत्रम् ] मल्लयोः प्रबलयोर्जेता कृष्णः। मल्लाधिकबलशालिनोर्महाघातुकयोः कामक्रोधयोरभिभावुक आचार्यः। गीतायां चतुर्थाध्याये * द्वन्द्वातीतो विमत्सर इति, सप्तमाध्याये * द्वन्द्वमोहेन भारतेति, पञ्चदशाध्याये * द्वन्द्वैर्विमुक्तास्सुखदुःखसंज्ञैरिति चोक्तरीत्या द्वन्द्वपदाभिलप्ययोः सुखदुःखयोरहङ्कारममकारयोः पुण्यपापयोरपि विध्वंसको गुरुवर इति वेदितव्यम्। [ निरुपधिकरुणम् ] बन्धमोक्षोभयसाधारणशास्त्रप्रवर्तकभगवदपेक्षयाऽपि मोक्षैकसाधनशास्त्रोपदेष्टा, शिष्यप्रार्थनामप्यनपेक्ष्य स्वयंप्रयोजनतया सप्रेमभरमुपदिशंश्च गुरुवर एव हि निरुपधिकरुणः। अनुवृत्तिप्रसन्नाचार्यो नात्र विवक्षितः अपितु कृपामात्रप्रसन्नाचार्य एवेति कथितं भवति। (देवदेवम्) देवस्य भगवतोऽपि देवः खल्वाचार्यः। यदाह भगवान् स्वयमेव * ज्ञानी त्वात्मैव मे मतमिति। आचार्यानेव हि ज्ञानिपदेन व्यपदिशति गीताचार्यः। तान् स्वस्य आत्मपदे निदधानो भगवान् स्वयं शरीरपदे खलु तिष्ठासति। "यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं तत्तस्य शरीरम्" इति खलु शरीरलक्षणमामनन्ति। ज्ञानिनामाचार्याणां नियाम्यः शेषभूतश्च भवन् भगवान् तेषां देवदेवपदं देवाधिदेवपदं वा सामोदमेव हि बहुमन्यते। * आचार्यादिह देवतां समधिकामन्यां न मन्यामहे इतीयमागमान्ताचार्यसूक्तिरप्यत्र ध्येया।

प्राच्यां सूर्योदयोऽभूदिति यत्कथितमिह, तदिदम् * आशंसायां भूतवच्चेति दिशा निर्वाह्यम्। निरुक्तगुणगणाभिराम गुरुवरचरणनलिनोपसेवने कृते ज्ञानसूर्यप्रकाशोऽस्माकमचिरभावीत्युक्तं भवति। * प्राची

सन्ध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा। वक्त्रीवेदान् भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः * इत्येषा हयग्रीवस्तोत्रसूक्तिरिहानुसंधेया। श्लोकेऽस्मिन् प्रथमपादः प्राधान्येनावधेयः। आचार्याणां दिव्यमङ्गलमूर्तिरेव हि नः प्राची संध्या। सा शुद्धसत्त्वमयी नित्यावदाता सततसंसेव्येत्यपि सूचितं भवति।

* पासजग्ध्यै महिष्यो निर्गता इति कथितस्य चायमभिप्रायः;—तमोगुणमयव्यक्तिविशेषा मुमुक्षुत्वगन्धविरहिता महिषत्वेन महिषीत्वेन चाभिधीयन्ते। * नीलतया स्थूलतया दूरतया दानलोलुपैर्मधुपैः। धावितमिभराजधिया हन्तासीदन्ततो महिषः * इत्युक्तरीत्या उत्तमपुरुषा अमी इति भ्रमजनकास्सन्तस्ते मुमुक्षुभिर्महात्मभिस्सह संमिलिता आसन्। "कूळालपट्टुनिन्ऱॊहैॆ एङ्गळ् कुलविनिलू पुहुदलॊट्टोम्" ( छाया—बुभुक्षुत्र वयमस्मदीय गोष्ठ्यां प्रवेशयेम) इति मङ्गलाशासनदिव्यप्रबन्धोक्तरीत्या ते परमकारुणिकैरप्याचार्यवर्यैर्विनेतुमशक्यास्साधुगोष्ठीबहिष्कृतास्सन्तो बुभुक्षापिपासाप्रशमनकृते क्षुद्रविषयघस्मरा निर्गता इति निगद्यते। एतेन, तामसान् जनानुत्सार्य सात्त्विकाननुग्रहीतुं प्रतीक्षमाण आचार्यः अस्माभिस्सत्वरमुपसर्पणीय इत्युक्तं भवति।

अथवा, तमोगुणा एवात्र महिषीत्वेनाभिधीयन्ते। स तावत् क्षोदीयस्सु विषयेषु व्यापृतोऽभूत्; अधुना शुद्धसत्त्वोन्मेषकालस्य समुपस्थितत्वात् अस्माभिः शुद्धसत्त्वाञ्जनसमुत्सुकैर्भवितव्यमिति कथितं भवति॥ स्नानार्थं प्रस्थितानां व्रजतां जनानां पथि निरोधाभिधानस्यायमाशयः; आचार्यसन्निधाववगाहनार्थं सरभसं ये गताः तान्प्रति "समुचितपुरुषकारपुरस्कारमन्तराऽस्माकं स्वैरं गमनं न कार्यकारि भविष्णु" इति तत्त्वार्थः कथितः; तदाकर्णनेन ते स्तम्भितगतयोऽभूवन्निति। अनयोक्त्या, प्रबोध्यमानव्यक्तिविशेषस्य समुत्कर्षस्सूचितो भवति। यस्य महतः पुरस्कारमन्तरेण न प्रसीदेदाचार्यस्स एव हि महानत्र संप्रार्थ्यते। तस्य च कुतूहलाढ्यत्वकथनाच्च समुत्कर्षातिशयः सुष्ठु सिध्यति। आचार्यसेवायां कुतूहलाढ्यत्वम् अन्येषामप्याचार्यसकाशप्रापणे कुतूहलाढ्यत्वं च विवक्षितमिह॥ ८॥ ... ... ...

## ९. नवमी गाथा—तूमणिमाडत्तु।

### नवमगाथा पद्यम्।

काङ्क्षन्ती बन्धुभावं व्रजयुवतिगणे दिव्यतल्पे शयानां
काञ्चित्संबोध्य तस्याः प्रतिवचनमनासाद्य तन्मातरं च।
सोपालम्भं प्रबोध्य श्रितजनसुलभे माधवे दिव्यपुंसि
स्वीयं गाढानुरागं स्फुटमभिदधती पातु मां दिव्यगोदा॥

अत्यन्तदीप्तियुक्तमणिगणप्रचुरे रम्ये हर्म्ये समन्ततश्च दीपज्वालाभिरामे दिव्यागरुसौगन्ध्यसंभृते दिव्यशयनीये शयाने हे मातुलपुत्रि! दिव्यकवाटिकामुद्घाटयेथाः। ( इत्युक्त्वा प्रतिवचनालाभेन अथ तस्या मातरमुद्दिश्याह ) भगवति मातुलानि! तां ते दुहितरं प्रतिबोधयेथाः; किं नु ते तनया वाग्व्यवहारयोग्यताविकला? किमाहो बाधिर्यभरिता? उताहो तन्द्रासमृद्धा? किं हेममयदिव्यशय्यायां मन्त्रबद्धाऽभूत्? महामायो माधवो वैकुण्ठ इत्यादीनि भगवद्दिव्यनामानि बहूनि संकीर्त्य समुद्बोधयैनाम्। इति द्राविडगाथार्थः। एतदानुगुण्येन अनुवादपद्यार्थोऽपि सुबोधः॥

हे मातुलपुत्रि ! इति संबोधनेन गोदादेव्या व्रजस्थिताभिर्बल्लवीभिस्सह देहबन्धुता काचन कांक्षिता भवतीत्येवमाचार्यचरणा उपवर्णयन्ति । ननु कथमिदं संगच्छते ? गोपीभावनयैव हि गोदा प्रबन्धं निरमिमीत । तदात्वे गोपीभिर्यदुक्तम्, तदनुवादमात्रमेव हि गोदादेव्या क्रियते । हे मातुलपुत्रीति यदत्र दृश्यते संबोधनम्, तत् तदात्वे गोपीभिरेव खलु कृतम् । वस्तुतस्तासां बन्धुभावो ह्यव्याहतः । स्थितस्य हि कथनं स्थितम् । गोदादेवी व्रजे बल्लवीभिस्सह बान्धवं कांक्षतीति कथनं कथमिदमुपपद्यते ? इति शङ्का समुत्तिष्ठतीह । परिहारस्त्वेवम् । गोपीभावनयैव केवलं नानुभवति गोदादेवी । तथा सति हि कृष्णचरितं व्रजे यद्यावत्समपद्यत तत्तावदेवात्र कथितं भवेत् । व्रजाद्विनिर्गमानन्तरं मथुरायां यद्यदभूत् कुवलयापीड-भञ्जन-मल्लघात कंसवधादिकं, तत्तदपि खलु कथयित्वा कृष्णानुभवः क्रियतेऽत्र प्रबन्धे । गोपिकानां गिरा न खल्वेतत्संकीर्तनं संभवि । ततश्च गोदाया गोपिकाभूमिकाधारणेन सह स्वात्मना चानुभवोऽपि बलवान् वर्तत इति नूनमवर्जनीयाभ्युपगमम् । एवञ्च, हे मातुलपुत्रीत्यनया कृतं संबोधनं व्रजे स्वस्य बन्धुभाव-कांक्षयेति कथनमनवद्यम् ।

अथान्या च शङ्का समुन्मिषति काचन । 'देहबन्धव उपेक्षणीयाः आत्मबन्धव एवापेक्षणीया इति हि तत्त्वार्थविदामध्यवसाय उपदेशश्च । मातुलपुत्रीति देहबान्धवप्रतिपादकगिरा संबोधनमिह कथमिव घटतामिति । अत्रोच्यते । देहबन्धवस्सर्वथा समुपेक्षणीया इति न शास्त्रतत्त्वविदां सिद्धान्तः । * भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति * इत्युपनिषद्गिरा भृगुः पितृसकाश एव ब्रह्मोपदेशमलभतेति सुस्पष्टमवगम्यते । * पितामहं नाथमुनिं विलोक्येति भगवद्यामुनाचार्यफणितिः । भगवान् रामानुजो यतिराजः स्वकीयभ्रातृभागिनेयादिषु त्याज्यताधियं नोद्वहतिस्मेति, यतिभूत्वाऽपि तैस्सहैव कालं चिक्षेपेति च तच्चरित्रामृतसेवया संविद्महे । श्रीपराशरभट्टार्यः श्रीवत्साङ्कसुत इत्युपश्लोक्यते । भगवान् लोकाचार्यः कृष्णपादसूनुरित्युपश्लोक्यते । श्रीमन्निगमान्तदेशिकसूनुर्वरदाचार्यवर्यः * पित्रे ब्रह्मोपदेष्ट्रे मे गुरवे...मङ्गलम् * इति पितृत्वरूपदेहबन्धुतामपि निबबन्ध । एवमेवं सुबहूदाहर्तव्यं हि वर्तते । भगवद्भागवतपरिचर्याविरोधिनो देहबन्धव एव त्याज्याः, त एव बान्धवाभासशब्दवाच्याः । ये नाम भगवद्भागवतसेवायां सर्वथाऽप्यानुकूल्यमावहन्ति; तेष्वात्मबन्धुषु देहबन्धुत्वमपि यदि घटते तत्सत्यं सौवर्णकमलस्य सौरभोन्मेषः । अस्तु । अथ गाथाव्याख्यानेऽवतरामः ।

"अत्यन्तदीप्तियुक्तमणिगणप्रचुरे रम्ये हर्म्ये......शयाने" इति संबोधनं साकूतम् । कृष्णविरहे एतादृशं विशालविमलश्लक्ष्णतुङ्गतूलासनोज्ज्वलं समग्रसौरभोद्गारनिरन्तरदिगन्तरं सोपधानं सुकुमारं वरासनं कथमधिशेते भवतीत्युपालम्भगर्भमुच्यत इव । भोग्यभोगोपकरणभोगस्थानेषु सर्वेष्वपि जुगुप्सामुत्पादयति सुदुस्सहेऽस्मिन्नपि विरहसमये हैहन्त कथमेवं सुखशायिकामधिशेते भवतीत्यधिक्षेपस्सौहार्द-निबन्धनः । परमभागवतानां दिव्य भव्यभवनस्य रामणीयकानुभवो भक्तानामत्यन्तमुद्देश्य इति बोधनं परमार्थः ।

एवमुद्बोधने कृतेऽपि सा गोपी नैव कवाटिकामुदघाटयत; नापि किमपि प्रत्युत्तरवचोऽपि प्रत्यपादयत्; अथ तस्या जननीं संबोध्य "किमेषा तव सुता वाचिकव्यवहारयोग्यताविकला ? उत श्रवणेन्द्रिय-दरिद्रा ? आहोस्वित्तन्द्रालुः ? अथवा "शयनीयादियं नैवोत्थातुमर्हतीति" केनचिन्मन्त्रणेन कीलिता ? इत्येवं कथनस्य हार्दो भावः अनुपदमेवोपपादयिष्यते ।

महामायो माधवो वैकुण्ठपतिरिति नामत्रयानुसन्धानपूर्वकमत्र भगवतः केचन शुभगुणा अनुभूयन्ते । (महामायः) * अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया * (गीता) इत्यादिस्थलेषूदाहृतम् * माया वयुनं ज्ञानम् * इत्येतन्निघण्टुवचनम् । संकल्परूपं ज्ञान-मेव मायाशब्दाभिलप्यं वेदान्तिनाम् । * सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स त-

परतन्वा । इदं सर्वमसृजत । यदिदं किंच * इति तैत्तिरीयोपनिषदाम्नातरीत्या संकल्पमात्रेण सुमहत्तर-जगत्सृष्ट्यादिरूपसर्वकार्यबृन्दनिर्वाहकस्सत्यसंकल्पो यः स एवाधुनाऽत्र कृष्णकिशोरमूर्त्या समवतीर्णः; स एवास्माकमधुना सेव्य इति हृदयम् । अथवा, * दैवी ह्येषा गुणमयी मम माया दुरत्यया * इति गीतोक्तरीत्या दैवीं गुणमयीं मायां यो निबबन्ध, स एव महामायः । तादृशमायाबन्धस्य तच्चरणारविन्द-प्रपदनेनैव छेदनीयता तत्रैव गीतायां * मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते * इत्यनेनोच्यते । अतो-ऽस्माभिस्तत्पादाम्बुजद्वयप्रपदनाय प्रस्थातव्यमिति सूचितं भवति । यद्वा महामायत्वं नाम अत्याश्चर्यचेष्टि-तवत्त्वम् । * घुंघुमिमि किं भ्रमन्ति अम्ब ! दधिमध्ये डिम्भ ! ननु भूतमिह दूरमपयाहि अम्ब ! नवनीत-मिति संगदति कृष्णे मन्दहसितं जयति मातुरतिरम्यम् * अन्तर्गृहे कृष्णमवेक्ष्य चोरं बध्वा कवाटं जननी गतैका । उलूखले दामनि बद्धमेनं तत्रापि दृष्ट्वा स्तिमिता बभूव * इत्याद्यनेकपद्योपबृंहितमायाचेष्टित कर्तृत्वमिहानुसन्धेयम्

(माधवः) लक्ष्मीपतिरिति यावत् । यस्मिन्पुंसि लक्ष्मीसंबन्धो नास्ति स नैव दैवतमिति परमैकान्तिनां मतम् । यदाहुर्भट्टपादाः श्रीगुणरत्नकोशे * वेदान्तास्तत्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति * इति । श्रीभक्तिसारयोगीन्द्रा अपि द्राविडगाथयाऽनुजगृहुः--*तिरुविल्लाततेवरै तेरेन्मिन् तेवु * ( छाया—लक्ष्मीयोगदरिद्र दैवमयि भो दैवं न मान्यं हृदा) इति । स एव श्रियःपतिर्देवदेवो भगवान् नन्दनन्दनात्मनाऽ-वतीर्णो विहरति सएवास्माकं सेव्य इति सूचितं भवति ।

(वैकुण्ठः) * वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः । आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागव-तैस्सह * इत्याद्युक्तरीत्या वैकुण्ठाख्यधामवासी यः, भक्तेभ्यस्तादृशं वैकुण्ठधाम प्रददाति च यः, स एव वसुदेवसुतस्सन्नवततार; स एव परात्परो भगवानिहास्मामुकम्सेव्य इति सूचितं भवति । इत्येवमेवं बहूनि भगवन्नामानि वयं कीर्तयामः, हे मातुलानि ! भवती च नामानीमानि संकीर्त्य स्वकीयां तनयामु-द्बोधयतु--इत्युक्तं भवति

अस्यां गाथायां ध्वनिमर्यादया बहवो ह्यर्थविशेषाः प्रतीयन्ते । निष्कलङ्करत्नखचिते प्रासादे परमभा-गवतव्यक्तिविशेषस्य शयनं यदस्यां गाथायां निबद्धम् , तत्रेदं तात्पर्यम् । यत स्थानमधिरुह्य पश्यन्तः सर्व-मपि वस्तुजातं सुखेन पश्यन्ति, तदेव स्थानं लोके प्रासादशब्देनाभिलप्यते । प्रज्ञैव प्रासादो वेदांतिनाम् । * प्रज्ञाप्रासादमारुह्य......प्राज्ञः प्रपश्यति * इति महर्षयोऽप्याहुः । तादृशस्य प्रज्ञाप्रासादस्य निरवद्यरत्न-खचितत्वं प्रोच्यतेऽत्र । रत्नानि तु नवेति प्रसिद्धम् । धनिकानां महतामुत्तुङ्गं रम्यं हर्म्यं यथा नवरत्नखचितं शोभते, तथा वेदान्तिनां प्रज्ञा नवरत्नापरपर्यायभूत--नवविधसंबन्धज्ञानजनित परमशोभाविभासुरा । *पिताच रक्षकः शेषी भर्ता ज्ञेयो रमापतिः । स्वाम्याधारो ममात्मा च भोक्ता चाद्यमनूदितः * इति पद्यर-त्नतोऽवसेयास्ते नवविधास्संबन्धाः १. पितृपुत्रभावः, २. रक्ष्यरक्षकभावः, ३. शेषशेषिभावः, ४. भर्तृभार्या भावः, ५. ज्ञातृज्ञेय भावः, ६. स्वस्वामि भावः, ७. आधाराधेय भावः, ८. शरीरात्म भावः, ९. भोक्तृभोग्य भावः—इत्येवंविधा नव हि संबन्धा जीवात्म परमात्मनोः श्रीमदष्टाक्षरमहामन्त्रवेद्याः । एतादृशसंबन्ध-ज्ञानमेव हि प्रज्ञायाः परमं प्रयोजनम् । * यमो वैवस्वतो राजा यस्तवैष हृदिस्थितः । तेन चेदविवादस्ते मा गंगां मा कुरून् गमः * इति ह्याहुर्महर्षयः । * त्वं मेऽहम्मे * इति भट्टपादादिव्यसूक्तिप्रोक्तरीत्या भग-वता सह ये विवादं कुर्वन्ति, ते खलु संबन्धज्ञानदरिद्राः । सम्बन्धज्ञानसमुन्मेषे सतिहि स विवादो विली-यते । एवंच तथा नाम विहाय विवादं 'भगवता सह न केवलमेक एव संबन्धोऽस्माकमस्ति, अपि तु नव सम्बन्धाः परमविलक्षणास्सन्ति'' इति विज्ञानेन ये हर्षप्रकर्षमनुभवन्ति, तादृशा अधिकारिणोऽत्र विवक्षिताः ॥

( समन्ततश्च दीपज्वालाभिरामे ) इति विशेषणेन नानाशास्त्रविज्ञानवैचक्षण्यमभिधीयते। * हर्तुं तमः सदसती च विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति * इति भट्टपादश्रीसूक्त्या प्रमाणरूपाणां शास्त्राणां प्रदीपत्वमवसीयते। बाह्यान्धकारमात्रक्षपणक्षमाः प्रदीपाः। आभ्यन्तरान्धकार (अज्ञानतमः) क्षपणक्षमाणि शास्त्राणि। तैस्संजातमौज्ज्वल्यमिह विवक्षितम्।

(दिव्यागरुसौगन्ध्यसंभृते) ज्ञानस्य सौगन्ध्यमनुष्ठानतः। ज्ञानहीना अनुष्ठातारः, अनुष्ठानहीना ज्ञातारश्च न शोभन्ते। * उभाभ्यामेव पक्षाभ्यामाकाशे पक्षिणां गतिः। तथैव ज्ञानकर्मभ्यां प्राप्यते पुरुषोत्तमः * इति ह्यामनन्ति महर्षयः। अन्धोपि संचरितुं न प्रभवति; तथा पंगुरपि न। अन्धो जनो नेत्रपाटवशालिजनसाहाय्यमवलम्ब्यैव चरितुं शक्नोति। पङ्गुर्जनश्चरणपाटवशालिजनसाहाय्यमवलम्ब्यैव। अन्धो ज्ञानहीन इव। पङ्गुरनुष्ठान विकल इव। अनुष्ठानेनैव ज्ञानस्य सौरभं संपाद्यमिति महागुरव उपदिशन्ति। तदेवात्र * दिव्यागरुसौगन्ध्यसंभृतत्वविशेषणेन स्फोर्यत इति प्रतिपत्तव्यम्।

( दिव्यशयनीये शयाने ! ) इति संबोधनस्य चायमाशयः--लोके जना इतस्ततो बहिस्सञ्चरन्तो नानाविधेषु कार्येषु प्रवृत्ताश्च सन्तः परिश्रमभूम्ना दुःखिता भवन्ति। यदा तु ते दिव्यशयनीयमधिशेरते तदा आयासरूप सर्वकार्यनिवृत्ताः श्रमापनोदनसुखानुभवशालिनः प्रहृष्यन्ति--इतीदं सुष्ठु पश्यामः। एवमेव प्रवृत्तिमार्गविरता निवृत्तिमार्गनिष्णाता अत एव विलक्षणब्रह्मानन्दभागिनश्चाधिकारिविशेषा इह विवक्षिता इति। * उरोविन्यस्तहस्तास्ते निद्रायन्ते निरन्तरम्। गुरुपादाम्बुजन्यस्तस्वात्मरक्षाभरा हि ये * इत्येतत्प्रमाणरत्नमिहानुसन्धेयम्।

( दिव्यकवाटिकामुद्घाटयेथाः ) लोके भगवदनुभवनिष्ठा द्विविधा भवन्ति। * विविक्तदेशे च सुखासनस्थ इत्युक्तरीत्या निर्जने स्थले रहसि स्थित्वा कवाटिकां च घट्टयित्वा स्वात्महृदयैकवेद्यमनुभवन्ति भगवन्तं केचित्। इतरे तु * कैङ्कर्यनित्यनिरतैर्भवदेकभोगैर्नित्यैरनुक्षणनवीनरसार्द्रभावैः। नित्याभिवाञ्छितपरस्परनीचभावैः मद्दैवतैः परिजनैस्तव संगसीय॥ * ( श्रीवैकुण्ठस्तव ) इत्युक्तरीत्या रहस्यानुभवे तृप्तिलेशविधुरास्सन्तः अनुभवरसिकैः परमभागवतैस्सह संमिलिता एव सन्तो मुक्तकण्ठमनुभवन्तः संप्रहृष्यन्ति। एवंविधो द्वितीयोऽनुभवप्रकारः प्रार्थ्यतेऽत्र कवाटिकोद्घाटनप्रार्थनापदेशेन। सर्वे वयं संमिलिता अनुभवेमेत्युक्तं भवति॥ ... ... ... ... ...

---

## १० दशमी गाथा—नोत्तुच्चुवर्कम्।

### ( दशमगाथायाः पद्यम्। )

काञ्चित्सिद्धोपभोगां प्रतिवचनकलामप्यविश्राणयन्तीम्
जित्वा तं कुम्भकर्णं ह्यपि खलु भवती शेत इत्युद्गृणाना।
सौरभ्याश्च तुलस्या सुरुचिरशिरसं श्रीपतिं भक्तभोग्यं
स्तोतुं जागृह्युपेहीत्यभिहितवचना पातु गोदा स्वभक्तान्॥ १०॥

प्रतिवचनमीषदप्यविश्राणयन्ती काञ्चित्सिद्धोपभोगा गोपी अनया गाथया समुद्बोध्यते। व्रतानुष्ठानं परिसमाप्य महानन्दानुभवकारिणि हे शालिके! इति तावत् ( मूलगाथायां ) प्रथमपादेन संबोधनं क्रियते। व्रतानुष्ठानपरिसमाप्तिर्नाम—इदानीमस्मिन्दिव्यप्रबन्धे प्रस्तूयमानस्य मार्गशीर्षव्रतस्य परिसमाप्तिं न...

अपितु * विदुः कृष्णं ब्राह्मणास्तत्त्वतो ये तेषां राजन् सर्वयज्ञास्समाप्ताः इति, * प्रायो ह्यकृतकृत्यत्वान्मृत्योरुद्विजते जनः । कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् इति चोक्तरीत्या शास्त्रेषु कृतकृत्या इति कृतिन इति च ये प्रशस्यन्ते प्रकृष्टाधिकारिणः ते खलु समापितव्रता इति व्यपदिश्यन्ते । तादृशानामेवोत्तमाधिकारिणां व्रतसमाप्तिरिह कथितेति वेदितव्यम् । साध्योपायेषु निष्ठां विहाय सिद्धोपायपरिग्रहभूम्ना आनन्दनिर्भराः कतिचन सन्ति खलु विशिष्टाधिकारिणः, तेषां प्रशंसने तात्पर्यमिह । संबोधने च 'स्वर्गानुभवकारिणि हे बालिके !' इत्युच्यते । * यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ( श्रीरामायणे ) इति वैदेहीवचनप्रक्रियया अविच्छिन्नभगवदनुभवरूप आनन्द एवात्र स्वर्गशब्दाभिलप्यो वेदितव्यः ।

मूलगाथायां द्वितीयपादे कथ्यते—त्वं कवाटोद्घाटनं न करोषि चेन्माकुरु तावत । तत्पादेष प्रत्युत्तरप्रदानमपि तव कथं दुष्करं जातमिति । एतेन, कवाटोद्घाटनमप्यकृत्वा प्रत्युत्तरमप्यनुक्त्वा जोषमास्ते सेयं गोपिकेति लभ्यते । * प्रहर्षेणावरुद्धा सा व्याजहार न किञ्चनेति सीता स्थिता खलु । तथैव इयमपि गोपी सिद्धसाधनपरिग्रहप्रयुक्तहर्षप्रकर्षेण जोषमास्ते इत्युक्तं भवति । भगवद्गुणानुभवकर्तृष्वधिकारिषु द्वैविध्यं वर्तते; केचिदानन्दमन्तर्निगूहितुमशक्तास्सन्तो मधुवनभञ्जकवानरवर्गनीत्या वीथीषु ससंभ्रमनृत्तकोलाहलादिकरणप्रवणा भवन्ति । केचित्तु * स्तब्धोऽस्युत तमादेशमप्राक्ष्य इत्युपनिषदाम्नातरीत्या अङ्गपरिस्पन्दमपि कर्तुमशक्ततया स्तिमिता भवन्ति । इह च बहिः स्थित्वा समुद्बोधयन्त्यो गोप्यः प्रथमश्रेणिनिविष्टाः अन्तश्शयाना समुद्बोध्यमाना गोपी द्वितीयश्रेणिनिविष्टा—इतिसम्यगवगम्यते ।

अथ च ( मूलगाथायाम् ) तृतीयादिषडन्तपादचतुष्टयेन अन्तःशयानाया गोप्या उपालम्भोऽपि क्रियते निद्रायां सुप्रसिद्धं कुम्भकर्णमपि खलु जित्वा भवती स्वपितीति । निद्रादैर्घ्यविषये कुम्भकर्णस्य महती खलु प्रथा वर्तते । तस्य च अस्याश्च पणबन्धो जातः । किमिति । आवाभ्यामुभाभ्यामपि गाढनिद्रा कर्तव्या; आवयोर्मध्ये या व्यक्तिः पुरस्तादुद्बुध्यते सा पराजितैव भवति; ततःपरं तया व्यक्त्या नैव निद्रा कर्तव्या; सा स्वकीयामपि निद्रां विजयशालिन्यै व्यक्तये वितरेदिति । एवंनाम पणबन्धमारभ्य कुम्भकर्णश्च इयं गोपिका च शयाते स्म । कुम्भकर्णस्तु पुरस्तादेव निद्रां विहाय प्रबुध्यते स्म । ततश्च स पराजितोऽभूत् । प्रकृतपणबन्धरीत्या तदनु स स्वकीयामपि निद्रामस्यै गोपिकायै समर्पितवानिवेति विलक्षणवाग्विन्यासः क्रियतेऽत्र । तथा च मूलगाथास्थशब्दार्थ एवम्—सौरभसंभृततुलसीमालिकाञ्चितमौलिना, अस्मादृशां मितमतीनामपि जनानां स्तुतिवचनैः प्रसीदता परमपुण्यभूतेन च नारायणेन दाशरथिना पुराकदाचितमृत्युलोकं प्रापितस्स कुम्भकर्णोऽपि पराजितस्सन् किमहो तुभ्यमेव स्वकीयमहानिद्रामपि दिशतिस्म—इति । एवं निद्रायामतिशयकथनेन कीदृशो वेदान्तार्थः प्रकाश्यत इति चेत ; अवधीयताम् । * या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः * इति गीताद्वितीयाध्यायोक्तरीत्या लौकिकजनानां निरन्तरभोग्यभूतेषु विषयान्तरेषु नित्यं निर्मीलितलोचन एव वर्ततेऽयमुत्तमाधिकारीत्युक्तं भवति ।

द्राविडभाषामय्यां मूलगाथायां कुम्भकर्ण इति शब्दसंनिवेशो नास्ति ; अपितु तद्भाषानुगुण्येन कुम्भकरण इत्येव वर्तते । स च शब्दः कुम्भकर्णमिव कुम्भसंभवं योगिवर्यमप्यभिधातुं प्रभवति । कुम्भः करणं यस्येति व्युत्पत्त्या कुम्भयोनिरगस्त्यो मुनिवरो व्यवहर्थप्रणाल्यां विवक्षितः । सहि मुनिवरो द्राविडभाषाप्रवर्तकः । द्राविडभाषाया आगस्त्यत्वप्रथा च सर्वविदिता । स मुनिः पराजित इति कथनेन ततोऽप्यतिशयः अस्मिन्नधिकारिणि प्रोक्तो भवति । कस्मिन्नंशे पराजय इति चेत महत्तरनिद्रांशे पराजय इति मूले स्पष्टमुक्तम् । कुम्भकर्णस्य निद्रालुताप्रसिद्धिरस्ति मम । कुम्भसंभवमुनेस्तदभावात्, तस्यमुनेरत्र प्रत्यभिज्ञापनं विफलमेव खल्विति काचिदाशङ्का जायेत । अत्रोच्यते । परमभागवतानां निद्रा नाम तमोगुणकार्यभूतलौकिकनिद्रा न भवति । लोके निद्रापरवशा जना बाह्यविषयस्यासङ्गवैमुख्यतोऽपरिमितमानन्दमनु-

भवन्तीति सर्वविदितमिदम्। सुखमहमस्वाप्समिति हि सुप्तोत्थितस्य जनस्य प्रत्यवमर्शः। तथाच विलक्षणानन्दानुभव एव निद्राशब्दलम्भितोऽर्थः। भगस्त्यमुनेर्यः खलु विलक्षणानन्दानुभवः तद्विषये स पराजितोऽभूदिति कथनमिह चारुतरमेव।

अथ (मूलगाथायाम्) सप्तमपादे—अत्यन्तं तन्द्राविवशे! उत्तमाभरणभूते! इति संबोधनद्वयं वर्तते सुदर्शनशतके * हन्तु तन्द्रालुतां वः * इति हेयतया कथ्यमानं तन्द्रालुत्व कथमिह श्रेष्ठाधिकारिणि कथ्यते? इतिचेत् श्रूयताम्। लोके तन्द्रालुर्जनः कर्तव्यानि कृत्यानि विसृजतीति पश्यामः। कर्तव्यकृत्यत्याग निबन्धन एव हि तन्द्रालुव्यपदेशः। * नित्यं काम्यं परमपि कतिचित् त्वय्यध्यात्मस्वमतिभिरममाः न्यस्यासङ्गा विदधति विहितं श्रीरङ्गेन्दो! विदधति न च ते इति श्रीरङ्गराजस्तवोत्तरशतकोक्तरीत्या "विदधति न च ते" इति वक्तव्यतां ये बिभ्रति ते तावदिह विवक्षिताः। नैतत्तन्द्रालुत्वं दूषणमर्हति; उपायत्वधिया कर्मज्ञानभक्त्याद्यनुष्ठानं ये न कुर्वन्ति, तादृशां कर्मत्यागिनां तन्द्रालुत्वव्यपदेशो भूषणमेवेति सत्संप्रदायरहस्यविदो वदन्ति। साधनत्वाकारेणानुष्ठानमपहाय कैङ्कर्यरूपेणानुष्ठानम् अननुष्ठाने हि पर्यवस्यति। उत्तमाभरणभूते! इति संबोधनम् श्रीवैष्णवगोष्ठीप्रधानपरिगणितत्वाभिप्रायकम्॥

अथ (मूलगाथायाम्) अष्टमपादे—सुप्रसन्नतया समागत्य कवाटमुद्घाटयेत्यभिधीयते। एतेन सानन्दमुपदेष्टृत्वमभ्यर्थितं भवति। अनुवृत्तिप्रसन्नाचार्या हि निर्बन्धभूम्ना किमप्युपदिशन्ति वैरस्येन; तद्व्यावर्तनमिह सुगमम्॥ १०॥ ... ... ... ... १०

---

## ११ एकादशी गाथा—कत्तुक्करवैक्कणङ्गळ०

### (एकादशगाथायाः पद्यम्।)

स्त्रीणामप्याशु पुंस्त्वं ददद्नवधिकं बिभ्रतीं सुन्दरत्वं
काश्चिद्गोपीं प्रति त्वद्गृह इह सकला सख्य आगत्य कृष्णम्।
गायन्ति त्वं कुतो वा स्वपिषि? किमुचितं मौनमेवंविधं ते
द्रागायाहीति वक्त्री हरतु मम तमो मानसं मंक्षु गोदा॥ ११॥

द्राविडभाषामयमूलगाथारीत्या शब्दार्थ एवम्॥ "सवत्सगोगणानां बहूनां दोहनं कुर्वताम्, शत्रुविक्रमविनाशनार्थं रणभूमिं प्रविश्य युद्धं निर्वहतां निरवद्यगन्धानां च गोपालानां कुले सौवर्णलतानिर्विशेषं समुत्पन्ने! वल्मीकान्तः प्रविष्टफणिनिभकृशताभासुरमध्यप्रदेशशालिनि! स्वस्थानविहाररसिकमयूरीसदृशि! संपत्समृद्धे हे गोपिके! समायाहि। बान्धवजनेषु सखीजनेषु च सर्वेषु संघीभूय त्वद्गृहाङ्गणे नीलमेघनिभस्य भगवतो नामानि गायत्सु सत्स्वपि हन्त त्वं शरीरस्पन्दमप्यकुर्वता वाचमप्यनुद्घाटयन्ती कुतो नु निद्रामनुभवसि? इति।

गाथायामस्यां स्त्रीसौन्दर्यं स्त्रिय एव वर्णयन्तीति स्थितम्। अत्रेदमवधेयम्। लोके स्त्रीणां सौन्दर्ये पुंसां विस्मयः, पुंसां सौन्दर्ये स्त्रीणां विस्मयश्च औत्सर्गिकः। एतद्विपर्ययो यदि कुत्रचिद् दृश्यते तत्र भूयिष्ठो विशेषो नूनमङ्गीकर्तव्यः स्यात। भगवन्तं रामचन्द्रमुद्दिश्य कथयन् वाल्मीकिर्महर्षिः * रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् * इति कथयति। अत्र पुंसामिति किमर्थं निवेशितम्? सर्वेषामिति खलु निवेशनीयम्। यथा पुनिवेश्य पुंसां दृष्टिचित्तापहारिणमिति निवेशनेन स्त्रीणां दृष्टिचित्तापहारं रामचन्द्रो न

करोतीति केचिदरसिका अर्थवर्णनव्यग्रा भवन्ति। न तथा। दण्डापूपिकान्यायसिद्धं खिलात्र स्त्रीजनदृष्टिचित्तापहरणम्। स्वयं पुमान् भूत्वा पुंसां मोहनरूपो भवतीति विस्मयस्तामा खल्वेतत्। महाभारतेऽपि * पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्त्या जघनं घनम्। याः स्त्रियो दृष्टवत्यस्ताः पुंभावं मनसा ययुः * इति पठामः। एतेन च द्रौपद्यास्सौन्दर्यातिशयः सजातीयललनाजनस्यापि मोहजनक इति तदतिशायनमवगम्यते। तद्वदत्रापि समुद्बोधयन्त्यो गोपिकाः समुद्बोध्यमानाया गोपिकाया अवयवसौन्दर्यवर्णने व्यग्रा अभूवन्निति दर्शनेन सजातीयानामपि विस्मयावहमाभिरूप्यं बिभ्रत कोऽपि विलक्षणाधिकारी गाथायामस्यां प्रतिबोध्यत इति प्रतीयते। अत एव प्रोक्तमनुवादपद्य मदीये * स्त्रीणामप्याशु पुंस्त्वं ददद्नवधिकं बिभ्रतीं सुन्दरत्वं काञ्चिद्गोपीं प्रतीति ॥

स्वापदेशार्थप्रणाल्यामिह किञ्चिदुच्यते। 'आचार्यः शिष्याणामात्मयात्रायामवहितस्स्यात्; शिष्यास्तावदाचार्यस्य देहयात्रायामवहितास्स्युः' इति श्रीवचनभूषणादिव्यशास्त्रसिद्धान्तः। आचार्यदिव्यमङ्गलविग्रहसौन्दर्यमेव शिष्यसंततेः संततमनुसंधेयमिति शास्त्रार्थो गाथायामस्यां प्रधानसंबोधनभङ्ग्या व्यञ्जितो भवति।

सौवर्णलतिके! इति संबोधनस्य चायमभिप्रायः; लता तावत् उपघ्नं विना नाभिवर्धते। तेन च सर्वथा पारतन्त्र्यं स्फोर्यते। श्रीगुणरत्नकोशे * अनुकलतनुकाण्डालिङ्गनारम्भशुम्भत्प्रतिदिशभुजशाखश्रीसखानोकहर्द्भिः। स्तननयनगुलुच्छस्फारपुष्पद्विरेफा रचयतु मयि लक्ष्मीकल्पवल्ली कटाक्षान् ॥ * इतिश्लोके लक्ष्म्याः कल्पवल्लीत्वेन रूपणं कृतवतामाचार्याणामपि स्वातन्त्र्यगन्धविरहितपारतन्त्र्यप्रतिपादनमेव ह्यभिसंहितम् तदेवात्रापि विवक्षितमिति वेदितव्यम्।

इयं सौवर्णलतिका कुत्र समुत्पन्नेतिचेत् गोपालानां कुले समुत्पन्नेत्यभिधीयते। ते च गोपालाः त्रिभिर्विशेषणैर्विशेष्यन्ते। बहुगोगणदोहनकर्तृत्वं प्रथमविशेषणम्। बहूनां गोगणानां दोहनं गोपाः कुर्वन्तीति नैतद्विस्मयनीयम्। किमर्थमिदमत्रोच्यत इति चेत्, उद्बोध्यमानस्योत्तमाधिकारिणो बहुश्रुतत्वं प्रतिपाद्यत इति प्रतिपत्तव्यम्। यथा * गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश, तथा चतुर्दश विद्याः स्वोदराभ्यन्तरे निगूहन्तो महागुरवोऽत्र विवक्षिताः तत्सविधे दोहनं नाम-घोर्गनिविशेषसदर्थग्रहणमेव। * ऋषिर्हं दीर्घश्रुत्तमः * इति तैत्तिरीयारण्यकाम्नातरीत्या बहुभ्यो बहुधा बहु श्रुतवन्तो महान्त इह सूचिता भवन्ति। * सवत्स गोगणानाम् * इति गवां सवत्सत्वकथनेन बालशिष्यसमावेतत्वमुक्तं भवति। मूलगाथायां वर्तमानं द्राविडपदं "वत्सात्मकगोगणानाम्" इत्यप्यनुवादं सहते। व्रजे वर्तमाना गावो न घासतोयादिभिरभिवर्धन्ते; घासादिग्रहणं व्याजमात्रमेव; कृष्णकिशोरकरस्पर्शत एव वस्तुतो वर्धन्ते। तथाच नित्यं पञ्चविंशतिवार्षिकमुक्तात्मवत् व्रजस्था गावस्सदाऽपि वत्सनिर्विशेषा एव विराजन्त इति ग्रहीतुं योग्यम्। स्वापदेशार्थप्रणाल्यां तु * पाण्डित्यं निर्विद्य बाल्येन तिष्ठतां महतां स्थितिरुच्यत इति बोध्यम्।

अथ, शत्रुविक्रमविध्वंसनाय रणभूमिं प्रविश्य युद्धं निर्वहन्ति गोपाला इति द्वितीयविशेषणेनोच्यते। के ते शत्रव इति चेत्; भगवद्वैभवासहिष्णवो भगवति बद्धवैरा आसुरप्रकृतयो भागवतैः स्वशत्रुत्वेन भाव्यन्ते। भागवतद्रोहिणो दुर्जना भगवता स्वशत्रुत्वेन भाव्यन्त इतिहासपुराणार्थतत्त्वम्। तथाच भगवद्भागवतविरोधिन एवात्र शत्रुपदविवक्षिताः। ते च कंससधर्माणः कंसप्रेरितनानाविधदैत्यसधर्माणश्च। तेषां विनाशने अमी गोपालाः स्वत एव संभृतोत्साहा इत्युक्तं भवति। भगवद्भागवतविरोधिजननिर्मूलनबद्धश्रद्धत्वमपि उत्तमाधिकारिणामुत्कर्षेषु मुख्यतमं खलु। एतेन, पाषण्डमायावादिप्रभृतिदुर्मतप्रवर्तकानां निरसनार्थं तत्रतत्रगत्वा वादयुद्धं निर्वर्त्य विजयश्रियं विन्दतामाचार्याणां वाग्वैभवं व्याहृतं भवति।

अथच निरवद्यगन्धानामिति तृतीयविशेषणेन-युद्धकाले संभावितानामवद्यानामस्पृष्टिः कथिता भवति गोपालेषु। दुर्वादिविधूननाय वादयुद्धं प्रवर्तयतामाचार्याणां निरवद्यगन्धत्वं नाम—* गुरु त्वकृत्य हुं

कृत्य विघ्नं निर्जित्य चादृतः। श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः ॥ * इत्यादिशास्त्रविश्वासभूम्ना स्वयं साक्षाद्धादयुद्धमकृत्वा समर्थशिष्यद्वारा [दाशरथिपुरस्कृतहृच्छिष्यामित्रनयेन] तत्संपादनमिति बोध्यम् ॥ अस्मदीये सभाभुजङ्गीसर्वस्वे विस्तरोऽनुसंधेयः। गोपालशब्दो वल्लवानिव वाचस्पतीनपि व्याचष्टे नानार्थकस्य गोशब्दस्य वागर्थकत्वमप्यनपायमिति।

( वल्मीकान्तः प्रविष्टफणितुल्यकृशताभासुरमध्यप्रदेशशालिनि ! ) इति हि प्रधानं संबोधन विराजते गाथायामस्याम्। फणिनो हि बहिस्सञ्चारकाले पृथुभोगास्सन्तोऽपि वल्मीकान्तःप्रवेशकाले सूक्ष्मरन्ध्रान्तःप्रवेशकृत कृशभोगा भवन्तीति प्रत्यक्षलक्ष्यमिदम्। तथा कृशमध्यमेति कथनेन स्त्रीणां वर्णनीयमुदरकार्श्यं वर्णितं भवति। मध्यसौष्ठवकथनेन ज्ञानभक्तिविरक्तिषु मध्यमभूतायाः भक्तेः प्रशंसा प्रोक्ता भवतीति बोध्यम्।

अथ, मयूरसदृशीति संबोधनेन अलकभारसौन्दर्यमुपवर्णितं भवति। मयूरसकाशे क्षुद्रविषजन्तवो यथा नोपसर्पन्ति तथा * यत्राष्टाक्षरसंसिद्धो महाभागो महीयते। न तत्र संचरिष्यन्ति व्याधिदुर्भिक्ष तस्कराः ॥ * इत्युक्तरीत्या व्याध्यादिवैदेशिकत्वमुत्तमाधिकारिणामुक्तं भवति। किञ्च, मयूरः अतिमात्रविपुलामपि बर्हच्छटाम् अन्तर्निगृह्य संतोषकालेषु यथा विस्तार्य प्रदर्शयति तथा महान्तोऽपि स्वकीयं सकलविद्यापारंगतत्वं परैरदृश्यं कुर्वाणाः समयविशेषेषु हर्षप्रकर्षतः प्रकाशयन्तीति ननु पश्यामः। बर्हिणां बर्हं भगवतोऽपि मूर्धानमलङ्करोति यथा, तथा भगवतोऽप्यवर्तसनीयवाग्गरिमाणो मान्या महान्त इति स्फोरितं भवति। मयूरो नीलमेघमवलोक्य ससंभ्रमं नृत्यति। तथा महत्तरभक्तियुक्ता गुरवोऽपि नीलमेघनिभमच्युतमनुभूय हर्षप्रकर्षविवशा नृत्यन्ति। एवमेवं मयूरसादृश्यं महत्सु द्रष्टव्यम्।

अथ, बान्धवजना स्सखीजनाश्च सर्वे संघीभूय भगवन्नामानि गायन्तीति कथ्यते मूलगाथास्थपञ्चमषष्ठपादाभ्याम्। देहबन्धव आत्मबन्धवश्चेत्युभयेऽपि भगवद्गुणानुभवनिष्णातास्सन्तीत्युक्तं भवति। उत्तमाधिकारिभिः आत्मबन्धव इव देहबन्धवोऽपि भगवद्भक्तिभूमनिमित्तेन निर्विशेषमाद्रियन्ते न तावदुपेक्ष्यन्ते इति सूचितंभवति।

अन्ततः, शरीरस्पन्दमप्यकुर्वती वाचमप्यनुद्घाटयन्ती स्वपितीति कथनेन—भगवद्गुणगणश्रवणकाले भक्तानां निष्पन्दस्तिमितावस्था संजायत इत्युक्तं भवति। कृष्णविशेषकृतवेणुगानकाले तच्छ्रवणनिरतानां हरिणानां दशामीदृशीमेव खलु वर्णयति गोदादेवीजनको भट्टनाथसूरिः ॥ ११ ॥

---

## १२ द्वादशीगाथा—कनैत्तिळङ्कतेरुमै

( द्वादशगाथायाः पद्यम् )।

नित्यं कृष्णानुसृत्या व्रजभुवि बहुमान्यस्य कस्यापि पुंसो
धन्यां मान्यां स्वसारं प्रति, सखि ! दशवक्त्रान्तकं चित्त भोग्यम्।
गायन्तीश्चापि नास्मान् हिमहतशिरसो वीक्षसे गाढनिद्रा
द्रागायाहि प्रबुध्येत्युदितवचनया गोदयाऽहं सुधन्यः ॥ १२ ॥

व्रजे महत्तरसंपदाढ्य इति कश्चन गोपकुमारः प्रथितः। तस्य स्वसा समुद्बोध्यते गाथयाऽनया। अस्या अग्रजस्य महत्तरसंपदाढ्यता कीदृशीतिचेत तत्तु मूलगाथायामस्यामत्यद्भुतप्रणाल्या प्रतिपाद्यते।

मूलगाथार्थस्तावदेषः;—बालवत्सवती महिषी वत्समनुचिन्त्य आक्रुश्य दयमानहृदया 'वत्सस्सन्निहित' इति भावनाप्रकर्षेण ध्यायन्ती सती स्तनमार्गेण प्रस्नुतपयस्का यस्य भवनमखिलं जम्बालसंकुलमाकलयति तस्य महत्तरसंपदाढ्यस्य अनुजे ! हिमधारासिक्तमस्तका वयं त्वदीयगृहद्वारवर्तिपटलदण्डिकामवलम्ब्य, क्रोधवैभवेन विध्वस्तलङ्केश्वरं मनोभिरामं रामं गायन्त्यो वर्तामहे। अथापि त्वं किमपि प्रतिवचनमपि न ददासि हन्त। इतःपरमपि वा समुत्तिष्ठ भोः हन्त! केयं महती निद्रा। त्वद्भवनद्वारि वयमेवमवर्तामहे इत्ययमंशः सर्वजनविदितो ह्यभूत् इति ॥

महिषी स्वकीयस्तनाध्वना दुग्धधारां प्रस्राव्य भवनमखिलं जम्बालसंकुलं कलयतीति यत्कथितं तस्य गहनतरमतिगभीरं तात्पर्यमुन्नेयम्। पूर्वाचार्याणां व्याख्यानमेवात्र शरणम्। श्रूयताम्। वनान्तेषु घासान् जग्ध्वा सायं गृहे प्रत्यावर्तमानां महिषीम् गोष्ठे यथास्थानं प्रापय्य वत्सं पाययित्वा दोहनकर्म कर्तुमर्हति गृहस्वामी। स तु तत्कर्म न कृतवान्। [ कुतो न कृतवानितिचेत् तत अनुपदमेव वक्ष्यते। ] स्वस्य गोष्ठप्रापणबन्धनादिकृत्याकरणेन खिन्ना महिषी मध्येद्वारं तस्थुषी वत्समनुचिन्त्य कलिताक्रोशा, वत्स उपसृत्य स्तनन्धयो भवतीति ध्यानेन ऊधसः पयःप्रवाहं प्रजनयति। तेन च तद्भवनमशेषं पङ्किलमजनीति गम्यते। इह च गृहस्वामी स्वकृत्यमकृत्वा कुत्र गतः किं करोतीति विवेचनीयम्। विवेचने कृते अयमर्थो निष्पद्यते; सौमित्रिर्यथा क्षणमात्रमपि रामचन्द्रानुसरणमविसृजन् विविधवरिवस्याविरचनवैयग्र्येण तमेवानुसरन्नासीत् तथा एतद्गृहस्वामी (समुद्बोध्यमानाया गोप्या अग्रजः) सततं कृष्णमेवानुसरन् तत्साहित्येनैव कालं क्षिपन् स्वजात्युचितकृत्यवर्गमपि व्यजहात्। अत एव तद्गृहस्थितिरीदृशी जातेति। इदमुच्यते अस्मदीये अनुवादपद्ये—"नित्यं कृष्णानुसृत्या व्रजभुवि बहुमान्यस्य कस्यापि पुंसो धन्यां मान्यां स्वसारं प्रति" इति।

पूर्वगाथायां गोदोहनात्मककृत्यकरणं कण्ठरवेण कथितम्। अस्यां गाथायां तदकरणम् अर्थात्प्रत्यायितम्। अनयोरुभयोरपि विषययोर्गाढविमर्शे कृते अयं शास्त्रार्थः फलति—नित्यकर्माद्यनुष्ठानमावश्यकमवर्जनीयं केषाञ्चिदधिकारिणाम् ; अथ तदकरणमपि युज्यते कतिपयाधिकारिणामिति। भगवानप्याह भगवच्छास्त्रे— * मत्कर्म कुर्वतां पुंसां कर्मलोपो भवेद्यदि। तत्कर्मकुर्वते नित्यं तिस्रः कोट्यो महर्षयः॥ * इति। आचार्यहृदये चानुगृहीतमाद्ये प्रकरणे—यथा जात्याश्रमदीक्षासु धर्मा भिद्यन्ते तथा अविच्छिन्नकैङ्कर्ये सामान्यधर्मप्रच्युतिर्भवेदिति। पुरुषार्थाधिकरणश्रीभाष्यसूक्तिविशेषा अप्यत्रानुसन्धेयाः। एवंविधशास्त्रार्थप्रत्यायनमेव गाथाया अस्याः पूर्वार्धतात्पर्यसर्वस्वम्।

ननु अनया गाथया प्रबोध्यमानाया गोप्याः पितरं गृहस्वामिपदे निधाय तत्पुत्रिकात्वेन अस्यास्संबोधनं कुतो न कृतम्? वस्तुतः पितैव खलु गृहस्वामी भवितुमर्हति। तं विहाय तत्पुत्रं गृहस्वामिनं कृत्वा तदीयस्वसृत्वेन अस्यास्संबोधने को वा विशेष इति चेत्, श्रूयताम्। कृष्णेन साकमविच्छिन्नसहवासं कुर्वतो व्यक्तिविशेषस्य हि अत्र महत्तरसंपदाढ्यत्वेन प्रशंसा चिकीर्षिता; स तु वृद्धो वा युवा वा न भवितुमर्हति। अपितु कृष्णकिशोरसमवयस्क एव भवितुमर्हति। गोदादेव्याः पिता विष्णुचित्तापरनामधेयो भट्टनाथसूरिः स्वसूक्ते [पेरियाळ्वार्तिरुमोळिदिव्यप्रबन्धे] तृतीयशतकचतुर्थदशकीयतृतीयगाथायाम् [ * चुरिहैयुम् तेरिविल्लुम्......ओरु कैयालोरुवन्तन् तोळै पूत्रि * इत्यस्याम्] धन्यजन्मानं तं पुमांसं निर्दिशति यःपुनरस्यां गाथायां गोदादेव्या महत्तरसंपदाढ्यपदेन निर्दिश्यते। तस्या भट्टनाथसूरिगाथाया अनुवादभागश्चैवम्—

"कृष्णस्य सखायो बालकाः छुरिकां धनुर्लतां लीलायष्टिम् उत्तरीयं च अपेक्षासमयेषु कृष्णाय दातुं हस्ते धारयन्तस्सन्तोऽनुसरन्ति। कृष्णस्तु स्वकीयेनैकेन पाणिना

प्राणनिर्विशेषस्य कस्यचिद्वयस्यस्य भुजमवलम्बमानः अन्येन पाणिना गोबृन्दाह्वान साधनं शंखं गृह्णन् व्रजं प्रतिनिवर्तते ... ... ... ... ...'' इति ।

इदमप्यवधेयम् । उत्तरमथुरातेत्रात गोकुलाद्वा उपदशक्रोशदूरवर्तिनि नन्दगामसमाख्ये क्षेत्रे (शिलोच्चये ) विराजमाने भगवन्मन्दिरे नन्दगोपयशोदाकृष्णबलरामविग्रहैस्सह कृष्णानुचरस्य वयस्यस्यापि विग्रहः प्रतिष्ठापितो विभ्राजते । सोऽयं सन्निवेशः प्रेक्षणीयो भक्तैः । अस्तु । कृष्णकिशोरसमवयस्कता-प्रतीत्यर्थमेव अत्र प्रतिबोध्यमानाया गोप्या अग्रज एव गृहस्वामी निर्दिष्टः । पितुर्निर्देशे स्वारस्यगन्धोऽपि नास्तीति ।

दुग्धप्रवाहप्रस्रावणेन गृहं पङ्किलं कुर्वती व्यक्तिः धेनुरिति न कथितम् ; अपितु महिषीति कथितम् । अत्र ध्वन्यर्थपरिशीलने (लक्षितलक्षणावृत्त्याश्रयणेन) महिषीपदस्य राजपत्नीवाचकत्वं प्रतिपत्तव्यम् । देवदेव-दिव्यमहिषीमखिलजगन्मातरमस्मन्मातरं महालक्ष्मीं प्रत्यभिज्ञापयति महिषीपदम् । आचार्यस्तावत पुरुषकारकृत्ये महालक्ष्म्याः स्थानमलङ्करोतीति संप्रदायविदां मतम् । स आचार्योऽत्र ग्राह्यः । शिष्यास्सन्ति-चेत्तदा महार्थोपदेष्टारः केचित् ; शिष्योपस्थितिविरहेऽपि स्वात्मधारणाय ( कः पठति ? कालः पठतीति काशीपण्डितव्यवहार स्मारकतया) दुग्धनिर्विशेषानर्थानुपदिशन्तो गुरवोऽपि सन्ति कतिपये । तथाविधस्या-चार्यस्य चर्यामत्र प्रतिपद्यध्वम् बालशिष्यसमुद्बोधनव्यग्र आचार्यः अन्तेवासिनामुपस्थितिविरहेऽपि स्वयं भगवद्गुणकीर्तनमकृत्वा स्थातुमशक्नुवन् क्षीरवत् धारकान् पोषकान् भोग्यांश्च दिव्यार्थान् प्रवर्षति ।

[स्तनाध्वना प्रवर्षतीति यत्कथितं तत्रेदं बोध्यम् ।] धेनोर्महिष्याश्च पयोनिस्सरणद्वारभूताःस्तनाश्चत्वारः प्रथिताः । तथा आचार्योऽपि चतुर्भिर्द्वारैः ( निमित्तैः ) अर्थानुद्घाटयति । कानि तानि चत्वारि निमित्तानी-तिचेत्; १. भगवदाज्ञा । २. शिष्यप्रार्थना । ३. शिष्यदुर्गत्यसहिष्णुता । ४. उपदेशं विना स्वात्मधारणा-समर्थता—इति । भूतलं गत्वा शिष्यानुपदेशैस्समुज्जीवयेति भगवानाज्ञाप्य खलु श्रीवैकुण्ठात् प्राहैषीदाचा-र्यम् । तादृशी भगवदाज्ञा प्रथमं निमित्तम् । * तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् * तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः * इत्यादिविधिबलात्समुपसृत्य शिष्याः प्रार्थयन्ते यदि सा प्रार्थना द्वितीयं द्वारम् । शिष्येषु प्रार्थनादरिद्रेषु सत्स्वपि तेषां दुर्गतिमवेक्ष्य जोषं स्थातु-मशक्तता या भवति सा तृतीयं निमित्तम् । भगवदाज्ञाऽपि माभूत् ; शिष्यप्रार्थनाऽपि मा भूत् ; शिष्यदुर्गत्यसहिष्णुताऽपि मा भूत् । स्वात्मधारणान्यथानुपपत्तिर्या भवति सा चतुर्थं निमित्तम् । एतदेव प्रधानं द्वारमत्राभिधीयते । भवनस्य पङ्किलत्वकरणम् आचार्यवर्येष्वप्यनपायम् । कथमिति चेत् ; * आह्लाद-शीतनेत्राम्बुः पुलकीकृतगात्रवान् । सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः * इत्युक्तरीत्या भगवद्गुणानु-भवजनितहर्षप्रकर्षमूलकैरश्रुपूरैः परितरं सर्वमपि पङ्किलं कुर्वन्ति परमभागवता इति हि प्रसिद्धम् । तमि-ममर्थं श्रीकुलशेखरसूरिः स्वसूक्ते द्वितीये दशके तृतीयगाथायामतिसुन्दरमाचचक्षे । * पङ्कदिग्धस्तु जटिलो भरतस्त्वां प्रतीक्षते * ( श्रीरामायणे ) इति भरद्वाजमहर्षिफणितौ पङ्कदिग्धत्वोक्तिहृदयमप्येतदेव हि । ईदृशी हि दशा भागवतोत्तमानां महत्तरसंपद्दाढ्यता ।

अथ [हिमिहतशिरसोऽस्मानित्यादि । धनुर्मासे वीथीषु स्थितानामासां वल्लवीनां हिमहतशिरस्कत्वं संभावितम् । आचार्यकुले तिष्ठतामन्तेवासिनां हिमहतशिरस्कत्वं नाम—सर्वविधतापहरसदर्थश्रवणेन शिशि-रोत्तमाङ्गत्वम् । स्वरूपानुरूपसदर्थवार्थश्रवणेन अहङ्कारममकारादिव्यपगमतः शिरसो नम्रत्वमेव तत् । ( क्रोधभूम्ना निहतलङ्केश्वरं मनोभिरामं रामं संकीर्तयन्त्यो वयं वर्तामहे; अथापि कुतस्त्वं प्रत्युत्तरं न ददा-सीति । मूलगाथायां पञ्चमषष्ठपादाभ्यामुच्यते । रामश्च कृष्णश्च अभिन्नमूर्ती इत्यभिसन्धिना एवमुच्यते । भगवान् दाशरथिः लङ्काधनार्थं रावणं व्यापादितवानित्ययमंशः सुप्रसिद्धः; अत्र क्रोधभूम्नेति हेतुकथनं किमर्थम् ; सततं सुप्रसन्नमुखारविन्दस्य रामचन्द्रस्य किमहो क्रोधोऽपि वर्तते ? इति काचन शङ्का जायेत ।

संक्षेपरामायणे नारदं महर्षिम्प्रति * को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवानित्युपक्रम्य प्रश्नमालिकाः कुर्वन् वाल्मीकिमुनिः 'जितक्रोधः कः' इत्यनुयुज्य, अनन्तरम् 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ?' इत्यपि अन्तिममनुयोगमकार्षीत्। आश्रितभक्तजनविरोधिविषये क्रोधाभावो हि महती न्यूनता स्यात् अनन्तकल्याणगुणगणशेवधेरपि भगवतः। तादृशन्यूनतापरिहारार्थमेवोक्तम् क्रोधभूम्नेति। लङ्केश्वरहननविषये रामस्य मनोभिरामत्वं किं नामेतिचेत्; अतिमानुषस्तवे * यत्त्वं कृतागसमरिं रघुवीर! वीक्ष्य विश्रम्यतामिति समाचिथ मुग्धमाजौ। कोऽयं गुणः कतरकोटिगतः कियान् वा कस्य स्तुतेः पदमहो बत कस्य भूमिः! * इति श्रीवत्साङ्कमिश्रैरनुगृहीतरीत्या * गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिञ्चरराज! लङ्काम्। आश्वास्य निर्याहि * इत्यतिमात्रानुकम्पाप्रकाशनपूर्वकं तादृशतीव्रापराधमपि दशाननं विसृष्टवानिति यत्तदेवेति वेदितव्यम्।

ध्वन्यर्थप्रणाल्यामिह वेदितव्यमेतत्; संकल्पसूर्योदये * दर्पोदग्रदशेन्द्रियाननमनोनक्तञ्चराधिष्ठिते देहेऽस्मिन् भवसिन्धुना परिवृते दीनां दशामास्थितः। अद्यत्वे हनुमत्समेन गुरुणा संबोधितार्थस्सुधीः लङ्कारुद्धविदेहराजतनयान्यायेन लालप्यते * इत्युक्तरीत्या, संसारार्णवपरिवृतदेहरूपलङ्कायां दशेन्द्रियात्मकवदनदशकविशिष्टक्रूरमनोरूपरावणेन भगवत्पादारविन्दसन्निधानाद्वियोज्य विनिहितं सीतात्मकमात्मानं जितेन्द्रियत्वसकलविद्याभिज्ञत्वरूपविशेषविशिष्टहनुमत्सधर्मा आचार्य एव हि विरोधिनिरसनपूर्वकं भगवदन्तिकं प्रापयति; तथाच स एवाचार्यवर इह लङ्केश्वरहन्तृमनोभिरामत्वेनापदिश्यत इति वेदितव्यम्। आचार्यकृतमहोपकारविशेषान् वयं कीर्तयामः; त्वमप्यस्माभिस्सह तान् कीर्तयितुमागत्य संगच्छस्वेत्याहूतं भवति

( कास्विदियं महती निद्रा ? इतः परमुत्तिष्ठ ) इति कथ्यते सप्तमपादेन। * अनादिमायया सुप्तानामस्मादृशां प्रतिबोधनाय आचार्यवरे अवतीर्णे सत्यपि हन्त का नाम मायास्वापप्रसक्तिः ? प्रबोधफलं सर्वैरप्यनुभोक्तव्यमित्युक्तं भवति। अथाष्टमपादस्य द्राविडगाथासन्निवेशे द्वेधा तात्पर्यं भवति। अस्मिन् व्रजे त्वद्व्यतिरिक्तास्सर्वा अपि प्रतिबुद्धास्समागता इति एकोऽर्थः। त्वद्गृहद्वारि वयमवतिष्ठमाना एवं सीदाम इति विषयोऽयं व्रजेऽस्मिन् सुप्रसिद्धोऽभूदित्यपरोऽर्थः॥ ... ... ... १२

---

## १३ त्रयोदशी गाथा—पुळ्ळिन्वाय्कीण्डानै.

( त्रयोदशगाथायाः पद्यम्। )

सर्वं स्त्रैणं प्रयातं व्रतभुवि बकवक्त्रच्छिदं पङ्क्तिवक्त्र-
च्छेत्तारं कीर्तयत्सत् समुदित उशना अस्तमैद्गीष्पतिश्च।
निष्क्रान्ताः पक्षिणोऽपि प्रियसखि! न कथं बुध्यसे शीतभीता
स्नातुं द्रागेहि पुण्ये दिन इति गृणती पातु गोदा धरित्रीम्॥ १३॥

अयि कमलकुसुमनिषण्णभ्रमरोपमेयलोचने! प्रतिमोपमेये!, बकासुरवक्त्रविदारणकारिणः दुष्टराक्षसेश्वरमवलीलया विनाशितवतश्च भगवतः कीर्तिं गायन्त्यो गत्वा सर्वा अपि गोपबालिका व्रतानुष्ठानस्थलीं प्राविशन्। शुक्र उदैत्; गुरुरस्तमैत्। पक्षिणश्च प्रणेदुः। प्रत्यूषे सुशिशिरजलाशयविगाहनमकृत्वा हन्त कुतः शयनमधिशयानाऽसि ? परमसात्त्विकः खलु कालोऽयम्। प्रत्येकानुभवरूपं चौर्यमुत्सृज्य अस्माभिस्सखीभिस्सह मिलित्वाऽनुभवितुमागच्छ भोः॥ इति मूलगाथार्थः॥

अधस्तनगाथायां कृष्णभगवत्संकीर्तनगन्धमन्तरेण श्रीरामचन्द्रभगवत्कीर्तनमकारि । तत्रापि स एव मनोभिराम इति विशेषितश्चाभूत् । एतेन व्रजे महान् विवादकोलाहलस्समजनि । आः कथं कृष्णकिशोरस्यैकान्तिकविहारास्पदे व्रजे दैवतान्तरपर्यायभूतस्य रामचन्द्रस्य कथा कथ्यते ? कथं वा कृष्णापेक्षया तस्य मनोभिरामता च निगद्यते ? किमिदमन्याय्यं नाम ! अयोध्यायां यः कोऽपि कृष्णनाम कथयतिचेत् अथ तत्रत्याः किं नु जोषमवतिष्ठेरन् ? व्रजेऽस्मिन् रामकथाकीर्तनं यद्यभिलष्यते तर्हि कामं बलरामकथाकीर्तनं क्रियताम् ; लङ्काध्वंसिरामकथाकीर्तनमत्र कथमुपपद्यताम् ? अथ च विमृशेम, रामः कथंनु मनोभिरामो भवितुमर्हति ! कृष्ण एव सत्यं तादृशो भवितुमर्हति । आत्मगुणैर्देहगुणैश्च खलु मनोभिरामता वक्तव्या । एतैरुभयैश्च गुणैः अस्मदीयः कृष्ण एव राममतिशेते । दूतकृत्यकरणपर्यन्तसौलभ्यसौशील्यादिकं गीताशास्त्रोपदेशकत्वंच रामे नैव खलु लब्धावकाशम् । अथ च * मणिविडम्बिनि तस्य मनोहरे वपुषि मग्नमना मुनिमण्डली । जपममुञ्चत होममुञ्चत व्रतममुञ्चत वेदममुञ्चत ॥ * यथार्हं केशवे वृत्तिमवशाः प्रतिपेदिरे * इत्यादिभिः प्रमाणैः प्रथितं दिव्यसौन्दर्यलावण्यादिकं च रामे दुर्निरूपम् । अथ वा राम एव कामं भवतु मनोभिरामः; स्वकीयः पतिः कुरूपी मूर्खश्चेति किमहो सुन्दरो मेधावी च परपुरुषः स्पृहणीयो भवेत कुलवनितानाम् ? * यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति * इति खलु श्रुतिश्चाम्नासीत्......इत्येवमुच्चावचानि स्पर्धावचांसि हंहो ! उद्वेलं विजजृम्भिरे । रामश्च कृष्णश्च व्यक्तिभेदशालिनावपि धर्म्यैक्यविभासुरौ अत एव सुतरामभिन्नावित्यमुमर्थं सम्यगवधारितवत्यो वृद्धगोपिकास्सरभसमुपसृत्य "हन्त कोऽयं शुष्कविवादः ! रामः कः, कृष्णः कः? उभावप्येकमेव खलु दैवतम् । * रामो नाम बभूव हुम् तदबला सीतेति हुम् तौ पितुर्वाचा पञ्चवटीवने विहरतस्तामाहरद्रावणः । निद्रार्थं जननीमुखादिति कथां कृष्णस्य संशृण्वतः सौमित्रे क्वधनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु नः ॥ * इति श्लोककीर्तितां कृष्णस्य शैशवचर्याम् किंनु विस्मृतवत्यो भवत्यः? अलम् अतिमात्रपरिहास्येनानेन शुष्कविवादेन । असकृत् कृष्णकिशोरमाह्वयन्ती यशोदादेवी च "वामनमूर्ते अत्रागच्छ; काकुत्स्थ भगवन् अत्रायाहि; गोपालकृष्ण ! इह समायाहि" इति खल्वाह्वयति । तदेतदखिलं विस्मृत्य किमित्यकाण्डे विवादं विवर्धयध्वे ? नैतन्मनागप्युचितं नाम" इति परमार्थं प्रकाश्य सर्वासां मनसि समाधानमुदपादयन् । अथ रामकृष्णयोरुभयोरपि दिव्यमूर्त्योर्वैभवकीर्तनं कर्तव्यमिति संकल्पस्समजायत गोपीनाम् । व्रजोऽयं कृष्णेन भगवता धन्योऽभूदिति हेतुना तस्य कृष्णस्य यशसां प्रथमतो गानं कर्तव्यम्; अथ च रामगुणगानं कर्तव्यमिति च व्यवस्था व्यधायि । सद्य एव गोष्ठीद्वयं विभक्तम् । पुरस्तादेका सुमहती गोष्ठी कृष्णचरितकीर्तनपरा गच्छति । पश्चादपरा गोष्ठी रामचरितकीर्तनपरा प्रयाति । मूलगाथायां प्रथमतः पादद्वयेन तदिदमुच्यते ।

बकासुरवक्त्रच्छेत्तारं कृष्णकिशोरं गायन्ति भूयस्यः । दशकन्धरध्वंसनपटीयसो रामचन्द्रस्य कीर्तिम् गायन्ति बह्व्यः । तासां गानप्रणाली च निबध्यतेऽत्र भक्तजननित्यानुसन्धानाय ।

## श्रीकृष्ण कीर्तनपरा एवं नाम गायन्ति ।--

( यदुतिलक यदुतिलक यदुतिलककृष्ण ! )

१. अतिमधुर निनदभर मुरलिधर कृष्ण
२. मनुजतनु परिकलन कुतुकधर कृष्ण
३. मुदिरसम ललितनिज तनुसुषम कृष्ण
४. जलजसम नयनयुग सुभगतर कृष्ण
५. कटितट कनकमय शुभवसन कृष्ण
६. कृतसुकृत जनहृदय शुभनिलय कृष्ण
७. कटुहृदय दितिजकुल हतिचटुल कृष्ण
८. प्रणतजन मुखकमल विकसनद कृष्ण
९. अतिविपुल धरणिभर परिहरण कृष्ण
१०. सकलमुनिजनविनुत शुभचरित कृष्ण
११. देवकीजठरधन्यताकरण भावनाविवश माधव

१२. दुग्धवारिनिधि सद्मवासरुचि हीनमानसक माधव
१३; धन्यकृत्य वसुदेवकौतुक भरप्रपूर्तिकर माधव
१४. पुण्यलभ्य मधुरापुरीवर निषेवणादरण माधव
१५. शङ्खचक्रमुख दिव्यहेतितति दर्शितस्वगुण माधव
१६. दिव्यभव्य वपुरीक्षणोन्मुदित तातमातृनुत माधव
१७. हेतितल्लज निगूहनार्थिपितृ शासनप्रवण माधव
१८. क्षीणभाग्य वसुदेवमस्तधृत नीतगोपकुल माधव
१९. भव्यभाग्यनिधि भोगिराजफण वाटिकाविलय माधव
२० हन्त हन्त बत हाबतेति वसुदेवखेदपद माधव
२१. अस्तु भद्रततिरस्तु भद्रतति रित्यमर्त्यनुत माधव
२२. निस्समाभ्यधिक हर्षसागर निमग्ननन्दसुत माधव
२३. नन्दनन्दन विनोदवल्लव विहारमानुषरमाधव
२४. रुक्मिणीरमणरुक्मिणीरमणरुक्मिणीरमण माधव !

## अथ श्रीरामकीर्तनपरा एवं नाम गायन्ति।—

( रघुतिलक रघुतिलक रघुतिलक रामा ! )

१. दशवदन भयविवश सुरशरण राम
२. दिवसकर महितकुल कृतजनन राम
३. सुदशरथ कृततुरग सवनफल राम
४. भरतमुख सहजवर सहचरित राम
५. कुशिकसुत मुनिसवन रिपुहनन राम
६. मुनिकथित विदितबहु चरितगण राम
७ चरणरज उपजनित मुनिदयित राम
८. जनकनृप दुहितृकुच तटमुदित राम
९. मदभरित परशुमुनि परिभवद राम
१०. निजनगर कृतवसति जनविनुत राम
११. अनृत भयचकितपितृ वचनवश राम
१२; विपिनतट विहतिरुचि भरभरित राम
१३. परिचरण रुचिविवश सहजनुत राम
१४. क्षितिदुहितृ हृदयभय परिहरण राम
१५. सचिववर समुपहृत रथचलित राम
१६. अनुचलित पुरजनद्रगतिपतित राम
१७. परमसख पदनिहित गुहसहित राम
१८. पितृनिधन निशमनज परितपन राम
१९. नतभरत शिरसिकृत पदमकुट राम
२०, अपचरित नतबलिभुगवनकर राम

( राम राघव राम राघव राम राघव राघवा ! )

२१. चित्रकूट विहारहर्षित योगिमंडल राघव
२२. अत्र चित्रमनुग्रहं मयि दर्शयन् मिथन राघव
२३. रावणेरित राक्षसार्दित योगिवन्दित राघव
२४. दुस्सहाघ विराधमर्दन विश्रुतप्रथ राघव
२५. धन्यहृच्छरभङ्गयोगि निरीक्षणोत्सुक राघव
२६. कुम्भसंभव योगिदर्शित हेतिभूषित राघव
२७. धन्यलक्ष्मण निर्मितोटज वासहर्षित राघव
२८. गृध्रराज जटायुवीक्षणहृष्टमानस राघव
२९. काममोहित राक्षसीमुख भङ्गशासन राघव
३०. दुष्टहतखर दूषणादि वधोदितप्रथ राघव
३१. हैमदुर्मृग लिप्सुभूमि सुतामनोरम राघव
३२. दूरगतवर कृत्रिमक्रिय मायिमारण राघव
३३. राक्षसेश हृतप्रियाविरहोदितभ्रम राघव
३४. दुर्वचश्रम दुस्सहामित दुःखनिर्भर राघव
३५. धन्यजन्म जटायुसंस्कृति पुण्यभाजन राघव
३६. मुक्तशाप कबन्धदत्त वचःप्रहर्षित राघव
३७. भक्तियुक्त शबर्युपाहृत सत्फलाशन राघव
३८. मत्तहंस मयूरदर्शन दूनमानस राघव

( रघुनन्दन रघुनन्दन रघुनन्दन रामा ! )

३९. भयविह्वल दिनकृत्सुत कपिवीक्षित राम
४०. सविधागत हनुमद्वच उपहर्षित राम
४१. कपिदर्शित वरभूषण कृतवंदन राम
४२. शुचिसाक्षिक कृतसौहृद कपिराट्प्रिय राम
४३. कृतदुन्दुभि तनुधर्षण पदपङ्कज राम
४४. त्रिचतुस्तरु परिवेधन पटुसायक राम
४५. मघवत्सुत कपिमर्दन कृतकाज्ज्वल राम
४६. कृतलक्षण कपियोधन कपिमारण राम
४७. अभिषेचित दिनकृत्सुत कपिसादृत राम
४८. गिरिगह्वर कृतलक्ष्मण वरिवस्यन राम
४९ अवबोधित शरदागम कपिवान्दत राम
५०. हनुमन्मुख कपितल्लज परिचोदक राम
५१. स्वशुभाङ्गुलि वरभूषण परिदायक राम
५२. दयिताशुभ वचनागम समयेक्षक राम

( रघुतिलक रघुतिलक रघुतिलक रामा )

५३. बृहदुदधि तरणपटु कपिविनुत राम
५४. हतसुरस पवनसुत नुतिमुदित राम
५५. रजनिचर नगरगत कपि विनुत राम
५६. क्षितिदुहितृ निलयगत कपिशरण राम
५७. धरणिरुह दलपिहित कपिविनुत राम
५८. महिदुहितृ सुखजनक कपिहृद राम
५९. तरुनिवह दलनपटु कपिशरण राम
६०. दशवदन विदितबल कपिविनुत राम
६१. अभिभवितृ रिपुहनन कपिविनत राम
६२. असुरपपुर दहनपटु कपिमुदित राम
६३. कपिनिवह सविधगत कपिविनुत राम
६४. मधुवनग कपिचरित भृशमुदित राम

( राम राघव राम राघव राम राघव राघवा )

६५. दृष्टभूसुत हृष्टमर्कट दृष्टिहर्षित राघव
६६. तत्प्रदर्शित मस्तभूषण वीक्षणोज्ज्वल राघव
६७. जीवितप्रद मारुतिप्रिय गात्रमर्दन राघव
६८. सद्विभीषण संश्रयोदित हर्षपुष्कल राघव
६९. स्वप्रपत्ति पराङ्मुखोदधि शोषणोद्यत राघव
७०. प्रार्थितक्षम सागरोदित सेतुबन्धन राघव
७१. कीशबृन्द समाकुलाक्षप पत्तनागत राघव
७२. इन्द्रजिद्वध दक्षलक्ष्मण नित्यसेवित राघव
७३. कुम्भकर्ण मुखामिताशरहन्तृसायक राघव
७४. लोककण्टक रावणेक्षित सत्यविक्रम राघव
७५. तद्भ्रूगल भव्यसूत्र विसर्जनक्षम राघव
७६. सद्विभीषण सत्कृताशर राज्यपालन राघव
७७. वह्निशोधित मैथिलीपरिरम्भणोत्सुक राघव
७८. आर्तसद्वरनातिहृद्दृढगात्रमर्दन राघव
७९. दिव्यपीठनिषण्णभूमिसुतासमन्वित राघव
८०. भ्रातृवर्ग समन्वयोज्ज्वल दिव्यदर्शन राघव
८१. पुण्यतीर्थ कृताभिषेचन हृष्टमानस राघव
८२. भक्तसत्कृति दर्शितामित चातुरीभर राघव
८३. शिष्टरक्षण दुष्टशिक्षण नित्यदक्षिण राघव
८४. वादिभीकर वंशसंभव दासकीर्तित राघव ॥

## पुनरपि कृष्णकीर्तनपरा एवं गायन्ति—

मधुरवेणुप्रणादन महितवेषप्रकाशन जलदसच्छायविग्रह जडजनध्वान्तदुर्ग्रह ।
सुभगपीताम्बरोज्ज्वल सुकृतिचित्तस्थलाचल जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ १ ॥

कलितदेवक्यनुग्रह गलितदुग्धाब्धिसद्गृह सुवसुदेवात्मसंभव सुमथुरापुर्युपागत ।
करलसच्छङ्खचक्रक सुररिपुच्छेदविक्रम जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ २ ॥

स्वपितृकारागृहोद्भव सवितृजैत्राननप्रभ धरणिभारक्षयोदय सुरजनप्रोल्लसद्धृदय ।
प्रथितरङ्गिण्युद्धदय कथितवाक्पालनव्रत जयजय श्रीयदूद्वह जयजय श्रीशकेशव ॥ ३ ॥

अशरणावाप्तदीक्षित पृथुरणाक्रान्तपाण्डव हरविधीन्द्राद्यभिष्टुत चकितमातापितृस्तुत ।
व्रजविहाराधिकौत्सुक निजमनोभीष्टवत्सक जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ ४ ॥

घनतमोरात्रिनिर्गत फणिफणास्तोमरक्षित पटुयशोदास्तनन्धय कटुमनःकंसवञ्चक।
सुभगनन्दालयप्रिय सुकृतिचेतोहरक्रिय जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ ५ ॥

अतुलसौन्दर्यमन्दिर विपुललावण्यसुन्दर दलितजीमूतडम्भक जलधिडिम्भाख्यडिम्भक।
सकलचिन्तापहारक विनतहृत्तापहारक जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ ६ ॥

सुभगगोपालबालक सकलभक्तौघपालक सततसाहस्रमन्मथ सुतनुचिन्नैकमन्मथ।
सुरगणप्रत्तभूषण सुरुचिरस्वादुभाषण जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ ७ ॥

कुटिलहृत्पूतनावधपटुगिति प्राप्तकीर्तिक शकटदैतेयभञ्जनचरणपङ्करुहद्वय।
कटुतृणावर्तमारण चटुलभुयःपराक्रम जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ ८ ॥

कलितमृद्भक्षणानन नियतमद्रक्षणादर वदनसंदर्शिताखिल बहुलमायाविचेष्टित।
अमितलीलाविनोदक सकलतापापनोदक जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ ९ ॥

यमलवृक्षावमर्दन धनदपुत्राघमोचन फलदगोपीमनोहर वनफलादानसादर।
मसृणबर्हावतंसक सुतनुगर्हार्हचेष्टित जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ १० ॥

मुषितहैयङ्गवीनक मुषितगोपीदुकूलक धृतबृहद्दामबन्धन कृतमहच्छिन्नबन्धन।
अमितसौलभ्यसागर बहुलसौशील्यमन्दिर जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ ११ ॥

प्रतिगृहख्याततस्कर नतभयध्वान्तभास्कर मधुरचारित्रमोहन महितगोवृन्ददोहन।
मधुपबृन्दाभकुन्तल सकलसंतापकृन्तन जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ १२ ॥

विपुलबृन्दावनस्थलविहरणानन्दतुन्दिल ललितहल्लीवलप्रिय सुतनुवासोहृतिप्रिय।
अपयशस्स्तोमकीर्तिक शुभयशस्स्तोममूर्तिक जयजय श्रीयदूद्वह जयजय श्रीश केशव ॥ १३ ॥

## पुनरपि रामकीर्तनपरा एवं गायन्ति--

दिविषदभ्यर्थितोदय भुवि समुद्गतवैभव महितवाल्मीकिकीर्तित महितलख्यातकीर्तिक।
अहितरक्षोवधोद्यत नियतसद्रक्षणव्रत जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ १ ॥

दशरथानन्दवर्धन दशमुखध्वान्तभास्कर कुशिकपुत्राध्वरावन पिशितभुग्वर्गनाशन।
जनकजाचित्तहर्षण परशुरामप्रधर्षण जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ २ ॥

अखिलसंस्तुत्यसद्गुण मकुटभूषार्हमस्तक पितृवचःपालनोत्सुक विपिनयात्रासमुत्सुक।
सहजसौमित्रिसेवित जनकपुत्रीसमन्वित जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ ३ ॥

गुहसुहृत्प्रेमहर्षित मुनिभरद्वाजपूजित सुभगसच्चित्रकूटग भरतविन्यस्तपादुक।
बलिभुजि क्षिप्तसायक तदनु तत्प्राणदायक। जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ ४ ॥

मुनिजनस्तोमसंस्तुत कृतविराधोपमर्दन सुशरभङ्गावलोकित सुदृढसन्त्यप्रतिश्रव।
विमलगोदावरीतटविहरणोत्साह संभृत जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ ५ ॥

कलितगृध्रेशदर्शन मुदितसौमित्रिकिंकृत विकृतरक्षोवधूस्तुत खरवधख्यातविक्रम।
कुमतिमारीचघातुक विहगसंस्कारकारक जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ ६ ॥

दनुकबन्धस्तुतिप्रिय नतशबर्याप्तसत्फल विपुलपम्पासरित्तटकलितवातात्मजेक्षण।
चकितसुग्रीवहर्षण कलिततद्वैरिधर्षण जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ ७ ॥

हनुमदुक्तिप्रहर्षित हनुमदाश्लेषणोत्सुक दशमुखभ्रातृवन्दित जलनिधिप्रार्थनप्रिय।
उदधिसेतुप्रचारक निखिलरक्षःप्रणाशक जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ ८ ॥

दशमुखध्वंसिसायक तदनुजानुग्रहोज्ज्वल भरतसमोदवर्धन मकुटभूषाविभूषित।
सकलसत्कारकारक कुशलवश्रावितप्रथ जयजय श्रीरघूद्वह जयजय श्रीरघूत्तम ॥ ९ ॥
प्रथितवादीन्द्रभीकरगुरुकुलोत्पत्तिशालिना विलसदण्णङ्गराह्वयविबुधदासेन निर्मिताम्।
रघुवरानुग्रहोदितनुतिमिमां नित्यमुद्गृणन् सपदि पश्यन् रघूद्वहमनिशमानन्दमाप्नुयात ॥ १० ॥

एवमेवमत्याश्चर्यगानं कुर्वत्यो गोपाललललना व्यूहद्वयात्मना गच्छन्तीति गाथायामस्यां पादत्रयेण कथ्यते।

कृष्णजिघांसया कंसप्रेरितेषु दैत्येष्वेको बकरूपधारी सन् जलप्रान्तेष्वशनगवेषणतत्परबकेष्वन्यतम इव सन् कृष्णद्रोहबुद्ध्या समुपस्थितः। तस्य तत्त्वं विदन् कृष्णस्तदास्यं विदार्य तं प्राणैर्वियोजयामासेति बकासुरवधकथासंक्षेपः। अत्रायं यादवाभ्युदयश्लोकोऽनुसन्धेयः— * सपक्षकैलासनिभस्य गोपा बकस्य पक्षानभितो बबन्धुः। वने तदन्यानपि घोरवृत्तीन् चेप्तुं प्रवृत्ता इव केतुमालाः * इति। श्रीकृष्णकृतेष्वति मानुषचेष्टितेषु भूयस्सु सत्सु बकवधात्मकमिदं लघिष्ठं कर्म कुतः कीर्त्यत इति शङ्का माभूत्; भगवत्श्चेष्टितेषु लघिष्ठगरिष्ठविचारं भक्ता नैव कुर्वन्ति; * इङ्गितं निमिषितं च तावकं रम्यमद्भुतमतिप्रियंकरम्। तेन कंसमुखकीटशासनं सुन्दरालयकमपि प्रशस्यते ॥ * इति सुन्दरबाहुस्तवे श्रीकूरनाथगुरुवरोक्तरीत्या कृष्णेन कृतं कर्म यद्वा तद्वा भवतु; तत्कृतत्वेनैव हेतुना तदीयचेष्टितानि सर्वाण्यपि निर्विशेषमाद्रियन्ते भक्तजनैरिति वस्तुस्थितिः। कृष्णकृतो बकवधो रामकृतरावणवधापेक्षयाऽत्यन्तं लघीयानिति बहवो भावयेयुः। वस्तुतस्तु अप्रमेयशौर्यवीर्यपराक्रमनिधेर्भगवतो रावणवधो वा बकवधो वा कंसवधो वा कीटनिबर्हणमात्रमेवेति ध्येयम्। अत एवात्र गाथायां द्वितीयपादे " दुष्टराक्षसेश्वरमवलीलया विनाशितवतः " इति कथितम्।

ननु रावणस्य अवलीलया विनाशितत्वकथनं कथमिव युज्यते? रावणवधे महान्तः प्रयासा रामचन्द्रेणानुभूता इति हि श्रीरामायणतोऽवगम्यते; अगस्त्यमहर्षिसकाशादादित्यहृदयोपदेशग्रहणपर्यन्ताः खलु प्रयासा अन्वभूयन्त। तथा नाम प्रयासभूम्ना कृते रावणवधे अवलीलया कृतत्वकथनं न युज्यते हीति शङ्का माभूत्, विभीषणपरिग्रहकाले * पिशाचान् दानवान् यक्षान् पृथिव्यां चैव राक्षसान्। अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर ! * इत्युक्तवता, अथच * अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः... निशास्तिस्रोऽतिचक्रमुः * इत्युक्तरीत्या त्रिरात्रव्यापिनि सागरोपवेशने कृते सत्यपि अनुपस्थितां सागरदेवतामुद्दिश्य प्रकुपितेन * चापमानय सौमित्रे शरांश्चाशीविषोपमान्। सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवंगमाः * इति परुषमुक्तवता समनन्तरमेव सुप्रसन्नेन सागरदेवताप्रार्थनया * कूलेऽब्धेः किल दक्षिणस्य निवसन् दूरोत्तराम्भोधिगान् दैत्यान् एकपतत्रिणाऽच्छिनदितीयं किंवदन्ती श्रुता * इति (सुन्दरबाहुस्तवे) श्रीकूरनाथगुरुवरोक्तरीत्या समुद्रराजशत्रुगणनिलयभूतं द्रुमकुल्यनामकं बहुयोजनदूरवर्तिनं स्थानविशेषमुद्दिश्य शरमेकं प्रयुज्य तत्रस्थितान् दैत्यान् क्षणमात्रे निषूदितवता च रामचन्द्रेण लङ्कांप्रति बाणस्यैकस्यैव तस्मादेव देशात्प्रयोगतः क्षणमात्रे कृत्स्ननिशाचरनिवहनिषूदनस्य कर्तुं शक्यत्वेऽपि तथानाम अकरणम् प्रयासशतानुभवनंच स्वकीयभूयस्तरगुणविशेषप्रपञ्चनार्थमेवेति वेदितव्यम् ॥ * आनयैनं हरिश्रेष्ठ ! दत्तमस्याभयं मया। विभीषणो वा सुग्रीव ! यदिवा रावणस्स्वयम् ॥ * इत्युक्तवतो रामचन्द्रस्य रावणे जिघांसा नासीत्, अपि तु भृशमनुजिघृक्षैवासीदिति सुगमम्। * यो वज्रपाताशनिसंनिपातान्न चुक्षुभे नापि चचाल राजा। स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ * इत्युक्तियोग्यायां दशायां स्थिते सति रावणे * गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज ! लङ्काम्। आश्वास्य निर्याहि * इत्यनुगृह्य मुक्तवता रामचन्द्रेण प्रकाशितो गुणविशेष एक एव ह्यलमनुभवरसिकानां यावज्जीवमनुभवितुम्। * यत्तादृशागसमरिं रघुवीर! वीक्ष्य विश्रम्यतामिति मुमोचिथ मुग्धमाजौ। कोऽयंगुणः कतरकोटिगतः कियान् वा कस्य स्तुतेः पदमहो बत कस्य भूमिः ॥ * इति [ अतिमानुषस्तवे ] खलु गुणविद्धा महान्तोऽनुसंदधते। तत्तादृशानेकगुणगणप्रकाशनार्थमेव कृतावतारस्य भगवतो रामचन्द्रस्य रावणादिवधे कृतमालस्यं न तदीयशौर्यवीर्यपराक्रमन्यूनताशङ्कावहं भवितुमर्हतीति अलं पल्लवितेन ॥

कृष्णस्य रामस्य च कीर्तिं गायन्त्यो गोपालबालिका अखिला अपि व्रतानुष्ठानौपयिकं साङ्केतिकस्थलविशेषं प्रविष्टा इति बहिस्स्थिताभिर्गोपीभिरुक्तं श्रुतवती अन्तस्स्थिता गोपी प्राह-' यद्यपि बालिकास्ता यथायथं कालस्यानवबोधेन अकाले गतास्स्युः, तथाऽपि विवेकिनीभिरस्माभिस्तथा न गन्तव्यमकाले; समुचिते काले गच्छेम; शुक्रोदय आसीत्किम्? पश्यत ' इति । अथ गोपिकाः प्राहुः नक्षत्रमण्डले दैत्यगुरोरुदितत्वम् देवगुरोरस्तमितत्वंच ॥ अत्र केचिद्विचारमारचयन्ति-धनुर्मासे शुक्रस्योदयः कदा ? गुरोरस्तमयः कदेति । वस्तुतो व्यर्थोऽयं विचारः; लौकिकाः खलु जनास्तत्रतत्र शुक्रोदयस्य प्राभातिकलक्षणत्वं कथयन्तीत्येतावन्मात्रं जानन्त्यो गोपाङ्गना इदमूचुरिति ग्रहीतव्यम् । नक्षत्रताराग्रहचारविशेषान् वयमेव यथावन्न जानीम इति स्थिते का कथा वामदक्षिणभुजभिदानभिज्ञानां व्रजयोषिताम् ।

अथ पक्षिणां प्रणादं द्वितीयाभिज्ञानत्वेन कथयन्ति । गोपीनां प्रबोधनोपक्रमे ( षष्ठगाथायाम् ) कथितमिदमभिज्ञानं कथमिव पुनरपि कथ्यत इति शङ्का माभूत्, वृक्षषण्डस्थकुलायेषु जातः पक्षिणां प्रणादः पुरा प्रोक्तः; इह तु अशनार्जनकामनया बहिः विशीर्णानां विहगानां कलकलः कथ्यत इति ग्रहीतुं योग्यम् । एवमुक्ते सत्यपि सहसा समुत्थाय अनागतां तां प्रति कथयन्ति गोपिकाः—भूयसीष्वस्मासु बोधयन्तीषु सतीष्वपि अन्तरेव जोषमवतिष्ठसे त्वम्; तदिदं स्वकीयनयनसौन्दर्याभिमानभूम्ना खलु; सत्यमेतादृशसौन्दर्यमस्ति तावत् त्वयि; अनेन सौन्दर्येण भगवन्तं वशीकृत्य तस्यास्माभिरप्यनुभोक्तव्यतासंपादनमेव हि युक्तम्; परमपावनोऽयं समयविशेष इत्यपि हन्त त्वया नावहितम्; जलाशये शिशिरे गाढमवगाह्य स्नातुं योग्ये समयविशेषेऽप्यस्मिन् अहह तल्पमधिशेषे; ' इदानीं त्वया निद्रा नैव क्रियेत, अपि तु भगवद्गुणानुभव एव क्रियेत' इति तु वयं जानीमः; अस्माभिस्सह मिलित्वा कर्तव्यस्य गुणानुभवस्य रहसि प्रत्येकशः करणं चौर्यप्रायमेव खलु; अनुचितमिदमह्नाय विहाय क्षिप्रमस्माभिस्सह संमिलिता भवेति ॥

अथ ध्वन्यर्थविवरणम् ॥ गाथायामस्यां संबोधनद्वितयं वर्तते नयनसौन्दर्यबोधकं पातिव्रत्यावबोधकं च । एतेन सदाचार्यस्य ज्ञानसम्पत्समृद्धत्वं पारमैकान्त्यं च प्रतिपादितं भवति; अनन्यदैवत्वमेव हि पातिव्रत्यम्, तदेव च पारमैकान्त्यम्, भगवद्विस्मरणे सत्यपि देवतान्तरस्मरणवैधुर्यपर्यवसितम् । तथाचैतादृशगुणद्वयाभिरामस्सदाचार्यस्संबोध्यत इति सिद्धम् । कृष्णकथां रामकथां च कीर्तयन्तो भक्तजना व्रतस्थलीं प्रविविशुरिति कथनेन-श्रीविष्णुपुराण श्रीभागवतश्रीरामायणादि प्रवचनश्रवणकुतूहलिनस्सच्छिष्याः प्रवचनार्थपरिकल्पितमास्थानमण्डपमध्यासत इत्युक्तं भवति । उभयवेदान्तरहस्यग्रन्थप्रवचनस्थलस्य " पावैक्कळम् " इति साङ्केतिकं नामधेयम् । अथ असुरगुरोरुन्नतेः सुरगुरोरवनतेश्च कथनेन-❀ भविष्यत्यधरोत्तरमित्युक्तिसाफल्यावहे एतादृशे कलिसाम्राज्यकाले हे आचार्यमणे ! भवदुपदेशोऽत्यावश्यकः इत्युक्तं भवति । पक्षिणां कोलाहलस्य प्रत्यभिज्ञापनेन उच्चैर्गतिप्रेप्साशालिनां सच्छिष्याणां मनोरथानामतटाः प्रवाहास्समेधन्त इति सूचितं भवति । " शिशिरे जलाशये गाढावगाहनमकृत्वा किं ननु शेषे ? " इति कथनेन प्रवचनावश्यकता सूचिता भवति; प्रवचनमकुर्वन्तो ये स्वयं ग्रन्थावलोकनं कुर्वते तेषां तावत् ग्रन्थेषु गाढावगाहनं न सिध्यति; प्रवचनार्थं तदवलोकनप्रवृत्तौ तु गाढावगाहनस्यावर्जनीयता भवति; यतो ह्याक्षेपसमाधानादिषु परिपूर्णसामर्थ्यसंपादनाय टीकाटूकादीनामपि परिशीलनं कृतं भवेत् । तथाच, शिष्येभ्यः प्रवचने रुचिं विहाय किमर्थं स्वानुभवमात्रव्यग्रता क्रियते ? इत्युक्तं भवति । समीचीनोऽयं समय इति कथनेन-❀ वक्ता श्रोता च दुर्लभ इत्युक्तरीत्या वक्तुः श्रोतुश्च दौर्लभ्यमादधाने कालेऽस्मिन् तादृशदौर्लभ्यव्यपगमोऽधुना संजात इति हेतोः कालस्यास्य अलभ्यलाभता प्रोक्ता भवति । समुत्कण्ठितैः शिष्यैस्सहानुभवं विहाय स्वात्मनैव केवलमनुभूयत इत्येतत् चौर्यम्; तन्माभूदित्युपसंहृतम् ॥ ... ... ( १२ ).

---

## १४. चतुर्दशी गाथा—उङ्गळ्पुळैक्कडै.

* चतुर्दशगाथापद्यम् *

प्रत्यूषेऽशेषगोपीः अहमिह सहसोत्थापयेयं पुरस्तात्
इत्युक्त्वा किं नु शेषे ? सखि ! तव सदने निष्कुटे दीर्घिकायाम् ।
कल्हारं फुल्लमासीत्, यतय उपगताः किङ्कराः कुञ्चिकाढ्याः
किं ते व्रीडाऽपि नोदैदिति कथितवती भातु मे वाचि गोदा ॥ १४ ॥

पुरस्तादेवाहमुत्थाय युष्मान प्रबोधयेयमिति कृतप्रतिज्ञे देवि ! युष्मदीयनिष्कुटोद्यानस्थवापिकायां कल्हाराणि विकसितान्यभुवन्; काषायाम्बरधारिणः शुभ्रदन्तपङ्क्तयस्तापसाः स्वकीयदेवालयसमुद्घाटनाय कुञ्चिकाहस्ताः प्रयान्ति । अयि निर्लज्जे ! हे वाग्वैभवशालिनि ! शंखचक्रधरदिव्यपाणितलं पङ्कजविलोचनं भगवन्तं कीर्तयितुमुत्तिष्ठ तावत ॥ इति मूलगाथाविवर्तः ॥

'अहमेव पुरस्तात्प्रबुध्य समागत्य सर्वा अपि गोपीः प्रबोधयिष्ये' इति पूर्वेद्युः स्वात्मना कृतां प्रतिज्ञां विस्मृत्य निद्राविवशां काम् गोपिकां प्रतिबोधयन्ति गाथयाऽनया । प्राभातिकान्यभिज्ञानानि कतिपयानि कथ्यन्तेऽत्र । कल्हारपुष्पाणां विकसितत्वं कुमुदकुसुमानां मुकुलितत्वं च प्रभातचिह्नतया प्रथमतो निगद्यते । सर्वत्र वापिकासु ईदृशी परिस्थितिरिति तावद्वक्तव्यम्; वस्तुतः प्रभातकालिकं कार्यं सर्वत्रापि हि समरूपं भवति । अधस्तात्सप्तमगाथायां भरद्वाजपक्षिणां सार्वत्रिकः कलकलः किं न श्रुत इति कथितम्; उपरिष्टाच्च अष्टादश्यां गाथायां "सर्वत्रापि कुक्कुटास्समागत्य कूजन्ति" इति वक्ष्यते । एवमत्रापि सर्वत्रेति वक्तव्ये तथाऽनुक्त्वा "युष्मदीयनिष्कुटोद्यानस्थवापिकायाम" इति कथनं कथमिह युज्यते ? गृहान्तःप्रवेशमलभमाना द्वारि क्लिश्यमानाश्चेता गोप्यः स्वप्रतिबोध्यमानगोपिकागृहनिष्कुटस्थोद्यानसन्निवेशं कथमिव द्रष्टुं प्रभवन्ति ? असंभवपराहतं ह्येतत्; कथमिदमुच्यते ? इतितावच्छङ्का संजायते । अत्रोच्यते । "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति वाचस्पतिमिश्रोक्तरीत्या प्रमाणेषु अनुमानस्यैव प्राधान्यमिच्छन्ति तार्किकाः । "प्रत्यक्षमेकं चार्वाकाः" इत्युक्तरीत्या चार्वाकास्तु प्रत्यक्षस्यैव प्रामाण्यमिच्छन्ति । वैदिकदर्शनधुरन्धरास्तु प्रत्यक्षस्य अनुमानस्य शास्त्रस्य च प्रामाण्यमभ्युपयन्ति । यद्यपि शास्त्रतुल्यप्रामाण्यं प्रत्यक्षानुमानयोर्नाङ्गीकुर्वन्ति, तथाऽपि प्रबलप्रमाणान्तरजन्योपमर्दरूपबाधविरहितस्थलेषु प्रत्यक्षानुमानयोरपि प्रामाण्यस्वीकारः स्थितः । अस्यां गाथायां प्रत्यक्षानुमानशब्दानां प्रामाण्यस्वीकारो द्योत्यते । दिव्यप्रबन्धस्यास्य शास्त्ररूपत्वादपि विषयस्यास्यात्र विनिवेशनमुचितमेव हि ॥ 'पुरस्तादेवाहं युष्मान् प्रबोधयेयमिति प्रतिश्रुतवती सेयं गोपिका' इति प्रकाशनेन शब्दप्रामाण्यं प्रास्तावि; आप्तोच्चरितवाक्यं हि शब्दः ॥ "काषायाम्बरधारिणो यतयः प्रयान्ती"ति प्रदर्शनेन प्रत्यक्षप्रामाण्यं प्रास्तूयत परिशिष्टोऽनुमानप्रामाण्यप्रस्तावः "युष्मदीयनिष्कुटोद्यानस्थवापिकायाम्" इत्यादिना क्रियते । सार्वत्रिकवाप्युद्यानगतकल्हारोन्मीलनकुमुदनिमीलनरूपहेतुना अदसीयनिष्कुटोद्यानगतकल्हारोन्मीलनकुमुदनिमीलनसाधनं क्रियत इति वदितव्यम् । तथाचानुमानिकतयैवैतदभिधीयत इति सिद्धम् ॥ एवमभिधानस्य प्रयोजनं शास्त्रार्थविशेषसमुद्बोधनमिति च सिद्धम् ॥

कथितमिदं प्राथमिकं प्राभातिकलक्षणं श्रुतवती अन्तस्स्थिता गोपिका 'बहिरेवावतिष्ठमानानां युष्माकमस्मदीयनिष्कुटोद्यानीयसन्निवेशस्य दुर्गमत्वात् वितथमिदमभिज्ञानमिति असिद्धिमुक्तवती । अथ

चाभिज्ञानान्तरमाहुः-काषायाम्बरधारिणो यतयः कैङ्कर्यपराः कुञ्चिकाहस्तास्सन्तो देवालयं व्रजन्तीति । * माठपत्यं यतिः कुर्याद्विष्णुपूजाभिवृद्धये * इति विष्णुतिलकसंहितोक्तरीत्या तत्रतत्र दिव्यदेशेषु भगवदाराधनकर्मणि अन्यान्येषु च कैङ्कर्येषु साक्षाद्वा परम्परया वा यतयो नियुक्तास्सन्तीति श्रीरङ्गवेङ्कटाद्रिवनाद्रितोताद्रितिरुक्कुरुङ्गुडिकुरुकापुरीप्रमृतिषु दिव्यस्थलेष्वद्यापि ननु प्रात्यक्षिकमेतत्; गोदादेव्याः कालेऽप्येषा पद्धतिः सुभिक्षसमृद्धाऽऽसीदिति सम्यगवगम्यते । श्रीभक्तिसारमुनीन्द्रोऽपि स्वकीये तिरुच्चन्दविरुत्ताख्यदिव्यप्रबन्धे श्रीरङ्गदिव्यदेशप्रशंसनपरायामेकस्याम् [ * शिलैयितमुनलमूङ्गिलमून्नगडरोविनरु-अन्नपत्तस्सुनिवालमन्दणीरङ्गमे * इति ] गाथायां त्रिदण्डियतिततिसमृद्धिरभिहिताऽत्र स्मर्तव्या । " भिक्षेति शिष्यजनरक्षणादक्षिणेति शाटीति शाश्वतमठोपधिकल्पनेति । ग्रन्थोपसंग्रहणमूल्यमिति ब्रुवाणाः संन्यासिनोऽपि दधते महतीं धनायाम् " ॥ इति संकल्पसूर्योदयोदितरीत्या न खलु सर्वेऽपि यतयो गर्हणीयचारित्रा भवन्ति । अतथाविधाः शिष्टगरिष्ठा यतयश्च सन्ति खलु तत्रतत्र विरलाः । तादृशां तापसानाम् स्वाधिकारलक्ष्यभूतदेवालयकवाटोद्धाटनाय कुञ्चिकाघलघलात्कारमुखरं गमनमिह निगदितं चारुतरम् । दिव्यदेशेषु भृशमुपलाल्यमाने दिव्यप्रबन्धेऽस्मिन् एतादृशप्राभातिकलक्षणप्रकथनमत्यावश्यकं च ।

तदिदमभिज्ञानकथनं श्रुतवती गोपिका प्राह- यतयः खलु ते; *सततं कीर्तयन्तो मामिति गीतोक्तया रीत्या तेषामेतत्कार्यं सार्वदिकमेव न तु कालविशेषनियतम्; ततश्च नैतत् प्राभातिकलक्षणं भवितुमर्हतीति । अथ गोप्यः आचक्षते-अस्मदुक्तिः काममप्रमाणं भवतु; सर्वा अपि गोपीरहमेव पुरस्तात्प्रबोधयामीति भवत्या कथितं वचनमपि किं न प्रमाणमिति । इदमाकर्ण्य सा किमपि प्रतिवक्तुमशक्नुवन्ती जोषमास्त । तदा कथयन्तीमाः " अयि निर्लज्जे ! " इति * प्रसीदन्तु भवन्तो मे ह्रीरेषा हि ममातुला । यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ॥ * इति महतां सविधे स्वलज्जानिवेदनतः प्रकाशितनिजदिव्यगुणविशेषेण रामचन्द्रेण सह वासविरहात् तदीयदिव्यवैभवश्रवणभाग्यविरहात् निर्लज्जकृष्णसंसर्गातिशयवशाच्च खलु त्वम् एवं लज्जां विधूय निद्राविवशाऽसि -इत्याहुरिव ।

अथ सा पृच्छतिस्म-निशीथे समागत्य निर्लज्जे ! इति मामधिक्षिपथ; निर्लज्जया मया सह सङ्गो युष्माकं वर्जनीय एव खलु । तथाऽपि किमिति मद्गृहद्वारे स्थित्वा क्लिश्यध्वे ? इति । तदुत्तरतया प्राहुः-हे वाग्वैभवशालिनि ! इति । तव वाग्वैभवमन्यादृशमिति वयं जानीमः; कृष्णसकाशे तव पुरस्कारेण वयं यदि गच्छेम, तर्हि स तव वाग्वैदग्ध्यविवशीकृतस्सन् सर्वास्वस्मासु सुप्रसन्नो भवितेति प्रत्याशयैव वयं त्वां प्रतिपालयाम इत्युक्तं भवति । एतादृशीं प्रशंसामाकर्ण्य निर्लज्जत्वोक्तिप्रयुक्तममर्षं विधूय हर्षप्रकर्षविवशा सती ' अयि भो स्सखयः ! अहमधुनैव समागच्छामि; कथयत, सर्वाभिरस्माभिस्संमिलिताभिः किं कर्तव्यम् ? ' इत्यनुयुयुजे; तत्रोत्तरमाहुः-शंखचक्रधरदिव्यपाणिनतं पङ्कजविलोचनं भगवन्तं कीर्तयितुमुचितावसरिति ॥ यद्यपि * जातोऽसि देवदेवेश ! शंखचक्रगदाधर ! * इत्युक्तरीत्या कृष्णो भगवान् दिव्यहेतितातिधारी सन्नवततार; तथाऽपि सद्य एव * उपसंहर विश्वात्मन् रूपमेतच्चतुर्भुजमिति पित्रोः प्रार्थनया दिव्यहेतिवर्गमुपसंजहारेति स्थितम्; तथाच दिव्यायुधविरहितं तं कथमिमा गोपकन्यकाः शंखचक्रधारीति जानन्तीति काचिदाशङ्काऽत्र भवितुमर्हति । अत्रोच्यते. दिव्यहेत्युपसंहारप्रार्थनावसरे * जानातु माऽवतारं ते कंसोऽयं दितिजन्मजः * इति कथनात् आसुरप्रकृतीनामेव चक्षुरगोचरतया कृतं दिव्यायुधवैशिष्ट्यम्; प्राणनिर्विशेषप्रेयसीनामासां तदवलोकनमव्याहतमेवेति बोध्यम् । श्रीभट्टनाथसूक्त द्वितीयशतकप्रथमदशकव्याख्यानावतारिकायामस्मदीयायाम् अमुमेव विषयमधिकृत्य चारुतरैतिह्यविन्यसनपूर्वकं यदस्ति लिखितम् ( ५२ तमे पुटे ), तदपीह कटाक्षणीयम् ॥

( स्वापदेशार्थविवरणम् ) * अनादिमायया सुप्तो यदा जीवः प्रबुध्यते * इत्युक्तरीत्या अनादिमायया स्वपतां संसारिणां प्रतिबोधनाय [ समुज्जीवनाय ] पुरस्तादेव पौराणिकसूचितस्वावतार आचार्यसार्वभौम

उद्बोधनमपर्यते । * कलौ खलु भविष्यन्ति नारायणपरायणाः । क्वचित्क्वचिन्महाभाग ! द्रविडेषु च भूरिशः ॥ कलौ कश्चिद्भविष्यति * इत्यादिपुराणवचांसि आचार्यसार्वभौमावतारं पुरस्तादेव आवेदयन्तिस्म हि । तादृगावेदनलक्ष्यभूत आचार्य इह विवक्षितः । निर्लज्जत्वकथनमाचार्यविषये दूषणं न, अपि तु भूषणमेव । लज्जाप्रसक्त्यभावपरमिदं वचनम् । शिष्याणां कृते उपदेशादीनाम् अकरणे सति लज्जा भवित्री; यथावत् स्वकृत्यकरणात् लज्जाप्रसक्तिर्नास्तीति तात्पर्येण निर्लज्जत्वमुक्तमिति बोध्यम्, अकृत्यकरणे कृत्याकरणे वा सक्तानामेव हि लज्जाप्रसक्तिः ॥

अथ वाग्वैभवशालित्वकथनमाचार्ये सूपपन्नम् : * नानृग्वेदविनीतस्य नायजुर्वेदधारिणः । नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥ नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥ * इति सुविस्मितरामचन्द्रसंश्लाघितहनुमत्साधर्म्यं बिभर्ति यः खलु वैदुष्यविषये, स एव ह्याचार्यः । [ युष्मदीयनिष्कुटोद्यानस्थवापिकायां कल्हाराणि विकचानीत्यादिना ] *दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् * भक्तानां यद्वपुषि दहरं पण्डितं पुण्डरीकम् * इत्यादिप्रतिपादितं हार्दपुण्डरीकं सततविकस्वरं वः; अज्ञानतिमिरगन्धोऽपि नास्तीत्युक्तं भवति । काषायाम्बरधारिण इत्यादिना उपस्थितानां शिष्याणां वैभवमुच्यते । काषायाम्बरधारिण इत्यनेन विरक्ताग्रेसरत्वमुच्यते । [ शुभ्रदन्तपंक्तयः ] * एको मुक्तातपत्रेत्यादि श्रीगुणरत्नकोशसूक्तौ * यत्तस्मै तिष्ठतेऽन्यः कृपणमशरणो दर्शयन् दन्तपङ्क्तौ * इत्युक्तरीत्या क्षुद्रनरेन्द्रसकाशे ये न प्रदर्शयन्ति दन्तपङ्क्ती, ते खलु शुभ्रदन्तपङ्क्तयः ।*काचायनीचं कमनीयवाचा मोचाफलस्वादमुचा न याचे * इत्येवंविधदृढाध्यवसायशालिनः तृणीकृतविरिञ्चादिनिरङ्कुशाधिभूतया महात्मान इति कथितं भवति ॥ तापसा इत्यनेन शरणागतिनिष्ठा इत्युक्तं भवति; *तस्मान्न्यासमेषां तपसामतिरिक्तमाहुरित्युपनिषदा न्यासस्य विलक्षणतपस्त्वेनाम्नानात् ॥ स्वदेवालयसमुद्घाटनार्थं गता इत्यनेन—जन्मान्तरशतसहस्रसुकृतैकलभ्यमर्चावतारप्रावण्यमुक्तं भवति ॥ शंखचक्रधरदिव्यपाणितलमित्यनेन—शिष्याणां बाहुमूलपरिचिह्नितशंखचक्रत्वरूपसंस्कारविशेषसंस्करणाय सुदर्शनपाञ्चजन्यशालित्वमुक्तं भवति गुरुवरे ॥ पङ्कजविलोचनमित्यनेन—* न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः * इत्युक्तरीत्या कटाक्षवीक्षामात्रेण पापिनामपि पवित्रीकरणचणनयनारविन्दशालिता कथिता भवतीत्यलम् ॥ ... ... ... १४

## १५. पञ्चदशी गाथा--एल्लेयिळङ्किळिये.

* पञ्चदशगाथापद्यम् । *

अद्यापि स्वापसक्तिः कथमयि ! सखि ! ते कीरशावोपमेये !
किं ब्रूषे निष्ठुरोक्तिं चिरपरिचितमवादितं कर्कशं ते ।
क्षन्तव्याऽहं झटित्येह्यखिलमुपगतं स्त्रैणमुद्रातुमीशम्
मातङ्गघ्नं रिपुघ्नं न पृथगनुभवेत्यूचुषी श्रीः शरण्या ॥ १५ ॥

( मूलगाथार्थः । ) अयि शुकशावोपमेये गोपिके ! किमद्यापि निद्रासि ? हन्त किमेतत् ? ( इति बहिर्गोप्यः कथयन्ति । ) अयि भोः पूर्णा गोप्यः ! मा नाम कोपहेतुशब्दप्रयोगं कुरुत, इयमहमागच्छामि । ( इति अन्तर्गोपी कथयति । ) त्वं तावदतीव कठिना; त्वदुक्तिकाठिन्यं चिरादेव वयं विद्मः ( इति बहिर्गोप्यः । ) कठिना नाहम्, यूयमेव; ( अथ वा ) अहमेव भवानि, ( इति अन्तर्गोपी. ) क्षिप्रं समायाहि

त्वं, पार्थक्येन किमनुभवसि ? ( इति बहिर्गोप्यः ) सर्वाश्च गोप्यः किं ननु संगताः ? ( इति अन्तर्गोपी. ) संगता एव सर्वाः; त्वं बहिरागत्य ताः परिगणय । कंसप्रेरितपरुषवेतण्डदण्डनपण्डितं वैरिव्रातसमूलोन्मूलन विचक्षणम् आश्चर्यचर्यानिरतं च कृष्णं गायेम. ( इति बहिर्गोप्यः ) ॥

सर्वासामपि भागवतीनां बृन्दमवेक्षितुमुत्सुका काचन परमभागवती प्रतिबोध्यतेऽनया गाथया अन्तश्शयानाया गोपिकाया बहिस्तिष्ठन्तीनां गोपिकानां च मिथस्संभाषणं सुस्पष्टमेव गाथायामस्यां निबद्धम् । द्राविड्यां मूलगाथायां प्रथमश्चरणो बहिस्स्थितवल्लवीनां वचः । द्वितीयश्चरणः अन्तश्शयानायाः - तृतीयश्चरणो बहिस्स्थितानाम । चतुर्थश्चरणः अन्तश्शयानायाः । पञ्चमश्चरणो बहिस्स्थितानाम् । षष्ठचरण-स्य पूर्वभागः अन्तश्शयानायाः । उपरिष्टादवशिष्टं बहिस्स्थितानाम् ॥ एवं संवादात्मना पद्यविन्यसनस्य किं प्रयोजनमिति चेत्; अस्ति परमं प्रयोजनम् । आर्वरद कस्यचिच्छास्त्रार्थस्य आविष्करणमेव तत् । संवादेऽस्मिन् चतुर्थवाक्ये, " कठिना नाहम् , यूयमेव " इति पूर्वमभिधाय, अनुपदमेव " अहमेव तादृशी भवानीति यदुक्तम् तदेकमेव गाथाया अस्याः प्राणनाडी । न केवलं गाथाया अस्याः, त्रिंशद्गाथात्मकस्य कृत्स्नस्याप्यस्य दिव्यप्रबन्धस्येत्यपि पूर्वाचार्या आशेरते ।

लोके तावदपराधकरणं सर्वेषामपि जनानां प्रकृतिसिद्धम्; कृतापराधा बहवो जनाः प्रायः स्वापराधमपलपन्ति, केचित्तु कृतमपराधमभ्युपगच्छन्ति, यद्यपि कृतस्यापराधस्य निह्नवापेक्षया अभ्युपगमः श्रेयानेव; ततोऽप्युत्तुङ्गतरा काचन कक्ष्या वर्तते—अपराधः स्वेन कृतो वा भवतु मा वा; स्वस्मिन् दोषः अस्तु वा मा वा; दोषवानसि त्वमिति परैः कथिते सति, दोषवत्त्वारोपणमात्रमेवैतदिति वस्तुतत्त्वे स्थितेऽपि 'सत्यं दोषवानेवाहमस्मि, गुणदरिद्र एवाहमस्मि' इति हार्दमङ्गीकरणं यत् तदिदम् असमाभ्यधिका उत्तुङ्गकक्ष्या । ※ रूक्षाक्षराणि शृण्वन्वै तथा भागवतेरितान् । प्रणामपूर्वकं क्षान्त्या यो वदेद्वैष्णवो हि सः ॥ ※ इति प्रमाणरत्नं विराजते; एतद्रीत्या सर्वथाऽपि स्वस्य दुष्टत्वाङ्गीकरणं श्रीवैष्णवत्व सीमेति शास्त्रघण्टापथः । ※ ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः । ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥ ※ इत्यादिवचनप्रतिपन्नं श्रीवैष्णवत्वं तावत् बाह्यवेषमात्रे तिष्ठति । आत्मगुणसंपत्तिरेव प्रधानश्रीवैष्णवता । सा चात्मगुणः स्वस्मिन् सतोऽप्यसतोऽपि दुष्टत्वस्य मनागप्यनिषेधेन हार्दमङ्गीकरणमेव । ※ न मन्थराया न च मातुरस्या दोषो न राज्ञो न च राघवस्य । मत्पापमेवात्र निमित्तमासीद्वनप्रवेशे रघुनन्दनस्य ॥ ※ इत्यनुसंहितवन्तं भरतं महात्मानं स्वात्मना तुलयितुं क्षमः पुरुषतल्लजो दुर्लभः खलु लोके ।

पश्यत; महतीषु परिषत्सु उपन्यासकपदवीमधितिष्ठन्तः पंडितप्रवरा उपन्यासोपक्रमे " सर्वात्मनाऽप्यहमज्ञः, न किमपि शास्त्रं पर्यचैषम्, गुरुकुलं नैव समसेविषि; तथाऽपि महतामाज्ञामुल्लङ्घयितुमशक्तः साहसेन किमपि प्रवक्तुमारभे; महात्मभिस्सर्वथा शिक्षणीयोऽहमस्मि " इत्यतिमात्रनैच्यमाविष्कुर्वन्तो भाषन्ते । एव मुपन्यासान्तेऽपि किमपि भाषमाणा उपसंहरन्ति । अनन्तरं यः कोऽपि पुमान् " अयमज्ञानामग्रणीः, असंबद्धमेव किमपि किमपि प्रलपितवान् महासभायाम्, महदिदं साहसम् " इति कथयति चेत् तदाकर्णनमात्र एव सोऽयं प्रवक्ता रोषकषायिताक्षस्सन् किमात्थ रे धूर्तेति तं प्रहर्तुं परिनिन्दितुं वा परिकरमाबध्नाति, " भगवन् ! सत्यमेव भवतोच्यते, मयाऽप्युक्तमेव खल्वेतत् " इति सानुमोदनं सविनयं च तदुक्तिमभिनन्दितुमुत्कण्ठितो जनो नैकोऽप्युपलभ्येत भुवि । अज्ञमितज्ञबहुज्ञविभागमन्तरेण सर्वोऽपि जन एतादृश एव प्रायः । सत्यं सुदुर्लभो ह्येतादृगधिकारपरिपाकः । एतस्य श्रैष्ठ्यं प्रकाशयितुमेव मिथस्संवादरूपेण सेयं गाथा निबद्धा । संवादविन्यसनमन्तरेण परमार्थस्यास्य प्रतिपादनं किमु दुष्करमितिचेत्, दुष्करमेवेति वक्तव्यम् । ※ कालिन्दि ! ब्रूहि कुम्भोद्भव ! जलधिरहम् ※ भिक्षार्थी स क्व यातस्तुतनु बलिमखे ※ इत्यादिभिस्संवादात्मकपद्यरत्नैर्योऽर्थः प्रत्याय्यते स प्रकारान्तरेण प्रत्याययितुं

मशक्य एव हि कश्चित्प्रत्यायितोऽपि रसपुष्टिं न धत्ते । परमार्थस्यास्य परोपदेशमुखेन प्रकाशनापेक्षया स्वानुष्ठानमुखेन प्रकाशनं हि वरम्; तच्च एवंविधसंवादग्रथनमन्तरा न सुशकमित्याशयानया गोदादेव्या चारुतरं निबद्धा नेयं गाथा ।

अथ संवादं विवृणुमः; ' अयि शुकशाबोपमेये गोपिके ! किमद्यापि निद्रासि ? " इति बहिस्स्थिताभिर्गोपीभिरुक्तम् ; इदं वाक्यमाकर्ण्य अन्तश्शयानया " अयिभोः पूर्णा गोप्यः ! मा नाम कोपजनकशब्दप्रयोगं कुरुत ' इति कथितम् । प्रथमवाक्ये कोपहेतुः शब्दः को नाम प्रयुक्तोऽस्तीति विचिन्तनीयम् । लोके तावत् वृथा स्तुतिकरणेन केषाञ्चिद्भवति कोपः अपरेषां तु अधिक्षेपेण स भवति । इह तु प्रथमवाक्ये स्तुतिश्च वर्तते अधिक्षेपश्च वर्तते " अयि शुकशाबोपमेये गोपिके ! " इति संबोधनं स्तुतिरूपम्; " किमद्यापि निद्रासि ' इतिवचस्तु अधिक्षेपरूपम् । तदिदं श्रुतवत्या अन्तश्शयानाया गोप्याः कोपस्तु जात इति तदीयेन ( द्वितीयेन ) वाक्येन विज्ञायते । तदिदं कोपजन्म स्तुतिप्रयुक्तं वा भवतु, अधिक्षेपप्रयुक्तं वा भवतु; कुपितां तां प्रति बहिस्स्थता आहुः [ त्वं तावदतीव कठिना; त्वदुक्तिकाठिन्यं चिरादेव वयं विद्मः ] इति । तस्या वचसि कीदृशं काठिन्यमस्तीति चेत्; " अयि भोस्सख्यः ! " इति वक्तव्ये " अयि भोः पूर्णा गोप्यः ! " इति यत्कथितं तत् कठिनमेव । सखीकथितं मर्षणीयमेवेत्यगृहीत्वा [ मा नाम कोपजनकशब्दप्रयोगं कुरुत ] इति यदुक्तं तदपि कठिनमेव । अतश्च [ त्वंतावदतीव कठिना; त्वदुक्तिकाठिन्यं चिरादेव वयं विद्मः ] इति बहिस्स्थिताभिरुक्तमुपपद्यते । अथ चावादीदन्तश्शयाना [ कठिना नाहम्, यूयमेव ] इति । इतः परं क्रमशो वाक्कलहेन भृशमभिवृद्धेन भवितव्यम्; अभिवृद्धेरवकाशमप्रदाय " अहमेव तादृशी भवानी " ति अन्तश्शयानाया उक्तिविन्यसनं यदिह समभूत्तदिदमतिचारु । दोषस्य स्वनिष्ठत्वाङ्गीकरणेन वाक्कलहप्रशमनं क्षणेन कृतम् उत्तमश्रीवैष्णवलक्षणभूतमात्मगुणपौष्कल्यं च प्रकाशितम् ॥ दोषस्य स्वनिष्ठतयाऽङ्गीकारो यद्यपि बहिस्स्थितानां गोपीनां वचसाऽपि प्रकाशयितुं शक्यः, तथाऽपि अन्तश्शयानाया वचसा प्रकाशनात् एवंविधो विलक्षण उत्तमाधिकारी भूमावेक एव लभ्येत, न तु बहव इति व्यञ्जनं सिध्यति ॥

अहमेव तादृशी भवानीति वचसो निशमनानन्तरं विवादस्य प्रशान्तत्वात् पुनरपि विवादोत्थापनं नैव युक्तम् । तथाऽपि बहिस्स्थिता गोप्यो विवादं पुनरुत्थापयन्त्य इव क्षिप्रं समायाहीत्येतावन्मात्रमनुक्त्वा [ त्वं पार्थक्येन किमनुभवसि ? ] इति पप्रच्छुः । अयुक्तोऽप्ययमनुयोगः किमर्थं कृत इति चेत् , ' पुनरप्येषा विस्मृतस्वस्वरूपा सती किं विवदितुमारभेत ? ' इति परीक्षार्थमेव । सा तु सुदृढस्वरूपबोधा नैव परीक्षायां भङ्गमवाप । " सर्वाश्च गोप्यः किं ननु संगताः ? " इति प्रश्नतः स्वकीयं भागवतबृन्दसेवाहेवाकमेव प्रकाशितवती । अथाहुर्बहिस्स्थिताः [ संगता एव सर्वाः, त्वं बहिरागत्य परिगणय ] इति । एवं नाम कथनस्य हृदयं किमिति चेत् ; गणनावसरे प्रतिव्यक्ति चाङ्गुलिस्पर्शस्य कटाक्षवीक्षणस्य च संभवेन * यं यं स्पृशति पाणिभ्यां यं यं पश्यति चक्षुषा । स्थावराण्यपि मुच्यन्ते किं पुनर्बान्धवा जनाः ॥ * इत्युक्तरीत्या निस्तुलस्य श्रेयसः प्राप्तिरवश्यं भाविनीति सूचनमेव हृदयम् ।

अथ [ कंसप्रेरितपरुषवेतण्डदण्डनपण्डितम् ] इत्यादिना, सर्वासां संमिलितानां गानगोचरत्वेन कृष्णचर्याविशेषाः केचिदभिधीयन्ते । कंसः कृष्णबलरामावक्रूरद्वारा मधुरापुरीमानाय्य कुवलयापीडाख्यस्वकीयमत्तमातङ्गमुखेन कृष्णं मारयितुमैच्छत ; तेन च मत्तगजेनास्कन्दितो नन्दनन्दनः * सख्यः पश्यत कृष्णस्य मुखमत्यरुणेक्षणम् ; गजयुद्धकृतायासस्वेदाम्बुकणिकाचितम् ॥ * इति कथयन्तीनां मधुरावासयोषितां मनांस्यानन्दयन्नेव हस्तिनं तम् आधोरणेन सहैव सद्यो व्यापादितवानिति वेतण्डदण्डनपाण्डित्यकथा ॥ अथ, " वैरिव्रातसमूलोन्मूलनविचक्षणम् " इत्यनेन राघवाद्व्यावृत्तिरभिव्यज्यते । राघवस्तु विश्वामित्रयज्ञरक्षणकाले मारीचं यदि निरवशेषं व्यापादितवान् स्यात् अथ तज्जनितानर्थभागी न स्यात् । यदि च वा शूर्पणखां ताटकावत् नामावशेषितां कृतवान् स्यात् तदाऽपि सीतावियोगदुःखभागी न स्यात् । * शत्रुशेषं न

शेषयेदिति शास्त्रं विस्मृत्य शत्रूणां सशेषमवस्थापनेनैव रामचन्द्रो भूरितरक्लेशभाजनं बभूवेति मन्यमानश्चतुरः कृष्णः स्वयं शत्रून् समूलमुन्मूलितवानिति ॥ अथ आश्चर्यचर्यानिरतमित्यत्र * घुंघुमिति किं भ्रमति अम्ब दधिमध्ये डिम्भ ! ननु भूतमिह दूरमपयाहि । अम्ब नवनीतमिति संवदति कृष्णे मन्दहसितं जयति मातुरतिरम्यम् ॥ * इत्येतत्पद्यरत्नमनुसन्धेयम् ॥

अस्या गाथाया ध्वन्यर्थविवरणप्रयासोऽनपेक्षितः; सच्छिष्यप्रधानलक्षणविशेषप्रपञ्चनस्यैव गाथापरमतात्पर्यत्वेन विवृतत्वात् । अथापि पुनः किञ्चिदिव विवरणं वितन्यते । " अयि शुकशावोपमेये ! " इति संबोधनेन–शुकशावो यथा शिक्षितानि वचनानि अन्यूनानतिरिक्तमनुवदति तथा पूर्वाचार्यशिक्षितसूक्त्यनुविधायिवचसा भवितव्यं सच्छिष्येणेति सूचितं भवति । कृष्णो यथा दुष्टं दन्तावलं जघान, तथा आचार्योऽपि पञ्चेन्द्रियरूपमत्तमातङ्गमदविनाशनविशारद इति बोध्यम् ॥ आचार्यस्य वैरिव्रातमूलोन्मूलनं नाम शाक्योलूक्यादिदुर्मतानां सर्वात्मना विध्वंसनमेव । कामक्रोधलोभमोहमदमात्सर्यादिदुर्गुणदूरीकरणं वा ॥ अथ च आश्चर्यचर्यानिरतत्वम्–नित्यसंसारिणामपि नित्यसूरिपरिषन्निवेशनात्मकं वेदितव्यम् ॥ ... १५

## १६. षोडशी गाथा–नायकनायनिन्न ॥

### —षोडशगाथापद्यम्—

अस्मन्नाथाग्र्यनन्दप्रभुवरभवनद्वारपालौ ! दयेथाम्
ह्यः प्रत्यश्रावि सेवावितरणमनुकम्पात्मना नोऽच्युतेन ।
बालाः शुद्धान्तरङ्गा वयमिह शयनोत्थानगीतार्थमाप्ताः
नो रोद्धव्याः कृपार्हा इति कथितवती भातु गोदा मदन्तः ॥ १६ ॥

नायकतया स्थितस्य नन्दगोपस्य भवनद्वारपालक भोः ! पताकालंकृततोरणद्वारपालक भोः ! रत्नमयकवाटबन्धमुन्मोचयेथाः । गोपालबालिकानामस्माकम् आश्चर्यचेष्टितो मणिनिभगात्रो भगवान् पूर्वेद्युरेवास्मदपेक्षितपुरुषार्थप्रदानं प्रतिश्रुतवान् । तस्य शयनादुत्थापनगाथानां कीर्तनार्थमिह वयं परमपावन्यः समागताः स्मः । स्वामिन् ! परोपकारार्थया वाचा प्रथममस्माकं प्रतिरोधं मास्म कार्षीः; भगवति प्रेमबन्धबन्धुरं कवाटं भवानेव कृपया समुद्घाटयतु ॥ ( इति मूलगाथार्थः ॥ )

अधस्तात् षष्टगाथाप्रभृतिषु दशसु गाथासु दशानां भागवतीनां गोपीनामुद्बोधनं यन्निबद्धम् तत् पञ्चलक्षसंख्याकगोपीसमुद्बोधनपर्यायभूतं मन्तव्यम् ! अस्मदीयश्रीवैष्णवसंप्रदायधुरन्धराः श्रीसरोयोगिप्रभृतिश्रीपरकालसूरिपर्यन्ता दिव्यसूरिवरा दश दशभिर्गाथाभिस्समुद्बोधिता इति निर्वाहश्चारुतरः । गाथासु मूलस्थशब्दसंनिवेशैस्तदिदं निस्संशयविपर्ययमवगम्यत इति विपुलविवरणं कृतमस्मदीयायां द्राविडभाषामय्यां विस्तृतव्याख्यायाम् । तदभिज्ञास्तदनुभवरसिकास्सन्तः प्रमोदन्ते । तदास्तां नाम ॥

प्रथमतस्समुद्बुद्धा गोप्यः प्रतिसदनमन्तस्तल्पमधिशयाना अपि गोपीः प्रबोध्य ताभिस्सर्वाभिस्साकं श्रीनन्दगोपभवनद्वारमुपासेदुः । तत्र बहिर्द्वारपालकम् अन्तर्द्वारपालकं च प्रतिबोधयन्त्यः स्वात्मनामन्तःप्रवेशनप्रार्थनां विरचयन्ति गाथयाऽनया । इदमत्र विमर्शनीयम् । व्रजे नन्दगोपस्तावदितरैर्गोपालैस्सधम खलु विराजते; श्रीकृष्णस्य पिता बभूव सोऽयमिति वञ्चिद्विशेष आस्तां नाम । गोपालानामध्यक्षोऽयमासीदिति च तिष्ठतु नाम । अस्य भवनं बहिर्द्वारपालकाधिष्ठितमन्तर्द्वारपालकाधिष्ठितं चासीदिति नैतत्सं-

भावनार्हम्। इतरेषां गोपालानामिव अस्यापि सदनं साधारणं स्यादिति संभाव्यते। एवं स्थिते, द्वारपालकादि-सद्भावं कल्पयित्वा किमर्थमेवमुपवर्ण्यत इति काचिदाशङ्का जायेत। अत्रोच्यते। गोदादेव्या निबद्धोऽयं दिव्यप्रबन्धो विभवावतारकालिकानुभवप्रकाशकोऽपि सन् अर्चावतारदिव्यस्थलेष्वनुभवायैव सुतरां कल्पत इति प्रात्यक्षिकमेतत। तथाच दिव्यदेशसेवाहेवाकिभिर्यथायथाऽनुसन्धानं कर्तव्यं शास्त्रीयसरण्या, तथातथा गाथानिबन्धनमिह संपद्यत इति वेदितव्यम्। दिव्यदेशप्रवेशसमये भक्तैरनुसन्धेयप्रकारस्तावत श्रीरङ्गराजस्तवे प्रदर्शितः खलु * स्मेराननाक्षिकमलैर्नमतः पुनानान् दंष्ट्रागदाभ्रुकुटिभिर्द्विषतो धुनानान्। चण्डप्रचण्डमुखान् प्रणमामि रङ्गद्वारावलीषु चतसृष्वधिकारभाजः * इत्यादिभिः कतिपयैः पद्यैः। सैव प्रणाली अत्राप्यनुसन्धेया। विभवावतारानुभवसंवलितार्चावतारानुभवपरत्वेनैव श्रीविष्णुचित्तसूरिगोदा-देव्योस्सूक्तीनामुत्कर्षातिशय इति ध्येयम्।

अथ गाथार्थविवरणम्॥ भगवान् कृष्ण एव सर्वेषां नायक इति वस्तुतत्त्वं संविदाना अपीमा गोप्यः [ नायकतयास्थितस्य नन्दगोपस्य ] इति कुतः कथयन्तीति चेत्; भगवान् कृष्णो नन्दसूनुत्वमेव स्वस्य भृशमभ्यर्हितं मन्यमानो नन्दगोपमेव स्वस्यापि नायकं यतःप्रतिपेदे, तत एव गोप्य इमा इत्थमभिदधतीति प्रतिपत्तव्यम्। लङ्कायां विजयं प्राप्य पुष्पकविमाने सह सीतया प्रतिनिवर्तमानो रामचन्द्र आह—* एषा सा दृश्यते सीते! राजधानी पितुर्मम * इति। दशरथे पितरि चतुर्दशवर्षतः पूर्वं दिवं गते सत्यपि अयोध्या-यास्तत्संबन्धेन समादरणमेव युक्तमिति धिया खलु रामो " राजधानी पितुर्मम " इति बभाषे। सैव रीति-रत्राप्युपपद्यते।

[ रत्नमयकवाटबन्धमुन्मोचयेथाः ] इत्येतद्वाक्यमुभयत्रान्वेतुमलम्; बहिर्द्वारपालकसकाशे अन्तर्द्वार-पालकसकाशे च कवाटबन्धोन्मोचनप्रार्थना सेयं क्रियत इति बोध्यम्। तथाच क्रियानुषङ्गः। अत्र संबोधन-द्वितय सत्त्वेऽपि एकैव द्वारपालकव्यक्तिर्वाक्यद्वयेनापि प्रतिबोधितेति ग्रहणमपि युज्यते; व्यक्तिद्वयप्रतिबो-धनमेव गृह्यतां नाम। प्रार्थनया प्रसन्नो बहिर्द्वारपालकः कृपार्द्रदृष्टिपातप्रसारणेन गोपीनामन्तः प्रवेशमनुमेने। अन्तः प्रविष्टा अथ अन्तर्द्वारपालकं संबोध्य प्रार्थयन्ते [ पताकालंकृततोरणद्वारपालकभो इत्यादिना। ] व्रजे सर्वाण्यपि भवनानि समरूपाणि सन्ति; निशीथे ससंभ्रमं समागच्छन्तीनां वल्लवीनां व्यामोहो मा भूदिति पताकालङ्करणेन चिह्नसमर्पणं कृतमिव। निदाघकाले तत्रतत्र प्रपां परिकल्पयन्तो धार्मिकाः पिपा-सितानां जनानां प्रतिबोधनाय प्रपामुखे यथा पताकाप्रतिष्ठापनमारचयन्ति तद्वदेतत्। * धन्वन्निव प्रपा असि * इति श्रुत्युक्तरीत्या भगवानपि प्रपा भवति खलु। * एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम् * इत्युक्तप्रकारेण संतप्ताः खलु सरभसमायान्ति तापशान्त्यै " करचरणसरोजे कान्तिमन्नेत्रमीने श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे। हरिसरसि विगाह्यापीय तेजोजलौघं भवमरुपरिखिन्नः खेदमद्य त्यजामि "— त्यनुसन्दधानाः॥

कवाटोद्घाटनाय प्रार्थितोऽयं द्वारपालक आसां गोपालबालिकानां वचस्सुधां पिपासुः किमपिकिम-प्याह; गोप्यश्च प्रत्याहुः; स संवादप्रकारः संक्षेपेण गाथारूढो मनागिवात्र विव्रियते।

द्वारपालकः-सर्वथा भीतैरेवास्पदेऽस्मिन व्रजे अकाले समागत्य कवाटमुद्घाटयेति कथयन् जनः को नाम ?

गोप्यः-* भयं भयानामपहारिणि स्थिते मनस्यनन्ते मम कुत्र तिष्ठति * इति किं ननु भो न श्रुतं भवता ? भयनाशनस्य भगवतस्सविधे को हि नाम भीतिप्रसङ्गः ?

द्वारपाल-श्रीरामावतारकाले तु कृतयुगसन्निहितत्रेतायुगस्थितिः, अतश्च कालः सुसमीचीनः; तातस्तु शम्बरान्तकः पङ्क्तिरथः; पुत्राश्च पुरुषव्याघ्रा महावीरधीरधौरेया अनीतिपथविदूरगाश्च; नगरी च नाम्ना अयोध्या [ योद्धुमशक्यैत्यर्थः ]; नियन्तारश्च वसिष्ठप्रमुखा महाज्ञानिनः; नगरस्थाश्च सर्वे जनाः * स्त्रियो

वृद्धास्तरुण्यश्च प्रातस्सायं समाहिताः । सर्वान् देवान्नमस्यन्ति रामस्यार्थे यशस्विनः ॥ * इच्छामो हि महाबाहुं रघुवीरं महाबलम् । गजेन महता यान्तं रामं छत्रावृताननम् *इत्याद्युक्तरीत्या परमप्रेमशालिनः; अचेतनतृणप्रभृतयोऽपि तदात्वे * विषये ते महाराज ! रामव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः * इत्युक्तरीत्या प्रेमैकनिरूपणीया आसन्; अत एव रामावतारे भयप्रसक्तिर्नासीत् । अधुना किं तथा हंहो । श्रूयताम् । कलियुगशिरस्कद्वापरान्तसमयः । तातस्तु नन्दः परमसाधुः पिपीलिकोपमर्दनेऽप्यकुशलः । पुत्रकस्तु धूर्तचेष्टितानुष्ठानसन्ततसमुत्सुकस्वान्तः । देशश्च अविवेकिभिरध्युषिता आभीरपल्ली, परमदारुणकंसवशंवदा । अङ्कुरदोषधिमात्रमपि आसुरं हन्त । ईदृशी हि कृष्णावतारकालदेशादिपरिस्थितिः । भयं विना किमन्यदत्रावकाशं लभते ?

गोप्यः-महात्मन् ! अस्मत्सकाशात् किमु भेतव्यम् ? वयं वनिताः खलु; अबलाभ्यः का नाम भीतिः ?

द्वार—सत्यम्; शूर्पणखाऽप्यबलैव ननु; द्वारस्य द्वारपालकस्य च पञ्चवट्यामभावादेव हि सा वाचामगोचरमनर्थमसूत ।

गोप्यः—सा खलु निशाचरीः वयं तु गोप्यः; तया सहास्माकं परिगणना किमु युज्यते ? कथय महानुभाव !

द्वार—राक्षसी गोपिकेति जातौ को वा विशेषः ? पूतनाऽपि गोपीवेषधारिणी खलु समाययौ; "कदाचिदन्तर्हितपूतनात्मा कंसप्रयुक्ता किल काऽपि माया । निद्रापराधीनजने निशीथे व्रजं यशोदाकृतिराविवेश॥" ( यादवाभ्युदये ) इति किं न जानथ यूयम् ?

गोप्यः--महाप्रभो ! सा खलु पूतना परिणतवयस्का; वयं तु, पश्य बालिकास्स्मः । छलं न किमपि विद्मः ।

द्वार—वत्सासुरकथा किं न श्रुता युष्माभिः ? सोऽपि ननु वयसा कनीयानेव समायातः ।

गोप्यः—महात्मन् ! मैवं वादीः । ते ते नृशंसाः प्रत्येकशो जिघांसयैव रहस्समायाताः; वयं तु न तथा; बृन्दबृन्दशः खलु समागता वयम् ; भास्वांश्च उदयशिखरिशिखरमवजगाहे । नास्मत्तो भयप्रसक्तिरीषदपि; तद्दयस्व भोः ॥

द्वार—प्रत्येकशस्समागच्छतो जनादपि बृन्दबृन्दशस्समागच्छन्तीभ्यो जनताभ्य एव हि भूरि भेतव्यम्; * चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति * इति खलु भीतभीता बभूवुर्महान्तोऽपि वैरिबृन्दमवलोक्य । तदस्तु नाम; किमर्थमद्यात्र समागता यूयम् ? तत कथयत ।

गोप्यः—महानुभाव ! तत् पृच्छ तावत्; सुशोभनोऽयं प्रश्नः; प्रत्युत्तरं च नस्सादरमाकर्णय. पुरुषार्थविशेषप्राप्तये समागतास्स्मः; ह्य एव भगवान्नन्दनन्दनः प्रत्यजानादस्मदपेक्षितपुरुषार्थप्रदानम्; अस्माभिःदृष्टमात्र एव स कांक्षितं प्रदास्यति ध्रुवम् ।

द्वार--स भगवान्मत्सकाशे किमपि न प्रोक्तवान्; अहं तु द्वारपालनकर्मणि नियुक्तः । आगन्तुकान् जनान् यथेच्छमन्तः प्रवेशयितुं किमहमत्र निवेशितोऽस्मि । साधु साधु । युष्माकमन्तःकरणशुद्धिमजानन्नहं न वः प्रवेशयेयमन्तः ।

गोप्यः--अयि भो महात्मन् महात्मन् ! न वयं नवीनतया श्रीमता शोधनीया जनाः; सर्वथाऽपि वयं परमपरिशुद्धास्स्मः । उपायान्तरप्रावण्यमुपेयान्तरप्रावण्यं वा नास्मासु किञ्चिदपि लब्धावकाशम्, मङ्गलाशासनैकतत्परतैवास्माकं परमा शुद्धिः ।

द्वार—सत्यं वदत; अन्तः प्रविश्य किंकरिष्यथ? परमपुरुषार्थप्रदानं तु एव प्रतिश्रुतवान् कृष्ण इति खलु युष्माभिरुक्तम्; परमपुरुषार्थशब्दाभिलप्यं वस्तु किं तदिति जिज्ञासमानाय मह्यं मनागिव कथयत।

गोप्यः—* भो कृष्ण भो माधव भो मुकुन्द भो नन्दसूनो भगवन् मुरारे। भोगीन्द्रभोगात्मकतल्पतस्त्वम् उत्तिष्ठ जागृह्यनुकम्पमानः॥ * इत्येवं गास्यामः। सुप्रभातसंकीर्तनं ह्येतत। एष एव हि नः परमपुरुषार्थः। परा भगवान् विश्वामित्रोऽपि * कौसल्यासुप्रजा राम। पूर्वा सन्ध्या प्रवर्तते। उत्तिष्ठ नरशार्दूल!" इति शयनादुत्थाप्य खलु कृतकृत्यो बभूव॥

द्वार—आसन्नमयुक्तं युष्माभिः शयनकाले अन्तः प्रवेशनमेव महदकृत्यम्; प्रविश्य शयनादुत्थापनं तु ततोऽपि महत्तरमकृत्यम्। पुरा चित्रकूटे वायसेनार्दिता वैदेही शयानं भर्तारमुत्थाप्य * स मया बोधितः श्रीमान् सुखसुप्तः परन्तपः * इति तदुत्थापनकृते भृशमन्वतप्यतेति किं न श्रुतं युष्माभिः? श्रीरामायणं समग्रं न श्रुतं युष्माभिरिति मन्ये। शयनकालिकमाभिरूप्यमनुभोक्तुमन्तः प्रविशाम इति यद्युक्तं स्याद्युष्माभिस्तर्हि कथञ्चिदन्तः प्रवेशमनुमन्तुमवकाशः स्यादपि; स्वपन्तमुत्थापयितुं प्रविशाम इति कथयन्त्यो यूयम् इहावस्थातुमपि नार्हथ; अपसरत क्षिप्रमपसरत।

गोप्यः—महात्मन्! वाचा धर्ममवाप्नुहि; काममन्तः प्रविशतेति वाक्यानिकाविन्यसनेन सुमहत्तरसुकृतार्जनं हि तं कर्तव्यम्; तदुपेक्ष्य किमित्यस्मान् वृथा प्रतिषेधसि? * अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् *—इत्यपि न जानासीव। विजहीहि विजहीहि प्रतिषेधाक्षराणि—इति तत्पादयोः प्रणिपेतुस्सर्वा अपि।

अथ स दयमानमनाः 'भो गोप्यः! काममन्तः प्रविशत, नाहं युष्मान् प्रतिषेधामि; स्वहस्तत एव कवाटबन्धनमुन्मोच्य गच्छतेत्याह। तदाकर्ण्य गोप्य आहुः—नैतत्कार्यं वयमनुतिष्ठेम; तत्रभवानेव स्वयमुद्घाटयतादिति। घटकाः साभिनिवेशं स्वयं प्रवेशयन्तिचेत्तदेव स्वरूपानुरूपमिति हृदयम्। प्रतिषिद्धवतो हस्तत एव प्रवेशनसम्पादनं स्वादुतरं च; विभीषणशरणागतिसमये तद ङ्गीकारस्य प्रतिषेद्धा सुग्रीवः; अनुमन्ता तु मारुतिः; अथचाङ्गीकारे निर्धारिते भगवान् रामचन्द्रो विभीषणानयनाय तस्मिन्नस्निग्धं हनुमन्तं नादिदेश; अपि तु कृतप्रतिरोधं सुग्रीवमेव समादिदेश "आनयैनं हरिश्रेष्ठ" इति। प्रतिषेधकमुखेनैव स्वीकरणं रसवत्तरमिति तदभिप्रायः। सैव सरणि रत्रापीति ध्येयम्॥

(अथ ध्वन्यर्थविवरणम्।)नायकतयाऽऽश्रितस्य नन्दगोपस्य भवनद्वारपालकेति संबोधनं भगवद्रामानुजमुनीन्द्रपादोपजीविनः कस्यचिदन्तरङ्गशिष्यस्य समुद्बोधनपरम्। * अमुना तपनातिशायिभूम्ना यतिराजेन निबद्धनायकश्रीः। महती गुरुपङ्क्तिहारयष्टिर्विबुधानां हृदयंगमा विभाति॥ * (यतिराजसप्तती) इत्युक्तरीत्या गुरुपरम्परायां नायकमणिस्थानं भगवान् रामानुज एव ह्यलङ्करोति। स एव नन्दगोपशब्दाभिलप्यश्च; नन्दो यथा भगवन्तं यदुकुलनाथं पुत्रत्वेन स्वीकृतवान् तथा रामानुजमुनीन्द्रोऽपि भगवन्तं यदुगिरिपतिं पुत्रतया स्वीचकार खलु; यतिराजसम्पत्कुमारेति हि स भगवानाहूयते। आचार्यभवनद्वारसेवनमेव प्रधानं शिष्यकृत्यमिति संबुद्धिशब्दभूम्ना द्योत्यते। अथ * पताकालंकृततोरणद्वारपालकेति भगवान् रामानुज एव साक्षात्संबोध्यते। वैकुण्ठद्वारपालकेति यावत्। अदसीयामनुमतिमन्तरेण दिव्यधामान्तःप्रवेशो न सुलभ इति भावः। * दत्ते रङ्गी निजमपि पदं देशिकादेशकाङ्क्षी * इति हि न्यासतिलकदिव्यसूक्तिः॥ अथ रत्नमयकवाटोद्घाटनमिह काङ्क्ष्यते। रत्नानि नवेति प्रसिद्धिः; भगवद्रामानुजप्रणीतानि ग्रन्थरत्नानि च नवैव-श्रीभाष्यम् वेदान्तदीपो वेदान्तसारो वेदार्थसंग्रहो गीताभाष्यं शरणागतिगद्यं श्रीरङ्गगद्यं श्रीवैकुण्ठगद्यं नित्यग्रन्थ इति तद्गर्भितमहार्थप्रकाशनमेवेह कवाटोद्घाटनाभ्यर्थनापदेशेन प्रार्थितं भवति॥ अथ- [गोपालबालिकानामस्माकम्] इत्यनेन, प्रार्थयितॄणां विद्यार्थिनामज्ञत्वं बालत्वं स्त्रीतुल्यपारतन्त्र्याश्रितत्वं च प्रकटयते। अथ च भगवान् प्रागेव प्रतिश्रुतवानिति वचसा—* तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ * अनन्तः प्रथमं रूपं लक्ष्मणस्तु ततः परम् । बलभद्रस्तृतीय-स्तु कलौ कश्चिद्भविष्यति ॥ * इत्यादीनि वचनानि प्रत्यभिज्ञाप्यन्ते । अथ, परमपवित्रा वयमिहागतास्स्म इत्यनेन—आचार्यवर्ये भगवन्निर्विशेषताप्रतिपत्तिशालितारूपमानसशुद्धिवैशिष्ट्यमुक्तं भवति । * मम चाप्य-न्तरात्माऽयं शुद्धं वेत्ति विभीषणम् * इत्यत्रेव शुद्धिरिहावसेया । भावदोषाभाव एव शुद्धिः । अथ, अस्माकं प्रतिरोधं मा स्म कार्षीरित्यनेन—* नासंवत्सरवासिने प्रब्रूयादित्यादिशास्त्रावलम्बनेन न वयं तिरस्कर्तव्या इत्युक्तं भवति ॥ ... ... ... ... ... १६.

## १७. सप्तदशी गाथा—अम्बरमेतण्णीरे शोरे.

* सप्तदशगाथापद्यम् *

सर्वस्वोदार नन्दप्रभुवर भगवन् जागृहि, स्वामिनि स्त्री-

रत्न श्रीमद्यशोदे ! त्यज शयनरुचिं, लोकविक्रान्तपाद ।

स्वामिन् देवाधिदेव ! त्यज शयनरुचिं, रौहिणेय ! प्रसिध्य-

त्सौभाग्योत्तिष्ठ तूर्णं सममनुजनुषेत्यूचुषीं नौमि गोदाम् ॥ १७ ॥

वासस एव पायस एव अन्धस एव सत्पात्रवितरणे निरत स्वामिन् नन्दगोपाल ! उत्तिष्ठ । ललनाम-णीनां सर्वासां मध्ये संश्लाघनीये कुलदीपिके ! स्वामिनि यशोदे ! प्रबुध्यस्व । नभोरन्ध्रनिर्यत्समुत्तुङ्गपादाब्ज-विक्रान्तभुवन देवाधिदेव ! शयनं विजहीहि । हिरण्मयभूषणालंकृतपादाब्ज ! संपन्न बलदेव भोः ! त्वं स्वानुजेन सह जागृहि ॥ ( इति मूलगाथाविवर्तः । )

अधस्तनगाथाप्रार्थितद्वारपालकानुमत्या सानन्दमन्तःप्रविष्टा गोपाङ्गनाः नन्दगोपं यशोदां यशोदा-त्मजं बलभद्रं च प्रतिबोधयन्ति गाथयाऽनया । पुरस्तात्प्रतिबोध्यमानस्य नन्दगोपस्यौदार्यातिशयः प्रथम-पादे अत्युत्कर्षेण वर्ण्यते । वसनसलिलान्नदातृत्वरूपं तदायमौदार्यमभिष्टूयते । वसनसलिलान्नदातेत्यनुक्त्वा ' वसनस्यैव सलिलस्यैव अन्नस्यैव दाता ' इतितावन्मूले शब्दसन्दर्भो विराजते; अत्रायं भावः; एकैकवस्तु-दानावसरे वस्त्वन्तरप्रदानानभिज्ञाऽयमिति वक्तव्यतां वहन् अपारमितं वितरतीति । अस्तु, नन्दगोपस्यैता-दृशमौदार्यं कुत्र प्रसिद्धम् ? वसनस्य सलिलस्य ओदनस्य वा वितरणं तेन कदा कस्मै कृतमिति विमर्शे कृते अप्रसिद्धमेवैतस्य वदान्यत्वमिति वक्तव्यं भवति । ननु यादवाभ्युदये * व्यधित कल्पतरोरनुकल्पतामित्य-नेन कल्पतरोरप्यतिशयितमौदार्यं नन्दगोपे कथितमिति चेत्, कृष्णस्य पुत्रत्वेन प्राप्तिकाले अमन्दानन्द-सन्दोहपारवश्येन यदौदार्यमजनि तदेव तत्र कथितम्; समयविशेषेषु सकृत् विपुलविश्राणनं प्रायस्सर्वस्मि-न्नपि जने संभविष्णु; तन्न प्रशंसार्हम् । तर्हि कथमत्रोक्तं नन्दे महदौदार्यमिति चेदुच्यते । वस्तुत एतादृश-मौदार्यं कृष्णे भगवति दृष्टम्; * कारणगुणाः कार्ये संक्रामन्तीति न्यायानुध्यानेन एतानि वितरणानि कारणभूते नन्दगोपे अवश्यं स्युरिति मत्वा इदमौदार्यं तस्मिन्नारोप्य वर्ण्यत इति सुवचम् । कृष्णकृतमम्बरदानं द्रौपदीविषये सुप्रसिद्धम्; सलिलदानमपि महाभारते प्रसिद्धम्; तत् श्रीभट्टनाथसूक्ते ( ४–२.७ ) * मन्नमरुह * इत्यादिगाथायामुपवर्णितम्—कुरुक्षेत्रं प्रति युद्धाय प्रयाणकाले पाण्डवरथाश्वेषु भृशं पिपासितेषु वारुणास्त्रप्रयोगतो महीतलात्पयःपूरमुद्भाव्य प्रदत्तवान् कृष्ण इति । अन्नदानमपि श्रीभा-गवतादिषु प्रसिद्धम्, तत् अनयैव गोदादेव्या स्वकीयसूक्ते ( १२–६. ) * कात्तिणू मुदिलुम् करुविलैयुम् * इत्यादिगाथायामुत्तरार्धे सूचितम्; भक्तविलोचननामकात् स्थलविशेषाद्विप्रपत्नीभिर्नित्यमानीय दीयमानं सोपस्करमन्नं स्वसुहृद्भ्योऽसंख्यातेभ्यो गोपालबालकेभ्यः प्रदाय हि बुभुजे कृष्णः । एवं नाम कृष्णे प्रसिद्ध-

मेव वदान्यत्वं पितरि नन्दगोपेऽतिदिश्य कथ्यतेऽत्रेति वक्तुं योग्यम् । नन्दः स्वभावत एवैवं वदान्य आसीदिति वा गृह्यताम् । गोपीनां सर्वस्वभूतं कृष्णं यद्ददौ नन्दः तत एवैवं दातृत्वमुच्यत इत्यपि सुवचम् ।

"वासस एव पानीयस्यैव ओदनस्यैव दानम्" इति प्रत्येकमेवकारप्रयोगो (मूले) किमर्थमिति चेत्; वस्त्रदानकाले वस्त्राण्येव दातुमयं शक्तइति प्रतिभायात; पयोदानकाले पयएव दातुमयं प्रभवेदिति प्रतिभायात; अन्नदानकालेऽपि तथा । एतेन पुष्कलदानं प्रतिपन्नं भवति । एवंविधनिरतिशयौदार्यशालिन् नन्दगोप ! समुत्तिष्ठेति तं प्रतिबोध्य, अनन्तरं तद्दयितां यशोदां प्रतिबोधयन्ति [ कृशोदरीणां ललनानां मध्ये समुत्तुङ्गे ! कुलदीपिके ! स्वामिनि ! यशोदे ! जागृहि ] इति । अत्र यशोदायास्सर्वललनासमुत्तुङ्गत्वं यदभिधीयते तदिदं सर्वगोपाङ्गनामध्ये समुत्कृष्टतामभिप्रेत्य नावतीर्णम्; अपि तु भगवज्जननीत्वेन याया ललनाः प्रसिद्धाः ताभ्यस्सर्वाभ्योऽप्युत्कृष्टा सेयमेकैवेत्यभिप्रेत्य प्रयुक्तम् । श्रीरामचन्द्रजननीत्वेन प्रसिद्धा कौसल्या निरन्तररामानुभवभाग्यशालिनी नाभूत्; कृष्णस्य साक्षाज्जननी देवकी च प्रसवसमनन्तरमेव कृष्णमन्यत्र प्रापय्य शैशवबाल्यलीलादिकं मनागप्यननुभूय नक्तंदिवं प्रलापविलापैरेव जीवितं व्यपोहतिस्मेत्यवगमात् साऽपि शोचनीया संवृत्ता । सेयं यशोदा तु कृष्णकिशोरं सर्वात्मना पुष्कलमनुभूय परमानन्दसीम्नि स्थितेति अस्या भगवज्जननीष्वद्वितीयत्वमप्रकम्प्यम् । अथ "कुलदीपिके !" इति संबोधनं चास्या युक्तरूपम् । अतिजघन्यमपि गोपालकुलं कृष्णजनन्या अनयैव हि समुत्कर्षसंपादनेन समुद्दीपितम् ।

अथ भगवान् यशोदानन्दनमस्समुद्बोध्यते [ नभोरन्ध्रनिर्भेत्तसमुत्तुङ्गपादाब्जविक्रान्तभुवन ! ] इति । हे नन्दसूनो समुत्तिष्ठेति वा, हे नारायण समुत्तिष्ठेति वा अनुक्त्वा त्रैविक्रमक्रमकृताक्रमणत्रिलोकेतिसंबोधने कोऽभिप्राय इति चेत्; शंखरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनं स्वचरणाम्बुजम् अपेक्षानिरपेक्षमेव सर्वेषां जनानां वसिष्ठचण्डालविभागविरहितानां शिरसि निधाय स्वकीयसौशील्यसौलभ्यादिगुणपौष्कल्यं यथा हि त्रिविक्रमो भगवान् प्राचीकशत् तथैव सोऽयं कृष्णोऽपि प्रकाशयतीति हेतुना तत्साधर्म्यमस्मिन् सर्वदाऽप्यनुसंदधते भक्ताः; तादृशेनैवानुसन्धानेनात्र त्रैविक्रमक्रमकथनमारचयन्ति गोप्य इति बोध्यम् । एतद्दिव्यप्रबन्धोपक्रमे तृतीयगाथायामपि त्रिविक्रमकीर्तनपूर्वकं व्रतानुष्ठानकुतूहलं प्राकाश्यत । उपरिष्टादपि मङ्गलाशासनगाथायां ( २४ ) त्रिविक्रमपादाब्जमङ्गलाशासनमेव पुरस्तात् क्रियते । अतश्च सुदृढमवधार्यते भगवति कृष्णे गोपीनां त्रिविक्रमतादात्म्यानुसन्धानं गाढरूढमस्तीति ।

एवमुद्बोधितोऽपि कृष्णकिशोरो न वाचं व्यसृजत्; ज्यायसो बलभद्रस्य समुद्बोधनमकृत्वा किमिति कनीयसो मम समुद्बोधनं पुरस्तात् क्रियत इति तदभिप्राय इवेत्युन्नीय तदनु बलभद्रमुद्बोधयन्ति गोप्यः । बलदेवस्यास्य पादारविन्दसौष्ठववर्णनं क्रियते यदत्र गोपीभिः तदिदमतिचारु । देवकीगर्भसंभूतस्य कृष्णस्य अग्रजाः षट् शिशवः कंसेन व्यापादिता व्यलीयन्त, एवं कृष्णस्य यथा न काचिदपि विपदभूत् तथा नाम बलभद्रः स्वपादारविन्दं पुरस्तात् भुवि संचारयामासेति तस्मिन् कृतज्ञतानुसन्धानं क्रियत इति रुचिरतरमनुजगृहुराचार्याः । लोके तावत्कथयन्ति श्वश्रूश्वशुरादयः— 'अस्मदीया स्नुषा यदा नस्सद्मनि पादन्यासमकरोत्ततः प्रभृति अनुक्षणमस्माकं सम्पत्समेधते' इति । संपद्विपर्यये सति च 'यदा तावदियं दुर्भगा स्नुषा नः कुले पदं न्यधत्त ततः प्रभृति नित्यं विपद एव' इति वदन्ति । तथाच सम्पदां विपदां वा कस्यचिज्जनस्य पादन्यासं हेतुत्वेन कथयन्तीति लोकानुभवसिद्धः । अत्र गोकुले सन्निधानायास्सम्पदो निदानं प्रथमतो बलभद्रकृतः पादन्यास एवेति वक्तुकामा इव गोप्यस्तदीयपादसंपदुपवर्णने प्रवृत्ता इति विभाव्यम् । बलभद्रं संबोध्य अनुजेन सह त्वं वीतनिद्रो भूया इति कथयन्ति । अनुजस्याच्युतस्य कृपोलम्भने भवान् श्रद्धालुर्भूयादिति प्रार्थनैवात्र तात्पर्यविषयभूता । वस्तुतो बलभद्रे वाक्चातुर्यभूमा विश्रुतो विराजते । तथाहि; * मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति । नगरस्त्रीकलालापमधु श्रोत्रेण पास्यति * इति गोपीनां

मुखान्निर्वेदवचनमुद्गमय्य व्रजाद्विनिर्गतो गोपालकृष्णो मथुरां प्रयातो बहुतिथात्कालादनन्तरं कदाचिद्गो-पीरनुस्मृत्य तासां निर्वेदातिशयं चानुसन्धाय तास्समाश्वासयितुमग्रजं बलरामं प्राहैषीत ; स च व्रजमुपेत्य * संदेशैस्साममधुरैः प्रेमगर्भैरगर्वितैः । रामेणाश्वासिता गोप्यः * इत्युक्तरीत्या साममधुरैः प्रेमगर्भैर्वाग्भि-रैस्तास्समाश्वासयतिस्मेति प्रसिद्धं ननु । प्रकृत्यैवायं साममधुरप्रेमगर्भवाग्भरविन्यसनविचक्षणा इति गोपीभिस्सर्वाभिरवधारितं चास्ति । अत एवात्र ' बलभद्र ! त्वमुत्तिष्ठ ' इत्येतावन्मात्रमनुक्त्वा अधिक-मुक्तिमिति वेदितव्यम् ।

( अथ ध्वन्यर्थविवरणम् । ) गाथायामस्यां नन्दगोपो यशोदा कृष्णो बलभद्रश्चेति चतस्रो व्यक्त-यस्समुद्बोधिताः खलु; क्रमेण, आचार्यः मन्त्रः मन्त्रार्थः मन्त्रार्थसारश्चेति चतुर्णामुद्बोधनमिह क्रियत इति बोध्यम् । क्रमशो विवृणुमः । आचार्यस्य नन्दगोपाल इति नाम सर्वथा युज्यते । नन्दतीति नन्दः; गाः पालयतीति गोपालः; नन्दश्चासौ गोपालश्चेति नन्दगोपाल इति खलु विग्रहः । * न बोधादपरं सुखमित्युक्तेः ज्ञानसाम्राज्यप्रयुक्तपरमानन्दशालीति नन्दः । ज्ञानं चात्र भगवत्स्वरूपरूपगुणविभूतिचेष्टितादिविषयक-मिति एतादृशज्ञानमूलक आनन्दस्सत्यमसमाभ्यधिकः । गोपालपदं पूर्वाचार्यदिव्यसूक्तिसंरक्षकार्थकम्; नानार्थवाचिनो गोशब्दस्यात्र वागर्थकत्वमवसेयम् । पूर्वाचार्यवाचो वाक्पदविवक्षिताः । अधीतिबोधा-चरणप्रचारणव्याख्यानादिमुखेन पूर्वाचार्यदिव्यसूक्तिपरिपालक ! , अत एव परमानन्दसंदोहमूर्ते ! इति संबोधितमिति सिध्यति । अयमाचार्यः अम्बरस्य सलिलस्य अन्नस्य च प्रदातेत्येतदपि सुष्ठु संगच्छते । कथम् । * व्योम पुष्करमम्बरमिति कोशात [ मूलगाथायां प्रयुक्तः ] अम्बरशब्द आकाशवाची । परमा-काशशब्दवाच्यो वैकुण्ठो विवक्षितः । सलिलशब्देन विरजा नाम सीमान्तसिन्धुर्विवक्षिता । अन्नशब्देन * अहमन्नादोऽहमन्नादोऽहमन्नादः * इत्युपनिषद्वाक्यगतान्नशब्दार्थभूतं परं ब्रह्म विवक्षितम् । तथाच सीमान्तसिन्ध्वाप्लवं दिव्यधामप्राप्तिं परिपूर्णब्रह्मानुभवं च प्रयच्छन् परमधार्मिकोऽयमाचार्य इत्युक्तं भवति ।

अथ यशोदासमुद्बोधनम् श्रीमदष्टाक्षरमहामन्त्रसमुद्बोधनं मन्तव्यम् । * मन्त्रो माता गुरुः पितेति ह्याहुः । माता यथा शिशुं स्वगर्भे बिभर्ति तथा मन्त्रोऽपि भगवन्तं गर्भे बिभर्तीति हेतुना मन्त्रस्य मातृस्था-नीयता समुपपन्ना । यशोदा यथा हि भगवन्मातृवर्गेषु सुप्रशस्ता तथा भगवन्मन्त्रेषु परमं प्राधान्यमश्नुते मूलमन्त्रः । तथाचानुगृहीतं भगवता लोकाचार्येण मुमुक्षुप्पडिनाम्नि दिव्यरहस्यग्रन्थे— " भगवन्मन्त्रा-स्तावदनेके ; ते च व्यापका अव्यापका इति वर्गद्वयात्मना विभज्यन्ते । अव्यापकापेक्षया व्यापकास्त्रयः श्रेष्ठाः । एषु च मध्ये श्रीमदष्टाक्षरमहामन्त्रः प्रधानतमः " इति । अथ मन्त्रराजस्यास्य कुलप्रदीपकत्वं यदिहोक्तं तदपि सुष्ठु संगच्छते । तत्तु श्रीपरकालदिव्यसूरिसूक्तिसुगमम् । स तावदष्टाक्षरमहामन्त्रप्रदीय-मानफलराशीन् प्रतिपादयन् " कुलन्तरुम् शेलवम् तन्दिडुम् " [ कुलं ददाति सम्पदं ददाति ] इत्यनया गाथया कुलप्रदानरूपं फलं हि प्रथमतोऽस्य प्रतिपादयति । गायत्री तावत् ब्राह्मणकुलप्रसवित्री; श्रीमदष्टाक्षरी तावत् श्रीवैष्णवकुलप्रसवित्रीति अस्मदाचार्यपरम्पराभिरनुसन्धीयते । ब्राह्मण्यं तावच्छरीरमात्रनिष्ठम् ; श्रीवैष्णवत्वं तु आत्मानुबन्धीति तदेवोत्कृष्यते । तादृगुत्कृष्टकुलसंपादकत्वकथनमुखेन तत्प्रशंसा कृता भवति । आचार्यकृपया मन्त्रराजो मे अर्थप्रकाशको भूयादित्याशंसनमेव मन्त्रसमुद्बोधनमिति बोध्यम् ॥

अथ समुद्बुद्धमन्त्रार्थप्रतिपादनं क्रियते त्रैविक्रमक्रमकृताक्रमणत्रिलोककृष्णसमुद्बोधनापदेशेन । श्रीमन्नारायणाष्टाक्षरी, विष्णुषडक्षरी, भगवद्वासुदेवद्वादशाक्षरी, इति व्यापकमन्त्रास्त्रयः ; तेषु श्रीमन्नारा-यणाष्टाक्षर्या एव प्राधान्यमित्युक्तमुपात्तपूर्वभगवल्लोकाचार्यश्रीसूक्तितः । अत्र किं कारणमिति चेत्, श्रूयताम्; भगवतस्सर्वव्यापकतां ये मन्त्राः प्रतिपादयन्ति ते हि व्यापकमन्त्रत्वेन व्यपदिश्यन्ते; तच्च व्यापकत्वम् अस्मि-न्नेव मन्त्रराजे पौष्कल्येन प्रतिपाद्यत इति हेतुनाऽस्य प्रशस्तिरभ्युपगता । तादृशं व्यापकत्वंभगवता त्रैविक्र-

मापदाने सुष्ठु प्रकाशितमिति सर्वं संविदते। अत्र च तदपदानानुसन्धानमुखेन मन्त्रार्थसर्वस्वं प्रकाशितं भवतीति वेदितव्यम्। दिव्यसूरयश्च मूलमन्त्रानुसन्धानप्रकारणेषु प्रायस्तदर्थत्वेन त्रिविक्रमापदानमनुसंदधत इति दिव्यप्रबन्धसिन्धुगाढावगाढा विजानन्ति। नात्र तद्विस्तरः॥

अथ बलभद्रप्रबोधनापदेशेन मन्त्रार्थसारस्याप्यनुसन्धानं कृतं भवति। श्रीपरकालसूरिप्रवरो भागवतशेषत्वमेव मन्त्रार्थसारभूतमिति निश्चिनोतिः तथाच तत्सूक्तिः—"निन्तिरुवेट्टॆळुत्तुम् कत्तु नान्—उत्तुमुण्डियार्क्किमे" इति। अस्या अर्थः—भगवन् भवदीयाष्टाक्षरमहामन्त्राध्ययनतो मया गृहीतोऽर्थो भागवतशेषत्वम्—इति। बलरामोऽत्र भागवतत्वेन विवक्षितः। आदिशेषस्तावद्रामावतारे [ सौमित्रिरूप ] अनुजत्वेनावतीर्य यादृशं भगवद्रक्षणं विदधे, तादृशमेव स कृष्णावतारेऽस्मिन [ बलभद्ररूप ] अग्रजत्वेनावतीर्य व्यरचदित्याचार्या अनुगृह्णन्ति। * एकदा तु विना रामं कृष्णो वृन्दावनं ययौ * इत्यादिपुराणरत्नसूक्तिमनुसृत्य श्रीपराशरभट्टार्या अनुगृह्णन्ति बलभद्रस्तुतिपरे श्रीरङ्गराजस्तवीये श्लोके— * यद्विश्लेषलवोऽपि कालियभुवे कोलाहलायाभवत् * इति। तथाच भगवतः कृष्णस्य परिरक्षणार्थमेवायमवतीर्णो बलभद्र इति स्फुटतरं प्रतिपन्नः भागवतगोष्ठ्यामस्य परिगणनं सुपपन्नम्। अस्य प्रबोधनं यत्कृतमत्र तदेतद्भागवतशेषत्वानुसन्धानान्नातिरिच्यत इति बोद्धव्यम्। "त्वदनुजेन सह त्वमुद्बुध्यस्व" इति कथनं चात्र सुतरां चारु; भागवतशेषत्वं तावत् भगवच्छेषत्वान्नातिरिक्तम्; काष्ठापन्नं भगवच्छेषत्वमेव हि भागवतशेषत्वशब्दाभिलप्यमिति। भगवच्छेषत्वं च भागवतशेषत्वपर्यवसायि सदेव शोभते इति हि परमार्थः। उभयोश्च अविनाभूतत्वमत्र मूलसूक्तिस्वारस्यसिद्धमिति रस्यमिदं रहस्यम्। बलभद्रस्य ज्येष्ठत्वं कृष्णस्य कनिष्ठत्वं च—भागवतशेषत्वरूपस्यार्थस्य ज्यायस्त्वम् भगवच्छेषत्वरूपस्यार्थस्य अवरत्वं च द्योतयतीति सर्वं समञ्जसम्॥ १७

---

# १८ अष्टादशी गाथा—उन्दुमदकलित्तन्

( अष्टादशगाथापद्यम्। )

नीले! नन्दस्नुषे भोः सुरभिकचभरे कन्दुकोल्लासिहस्ते
कूजन्तः कुक्कुटास्सन्त्यथ च पिकगणो माधवीपुञ्जवासी।
शश्वत्कूजत्यहो त्वं निजकरवलयान्नादयन्ती कवाटं
हस्तेनोद्घाटयेथाः स्वपतिनुतय इत्यूचुषीं स्तौमि गोदाम्॥ १८॥

मदजलस्रुतियुक्तमातङ्गसंपन्नस्य (अथवा) मत्तमातङ्गजैत्रस्य (यद्वा) मत्तमातङ्गोपमेयस्य अप्रमेय भुजबल शालिनश्च नन्दगोपस्य स्नुषे! नीलादेवि! सौगन्ध्यसंभृतचिकुरबन्धे! कवाटबन्धमुन्मोचयेथाः। कुक्कुटास्तावत् सर्वत्र प्रमुमराः कूजन्ति। माधवीततिनिषण्णाः कोकिलगणाश्चासकृन्निजकण्ठनादं प्रदर्शयन्ति। अयि कन्दुकाञ्चितपाणितले नीले! युष्मद्वल्लभवैभवसंकीर्तनार्थमस्मानन्तः प्रवेशयितुं सौवर्णकरवलयततिनिनदेन सह समागत्य सरसिजोपमेयपाणितलेन सानन्दं समुद्घाट्य कवाटिकाम्॥ ( इति मूलगाथाविवरः। )

कन्यकासन्नाहमन्तरेण पाणिग्रहणकल्याणोत्सवकोलाहलोपबृंहणवत् कृष्णावतारे प्रधानमहिषीपद-वीमलङ्कुर्वाणाया नीलादेव्याः प्रतिबोधनरूपा प्रार्थना हन्त न कृता खल्वस्माभिरिति प्रबुद्धा गोप्योऽथ नीलादेवीं प्रतिबोधयन्ति गाथयाऽनया। अत्रेदं विवक्षितमस्माकम्॥ * चित्तहृङ्गमोहनाङ्गाय श्रीमते नन्द-सूनवे। रुक्मिणीसत्यभामाभ्यां नित्ययुक्ताय मङ्गलम्॥ * इत्यादिषु वचनसहस्रेषु यद्यपि कृष्णस्य रुक्मि-णीसत्यभामावल्लभत्वं प्रतिपाद्यते, अर्चावतारेषु च तद्देवीद्वितयसाहित्यमेव दृश्यते, तथाऽपि दिव्यसूरिवरा नीलादेवीवल्लभत्वमेवास्य विशेषतोऽनुसंदधते। चतुस्सहस्रगाथात्मके कृत्स्नेऽपि दिव्यप्रबन्धे रुक्मिणीदेव्याः प्रस्तावः त्रिचतुरेष्वेव स्थलेषु दृश्यते। नीलादेव्याः प्रस्तावस्तु परश्शतेषु स्थलेषु। अत्र तु कारणं श्रीकूर-नाथगुरुवराः प्रदर्शयन्ति सुन्दरबाहुस्तवे * नीला कुलेन सदृशी किलेति। श्रीभक्तिसारमुनीन्द्रश्च स्वकीये तिरुच्चन्दविरुत्ताभिधे दिव्यप्रबन्धे * आयनाहि आयर्मङ्गै वेयतोळ् विरुम्बियाय * इत्यनया गाथया गोप-कन्यकाया नीलादेव्याः पाणिग्रहणार्थमेव कृष्णो गोपकुलं प्राविशदिति समघनमत्ने। तदनुसृत्यैव श्रीकूर-नाथगुरुभिरुक्तम्। श्रीवैष्णवव्यतिरिक्ताः कवयो भक्ता वा नीलादेवीं नैवाभिजानन्ति। यतस्तेषां ग्रन्थेषु अस्याः प्रस्तावगन्धोऽपि नास्ति तत एवैतदवधार्यते। अस्तु। सेयं नीलादेवी द्राविडभाषया * नप्पिन्नप्पि-राट्टि * इति व्यपदिष्टा। यशोदायास्सोदरस्य कुम्भनाम्नो गोपस्य दुहिता सेयमिति, अत्युद्धतानां सप्तानां वृषभाणाम् अवलेपलोपनेन सेयं कृष्णेन परिणीतेति च इतिहासः प्रथते। श्रीदेवीभूदेवीसहपठिताया नीला-देव्या इयमंशभूतेति हेतुना तन्नाम्ना व्यवहृताऽभूदिति वेदितव्यम्। एतद्दिव्यप्रबन्धमस्य व्याख्ये * नीलातुङ्गस्त-नगिरितटीसुप्तम् * इति हि श्रीपराशरभट्टार्यैरनुगृहीतम्। ततश्चावधार्यते देव्या अस्या नीलानामकत्वम्। यद्यप्यस्याः कथा श्रीविष्णुपुराणे श्रीभागवते वा नोपलभ्यते, तथाऽपि हरिवंशे कीर्तितेति यादवाभ्युदयव्या-ख्यायां दीक्षिता विलिलिखुः। कथा च तैर्विव्रियतेस्म। अत्र बहुवक्तव्यमस्मदीयग्रन्थान्तरेषु सुवहुक्तमिति नात्र विस्तरः॥ कृष्णस्य व्रजवासकाले सेयमनुरूपा अभिमता च जाया चिरराजेति हेतुना अस्मदीया दिव्यसूरिवरा इमामेव क्रियासमभिहारेण प्रशंसन्ति। तामेव पद्धतिमनुसरति गोदादेव्यपि॥

नन्दगोपस्यस्नुषे! इतितावत्सेयं संबोध्यते। "कुम्भस्य पुत्रिके!" इति पितृसंबन्धनिर्देशं विहाय कुत एवमुच्यते? इति चेत्; स्त्रीणां पाणिग्रहणोत्सवसम्पत्तिसमनन्तरं पितृकुलापेक्षया पतिकुल एव परमो-द्देश्यताधीः प्रथते। हनुमतस्सविधे [ शिंशुपातरोर्मूले ] स्वात्मानमभिज्ञापयन्ती सीतादेवी * स्नुषा दशरथस्याहं शत्रुसैन्यप्रतापिनः * इति प्रथमतो दशरथस्नुषात्वमभिधायैव पश्चात् * दुहिता जनकस्याहं वैदेहस्य महात्मनः * इति विदेहराजदुहितृत्वं प्रस्तौतिस्म। भर्तृगृहे सीमापन्नदारिद्र्यसत्त्वेऽपि पितृगृहे कुबेरैश्वर्यसम्पत्तिसद्भावेऽपि पतिकुले केवलं ममभमा भवति ललनानामिति कविवराः कथयन्ति। एवञ्च नन्दस्नुषे! इति संबोधनमेवात्र सर्वथाऽप्युपपद्यत इत्यास्थेयम्। अस्याश्च श्वशुरो नन्दगोपो विशेषणद्वित-यमिह लम्भितोऽस्ति। मूलगाथायाम् * उन्दुमदकळित्तन् * इति प्राथमिकं विशेषणपदम्। तच्च द्राविडपदं त्रिविधमर्थं सहते; १. मदजलस्रुतियुतमातङ्गसम्पन्नत्वमेकोऽर्थः। अस्मिन्नर्थे किञ्चिद्विचारणीयमस्ति; मद-जलस्रुतिवैशिष्ट्यं मातङ्गानां स्वाभाविकमिति न तत्र कोऽपि विचारः; मत्तमातङ्गसंपन्नत्वं नन्दे कथं संभ-वति? गवां महिषाणामजानां च समृद्धिरस्मिन्नस्ति नाम; गजसमृद्धिरस्यासीति कुत्रापि नोक्तं खलु; तत्कथमुच्यते साऽस्येति शङ्का जायेत। अत्र नानाविधास्सन्ति समाहितयः; एका तावदिहोच्यते; व्रजे कृष्ण एव मत्तेभनिर्विशेषो विहरतीति गोदादेव्या जनको भट्टनाथसूरिरलकृत्प्रतिपादयति; तदनुसारेण कृष्ण एवात्र मत्तमातङ्गत्वेनापदिश्यते। उपरितने श्रीगोदासूक्तदिव्यप्रबन्धेऽपि [ नाच्चियार्तिरुमोळि ] कृष्णस्य मत्तमातङ्गत्वमसकृदभिधीयतेऽनयैव गोदया। एवञ्च मत्तमातङ्गसंपन्नत्वं नन्दे निरपायं निध्येयम्। कृष्णस्य करिणा साम्यं बहुभिः प्रकारैः निरूप्यते; तद्विस्तरस्तावदुपरिष्टात्।

अथ मत्तमातङ्गजैत्रत्वम् मत्तमातङ्गोपमेयत्वं च नन्दे द्वितीयतृतीयार्थत्वेन कथ्येते। एतदर्थद्वयमपि अभिन्नतात्पर्यकमेव; कमलजैत्रविलोचनः कमलाभविलोचन इतिपदयोर्यथा समानतात्पर्यकत्वं तथा ह्येतत्।

मत्तमातङ्गतुल्यबलाढ्योऽयं नन्द इत्युक्तं भवति । * य आत्मदा बलदा इति श्रुत्या भगवतो बलप्रदायकत्वमाम्नायते । अतिक्षुद्रविषयानुभवोत्सुकानां जनानां तदनुगुणं बलमावश्यकमिति स्थिते सर्वोत्तुङ्गभगवद्विषयानुभवकुतूहलिनां तदनुरूपं बलमत्यावश्यकमित्यत्र को विवादः ? तादृशं बलं स एव भगवान् प्रयच्छतीति श्रुतिराम्नासीत । तादृशा बलेन भरितस्सोऽयं नन्दगोप इत्युक्तं भवति । अथ विलक्षणभुजबलशालित्वरूपद्वितीयविशेषणेन च इदमेव विवृतं भवति ।

एतादृशस्य नन्दगोपस्य स्नुषे ! इति ( नामनिर्देशमन्तरा ) संबोधयन्ति स्म प्रथमतो गोप्यः; तदाकर्ण्य सा ' व्रजे सर्वा अपि ललना नन्दस्य स्नुषा एव हि; सजातीयान् पुरुषान् वृद्धनारीः शिशूंश्च वर्जयित्वा अवशिष्टा सर्वाऽपि जनता नन्दस्नुषैव ननु' इति मत्वा प्रत्युत्तरमनभिधाय जोषमास्त । अथ कथयन्ति गोप्यः भो नीलादेवि ! इति नाम निर्दिश्य । केवलं कृष्णप्रेमपात्रभूता नन्दस्नुषास्सन्तु नाम; शास्त्रीयपद्धत्या परिणीतां भवतीमेव वयं संबोधयाम इत्यन्वकथन । अथ सा नीला कृष्णपार्श्वे स्वस्यावस्थितिमपलपितुकामा सती नीला नात्रास्तीत्यव्यवाचा प्रोवाच तदनु संबोधयन्ति [ सौगन्ध्यसंभृतचिकुरबन्धे ! ] इति; * न हि कस्तूरिकामोदः शपथेन निवार्यते * इति जानीहि नीले !; त्वदलकनिहितकुसुमसौरभमेव हि तव अन्तः स्थितिं पिशुनयति; वृथाऽपलापेन किं ते फलं सेत्स्यतीत्युक्तं भवति । अधस्तात् द्वितीयगाथायाम् प्रकृतव्रतसमाप्तिपर्यन्तं पुष्पधारणादिकमस्माभिर्वर्जनीयमिति यत्संकल्पितं सर्वाभिः, तद्विरोधेन एकाकिन्या भवत्या क्रियमाणं कुसुमधारणं किं ननु युज्यते ? महदवद्यं खल्वेतत् इति क्षेपश्चात्र गम्यः ॥

अथ नीला स्वस्य कान्तस्वस्थाननिह्नवयत्नो विफल एवेति मत्वा ' अयि भोस्सख्यः ! निशीथः खल्विदानीम्, अकाले किमिति सम गतास्स्थ ?' इति पप्रच्छ; तत्रोत्तरमुदीरयन्ति गोप्यः । [ कुक्कुटास्तावत् सर्वत्र ससंभ्रमाः कूजन्ति; माधवीलतानिषण्णाः कोकिलाश्च असकृत्क्वणितकण्ठनादं प्रदर्शयन्ति ] इति । अनेन प्राभातिकाभिज्ञानद्वितयं कथितं भवति । तदिदमाकर्ण्य सा अप्रतिभाभिर्नायावस्थे; अथ पुनरपि तामुद्बोधयन्ति-[ अयि कन्दुकाञ्चितपाणितले ! ] इति । कृष्णेन सह चिरं कन्दुकताडनक्रीडां विरचय्य परिश्रान्ता अधुनैव तल्पमधिशयितवती किम् ' इति पृच्छन्तीव । अथ किं चिकीर्षितमधुना युष्माकमिति पृष्टवत्यास्तस्या उत्तरमाहुः— [ युष्मद्वल्लभवैभवसंकीर्तनार्थमिति । ] त्वदेकवल्लभस्य कृष्णस्य सौशील्यसौलभ्यादिगुणजातं त्वया सह संमिलितास्सत्यो गातुमुत्कण्ठितास्स्म इत्यर्थः । अथ नीला निजगाद "कवाटं न कीलितमस्ति; युष्माकमुद्घाटनार्हमेव वर्तते; स्वयमुद्घाट्य काममन्तः प्रविशत" इति अथ गोप्य आचक्षते– [ सौवर्णकरवलयनिनदैः सह त्वं समागत्य त्वत्पाणिरत्नेन कवाटमुद्घाट्य अस्मानन्तः प्रवेशय ] इति । अयि सखि ! अस्माकमन्तःप्रवेशमात्रं न काङ्क्षितम्; त्वदीयकरवलयवितताशिञ्जितश्रवणेन श्रोत्रानन्दं लभेमहि; त्वद्गतिसौन्दर्यविलोकनेन नयनानन्दं च विन्देमहि—इति भावः ।

इयं गाथा विशिष्य भगवद्रामानुजमुनेरादरातिशयपात्रभूतेति संप्रदायविदः । तिरुप्पावैजीयरित्येव हि भगवद्रामानुजदिव्यनामप्रथा । भिक्षापर्यटनावसरेषु तमिमं दिव्यप्रबन्धमुपांशु कथयन्नत्र पर्यटन् एकस्मिन्दिने स्वाचार्यस्य महापूर्णस्य दिव्यभवनोपसर्पणसमये क्रमप्राप्तामिमां गाथामनुसंदधानः कवाटोद्घाटनाय समुपागतामाचार्यदुहितरम् अत्तुळाय्नाम्नीमवेक्ष्य प्रकृतगाथार्थानुगुण्यं च संचिन्त्य तामेव कन्यकां नीलादेवीं मन्यमानो व्यामुमोह स्मेति । अस्मिन्नैतिह्ये महापूर्णगुरुस्थाने अन्यमाचार्यं केचित्कथयन्ति ॥

( अथ ध्वन्यर्थविवरणम् । ) नन्दगोपस्य स्नुषा ह्यत्र प्रबोध्यते. नन्दगोपपदमाचार्यापदेशेन प्रयुक्तमिति पूर्वगाथायां सुष्ठु विवृतम्; तदिहाप्यनुसन्धेयम्; तस्यान्तरङ्गप्रियशिष्यः स्नुषात्वेन कथ्यत इति वेदितव्यम् । प्रथमत आचार्यस्य प्रभावातिशयो विशेषणद्वितयेन प्रकीर्त्यते । महागजसंपन्नत्वं महागजजेतृत्वं महागजोपमेयत्वं चेति त्रितयं प्रथमविशेषणार्थ इति प्रत्यपादयाम; तदिदं त्रितयमप्याचार्ये सुष्ठु संगच्छते । महाग-

जलेपत्नत्वं पुरस्तादुपपाद्यते। दिव्यसूरिवरैस्तत्रतत्र भगवन्तं प्रति प्रयुज्यमानेषु संबोधनेषु "हे मत्तमातङ्ग!" इति संबोधनमसकृदवेक्ष्यते; १. मातङ्गो यथा बलीयानपि सन् आलानबद्धो भवति तथा परमशक्तियुक्तोऽपि भगवान् उलूखले दाम्ना निबद्धो भवति। २. वेतण्डः स्वात्मबन्धनशृङ्खलिकामाधोरणाय यथा स्वयमेव ददाति, भगवानपि तथा स्वात्मनियन्त्रणोपयुक्तं भक्तिपाशं भक्तजनाय स्वयमेव वितरति। ३. गजो यथा स्वात्मानमधिरोढुमिच्छतां जनानां स्वचरणमेव आरोहणसाधनतया प्रदर्शयति, तथा भगवानपि स्वात्मानं प्रेप्सतां सतां स्वपादारविन्दमेव साधनतया निर्दिशति। ४. हस्ती यथा आधोरणानुज्ञामन्तरेण मार्गे जनं धिक्करोति तथा भगवानपि आचार्याद्देशमन्तरा स्वसविधमागतं जनमुपेक्षते। ५. कलभो यथा स्वकीयस्थितिगमनशयनादिकम् आधोरणाज्ञानुसारेणैव स्वीकरोति, तथा भगवानपि स्वान्तरङ्गभक्तजनाधीनस्थितिशयनगमनादिको भवति; तदिदं भक्तिसारमुनीन्द्रदिव्यचरितेऽनुसन्धेयम्; काञ्च्यां वेगासेतुर्भगवान् यथोक्तकारीत्येव हि नाम बिभर्ति। ६. करी यथा स्नापितोऽपि क्षणमात्रे परागलिप्तगात्र एव भवति, तथा भगवानपि उभयवेदभक्तसंराधितदिव्यात्मस्वरूपोऽपि सन् अस्मादृशामपि कापुरुषाणां दुर्वचोभिरात्मानं मलिनीकरोति; अत्र * स्वं संस्कृतद्राविडवदसूक्तैर्भाति मदुक्तैर्मलिनीकरोति। श्रीरङ्गकम्रः; कलभं क एव स्नात्वाऽपि धूलीरसिकं निषेद्धा॥ *इत्येषा श्रीरङ्गराजस्तवसूक्तिरनुसन्धेया। ७. इभो यथा पर्वतवासेषु परमां रुचिं धत्ते तथा भगवानपि श्रीवेङ्कटाद्रि-कारगिरि-काननाद्रिप्रभृतिपर्वतविशेषवसतिरसिको विराजते। ८ यथा नाग एकेनैव हस्तेन युक्तः, तथा भगवानपि * दद्यान्न प्रतिगृह्णीयादित्युक्तरीत्या औदार्यभूषितमेकमेव हस्तं बिभर्ति। महाबलिप्रभृतिकतिपयव्यक्तिसविधे कृता याच्ञाऽपि सत्यमौदार्यसीमाभूमिरेवेति मन्तव्यम्। ९. द्विपो यथा स्वेन लब्धं धनमाधोरणाय ददाति तथा भगवानप्यर्चासु स्वात्मनोपार्ज्यमानमर्थजातम् अर्चकपरिचारकादिभ्यः प्रयच्छति। १०. दन्ती स्वयमतिशयितबलाढ्योऽपि सन् यथा स्वल्पतरादङ्कुशाद्बिभेति, तथा भगवानपि भक्तिक्रीतः सन् भक्तेभ्यो भीतभीत इवावतिष्ठते। इत्येवमाद्या गजसाम्यनिर्वाहकप्रकारा अनुसन्धेयाः। तथाच मदहस्तितुल्यविशेषेण भगवता संपन्न आचार्य इति बोध्यम्। मत्तमातङ्गत्वमप्यक्षतमाचार्ये; इन्द्रियरूपमत्तगजावलेपनिरासकत्वात्।

अथ कलभनिभत्वमप्याचार्ये सूपपादम्; ऐतिह्यविशेषविलेखनमुखेन तदिदमुपपाद्यते। पुरा कदाचिद्भगवान् भाष्यकारः सह शिष्यवर्गैः श्रीवेङ्कटाद्रिमाजगाम; तदात्वे तत्र स्थिता महान्तः पादारविन्दयोः प्रणिपत्य कांश्चिदर्थविशेषानुपदेष्टुमर्थयन्त स्म। प्रार्थनां च तामुररीकृत्य गुरुवरो यतिराजो द्वयाख्यस्य मन्त्ररत्नस्यार्थविशेषान् प्राधान्येनोपादिशन् मूलमन्त्रचरमश्लोकयोरप्यर्थं समगृह्णात। अवसिते चास्मिन् मधुरलक्षितोपदेशे, श्रोतृष्वन्यतमोऽनन्तार्यः [ अनन्दाळ्वान्स्वामी ] समुत्थाय "द्राविडाम्नायेषु श्रीभूतयोगिनाऽनुगृहीते द्वितीयान्तादिदिव्यप्रबन्धे * पेरुहुमदवेळम् * इत्युपक्रमशालिनी या गाथा विराजते तस्या हार्दमाशयमद्यैव वयमवगन्तुं भाग्यमलभामहि' इति विज्ञाप्य, तस्या भूतयोगिसूक्तेरर्थं सुविशदमुपन्यास्थत्। तस्या द्राविडगाथायाः संस्कृतविवर्तपद्यमस्मदीयमिदम्: श्लो.॥ स्रवन्मदजलः करी स्वदयितां पुरस्कृत्य सन् द्विपर्वसहितं मृदुं मधुरवेणुदण्डाङ्कुरम्। प्रगृह्य सविधस्थिते मधुनि मेळयित्वाऽथ तां प्रभोजयति यत्र वै स खलु वेङ्कटाद्रिर्हरेः॥ इति। तत्रतत्र शैलेषु चरन्तः करिणः करिण्यां प्रेमभूम्ना ( पर्वद्वयविशिष्टम् ) वेणुदण्डाङ्कुरमुत्खाय तं मधुना सह मिश्रमाकलय्य करिणीं प्राशयन्तीति वस्तुस्थितिः। स्वभावोक्तिरियम्। एवमेव श्रीवेङ्कटाद्रिवर्णनेऽत्र श्रीभूतयोगिनाऽन्वग्राहि। अन्योपदेशगाथा सेयमिति महतां महामतीनां प्रतिपत्तिः। भगवद्रामानुजमुनिरेवात्र करिवरत्वेन कथ्यते। अभिमता शिष्यमण्डली करिणीत्वेनापदिश्यते। खण्डद्वयात्मकं मन्त्ररत्नं [ द्वयमन्त्रः ] पर्वद्वययुक्तमृदुमधुरवेणुदण्डाङ्कुरत्वेनाभिधीयते। मूलमन्त्रः चरमश्लोकश्च सविधस्थितमधुत्वेनोपवर्ण्यते। वस्तुतः श्रीमन्नारायणवदनारविन्दविनिर्गलितं मधु खलु तद्द्वितयम्। द्वयमन्त्रस्य तस्मिन्मधुनि संमेलनं नाम—मूलमन्त्रचरमश्लोकार्थसंवलितद्वयार्थवर्ण-

नमेव। एवं भगवान् भाष्यकृदत्रागत्य मधुरतरार्थवर्णनेनास्माननुग्रहीष्यतीति पुरैव प्रत्यग्दृशा समीक्ष्य भूतयोगी बभाषे—इति तावदनन्दाळ्वान्स्वामिनामुपन्यासलसर्वस्वम् । एतेन च मत्तवारणत्वमाचार्यवर्ये सुपपन्नं वेदितव्यम् ॥

अथ [ द्वितीयविशेषणं ] विलक्षणभुजवत्तशालित्वमप्याचार्यवर्ये सुष्टु निर्वोढुं शक्यम्; * यद्वा न मे भुजबलं तव पादपद्मलाभे * इति श्रीगुणरत्नकोशे कथनात् शिष्या भगवत्पादारविन्दप्राप्त्यौपयिकभुजबल-दरिद्रा इत्यवगम्यते। आचार्यो हि तथाविधभुजबलसमृद्धः। जननपदवीजङ्घालानामस्मादृशां मुहुरितस्ततः पलायनं परासितुं प्रभवता भुजबलेन सुशोभित आचार्य इत्युक्तं भवति । एतादृशस्याचार्यसार्वभौमस्य परमप्रीतिपात्रभूत भो अन्तेवासिवर्य ! इति संबोधितं भवति । [ सौगन्ध्यसंभृतचिकुरबन्धे ! ] इत्यनेन * नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिमित्युक्तरीत्या विनयावनतशिरस्कत्वरूपः सौरभातिशयः कथितो भवति । [ कवाटबन्धमुन्मोचयेथाः ] इत्यनेन आचार्यसार्वभौमपरिसरमस्मान् प्रापयेत्युक्तं भवति। [ कुक्कुटास्तावत् सर्वत्र प्रसृमराः कूजन्ति ] इति प्रत्यूषे निद्रां विसृज्य स्वयं प्रबुध्यमानो जन्तुविशेषः कुक्कुटः तथा नाम प्रबुद्धा अनलसा अन्तेवासिन इह विवक्षिताः। किञ्च कुक्कुटा अवकरे निगूढमपि रत्नादिकं श्रेष्ठ-वस्तु चञ्चुपुटेन क्षणमात्रे निस्सारयन्तीति प्रसिद्धिः। तथा नाम सारग्राहिणः शिष्या इह विवक्षिताः। ते सर्वतो गत्वा अलब्धावलम्बास्सन्तोऽत्र समागत्य उच्चैः प्रार्थयन्ते इत्युक्तं भवति। अथ कोकिलकण्ठनाद-कथने अमी अर्थविशेषा अवबोद्धव्याः; १. कोकिलाः प्रायः पुन्नागवृक्षवासिनो भवन्तीति गोदासूक्ततः श्रीपराङ्कुशमुनीन्द्रसूक्ततश्चावगम्यते; श्रीरङ्गराजस्तवे * पुन्नागतल्लजमजस्रसहस्रगीतिसेकोत्थदिव्यनिजसौ-रभमामनामः * इति श्लोकरत्नेन सविशेषमभिष्टुतस्य ( श्रीरङ्गे चन्द्रपुष्करिणीसमीपस्थस्य ) पुन्नागवृक्ष-वरस्य च्छायायां निषद्य ये बहुश्रुता अभूवन् त तावदत्र विवक्षिताः। २. कोकिलानां परभृतत्वं प्रसिद्धम्; तथा आचार्याधीनपोषणाः शिष्या इह विवक्षिताः। ३. कोकिलाः प्रथमतश्चूतकिसलयखादनेन कषायितव-दनास्सन्तः अथ पनसफलमधुररसचूषणेन तृप्ता भवन्तीति श्रीपरकालमुनीन्द्रः स्वकीयदिव्यगाथासु ( पेरियतिरुमोळि ५-३-४. ) कथयति। एवं प्रथमतः काव्यनाटकादिग्रन्थेषु सामान्यशास्त्रेषु च निष्ठया कषायितहृदया भूत्वा, अथ वेदान्तशास्त्रव्यासङ्गेन हृष्यन्तोऽधिकारिविशेषा इह विवक्षिताः। ४. * वसन्त-काले संप्राप्ते काकः काकः पिकः पिकः * इति कवयोऽपि ननु कथयन्ति; वसन्ततौ पिका विशेषतः स्वक-ण्ठनादं प्रदर्शयन्ति यथा, तथा समयविशेषेष्वतिमधुरगभीरविमलवाग्विभवप्रपञ्चनेन रसिकजनहृदयान्या-वर्जयन्तो वाग्मिन इह विवक्षिताः। ५. * पिकः कूजति पञ्चमम् * इत्यभिधानात् पिककूजितं पञ्चमध्वनि-रिति व्यपदिश्यते; एवं येषां वाग्वितातश्चतुर्वेदतोऽप्यभ्यधिका सती "किमयं पञ्चमवेदप्रादुर्भावविशेषः !" इत्युल्लेखयोग्या विजृम्भते, ते विवक्षिता इह। एतादृशा अधिकारिणश्चात्र सन्निहितास्सन्तीति प्रोक्तं भवति। एतेषां कलकण्ठानां माधवीनिष्ठत्वं मूले कथ्यते; * माधवीं माधवप्रियामितिश्रीसूक्तरीत्या माधव्याः श्रीमहालक्ष्म्या एते रक्ष्यभूता इति सूचितं भवति।

[ अयि कन्दुकाञ्चितपाणितले ! ] इत्यत्रैतदवगन्तव्यम्; * त्वं न्यञ्चद्भिरुदञ्चद्भिः कर्मसूत्रोपपादितैः। हरे विहरसि क्रीडाकन्दुकैरिव जन्तुभिः * इत्युक्तरीत्या प्रपञ्चनिर्वहणमेव कन्दुकक्रीडाभिलप्यम्। भगवा-निव भागवता अपि प्रपञ्चनिर्वहणे अधिकृता एव; तस्य तु तत् स्वाभाविकम्; अमीषां तु तदाज्ञाधीनमिति इयान् विशेषः।

[सौवर्णकरवलयततिनिनदेन सह समागत्य] इति । सर्वेऽपि शास्त्रार्थाः येषां करस्थास्सन्तः सन्ततमपि मुखरास्सन्ति तादृशाः खलु प्रबोध्यन्तेऽत्र । युष्मत्करस्थसर्वार्थध्वनिविशेषा अपि अस्माकं कर्णानन्ददायका भूयासुरिति प्रार्थितं भवति । [सरसिजोपमेयपाणितलेन समुद्घाटय] इत्यत्र, * उद्गृह्णतीमुपनिषत्सु निगूढमर्थं चित्ते निवेशयितुमल्पधियां स्वयं नः । पश्येम लक्ष्मणमुनेः प्रतिपन्नहस्ताम् उन्निद्रपद्मसुभगामुपदेशमुद्राम् * इति यतिराजसप्ततिसूक्तिः, * नमज्जनस्य चित्तभित्तिभक्तिचित्रतूलिका भवाहिवीर्यभञ्जने नरेन्द्रमन्त्रयन्त्रणा । प्रपन्नलोककैरवप्रसन्नचारुचन्द्रिका शठारिहस्तमुद्रिका हठाद्धुनोतु मे तमः * इति नक्षत्रमालिकासूक्तिश्च स्मर्तव्ये ॥ ... ... ... (१.)

---

# १९. एकोनविंशी गाथा--कुत्तुविळक्केरिय.

* एकोनविंशगाथापद्यम् *

प्रज्वाल्योत्तुङ्गदीपं मृदुतरतलिमे दन्तिदन्तोत्थखट्वा
संस्तीर्णे दिव्यनीलाकुचतटकलिताश्लेषवक्षस्स्थलेश ।
वाचं नैव प्रदत्से बत बत सहसे नैव नीले ! क्षणार्धं
विश्लेषं चापि हाहा किमिदमिति वदन्त्यस्तु मे वाचि गोदा ॥ १९ ॥

पञ्चमुखप्रदीपज्वालायां ज्वलन्त्याम् दन्तिदन्तनिर्मितचरणविशिष्टखट्वायां सुकुमारतरं पञ्चशयनमधिरुह्य समुत्फुल्लकुसुमस्तबकालंकृतकेशपाशाञ्चितनीलादेवीस्तनतटीसंश्लेषविकस्वरवक्षस्स्थल भोः कृष्ण ! वाचमपि न ददासि हन्त । अयि अञ्जनाञ्चितपृथुनयने नीले ! त्वं तावदात्मनो वल्लभं क्षणमात्रमपि शयनादुत्थितं न सहसे; न कथञ्चिदपि तद्विश्लेषं च सहसे; सत्यं बलवती तव निर्घृणता ॥ (इति मूलगाथाविवर्तः)

अधस्तनगाथायामुद्बोधिता नीलादेवी 'गोप्य इमा अनुग्राह्या एवे' त्यवधार्य परमकृपया कवाटमुद्घाटयितुकामा शयनादुदतिष्ठद्; तस्यास्सकुतूहलमुत्थानमवलोकयन् कृष्णो भगवान्, मदाश्रितानां जनानां कार्यं मयैव खलु कर्तव्यम्, किमिति तत्कार्यमेषा कर्तुमुत्सहते; तदिदं प्रतिरोद्धव्यमेव मया' इत्याशयानः स्वयं सरभसमुत्थाय कवाटोद्घाटनव्यग्रां देवीं समाकृष्य हठात्कारेण तल्पे निपातयामास। निपतिताऽपि सा सखीजनानुग्रहश्रद्धया पुनरपि जवेनोत्थातुमयतत । सर्वथा तस्या उत्थानं प्रतिरोद्धुकामः कृष्णस्तस्या वक्षसि स्वयं निपत्य तद्दिव्यमङ्गलविग्रहसंश्लेषजनितसुखातिशयेन व्यामुग्धस्सन् अस्तमितान्यभावः शयन एवावतस्थे । तदिदं जालकरन्ध्रेण वीक्षमाणा गोपाङ्गनाः कृष्णं प्रतिनीलां प्रति च सनिर्वेदं यत्कथयामासुः तदनया गाथया निबध्यते । दिव्यप्रबन्धस्यास्य मुखपद्ये श्रीपराशरभट्टार्यप्रणीते * नीलातुङ्गस्तनगिरितटीसुप्तमुद्बोध्य कृष्णम् * इति योऽयं प्रथमपादो विराजते स तावदिमां गाथामनुसृत्यैवावतीर्ण इति वेदितव्यम् । 'नीलादेवीस्तनतटसुप्त !' इति संबोधनं कृष्णस्य परमानन्दसंदोहसंदायकं भवितुमलम् इत्यभिसन्धिनैव एवं नाम संबोध्यते । वचोविन्यासेऽस्मिन् गोपीनामीर्ष्याऽपि महती प्रस्फुरति । "वयं तावत् कृष्णोपभोगार्थं तिमिरघन-

प्रदेशगवेषणनिरतास्स्मः; तमालद्रुमैः श्यामासु वनावलीषु अश्मखण्डैः कण्टकसञ्चयैश्च दन्तुरेषु भूतलेष्वेव शयितव्यं भवत्यस्माकम्; प्रायश्च विप्रलम्भमेव कुर्वतः कृष्णस्य वचसि विस्रम्भेण यमुनासैकतेषु हिमहत-तनुभिरस्माभिराप्रभातं चकितचकितं प्रतीक्ष्यैव खेदोदर्कया कालो यापनीयो भवति च । हंहो ईदृशी नः परिस्थितिः । जन्मान्तरेषु सुचिरमाराधितदैवताया अस्या नीळायास्तु अहो कीदृशोऽयं भाग्यपरिपाकः ! जाज्वल्यमानदीपप्रकाशे हि सेयमुपभुङ्क्ते स्वैरं कृष्णम् । खट्वायां तुङ्गतूलाञ्चनोज्ज्वलसोपधानसुकुमारतल्पे हि सुसुखं शेते । भयलेशविवर्जितं ह्यनारतं सहशयनम् । अहह ! कीदृश्य इमास्सौभाग्यपरम्पराः ! धिग्धिगस्मदीयं दौर्भाग्यभूमानम् । इत्येवमीर्ष्यारोषकषायितो ह्यष वचोविन्यासः । दिव्यदम्पत्योर्युवयोरेवं नाम परमभोगे संपद्यमाने पादसंवाहनादीनि कैङ्कर्याणि कर्तुं परिचारिका अपेक्षिताः खलु । तत्पदवी च किमस्माकं दुर्लभा ! इति निर्वेदोऽपि स्फुरति,तावदत्र ।

[ सुकुमारतरं पञ्चशयनमधिरुह्य ] इति कथितम्; पञ्चविधगुणोपेतं शयनं पञ्चशयनमित्युच्यते । शैत्यमार्दवसौरभधावल्यविस्तृतत्वानि शयनीयस्य पञ्च गुणाः । पञ्चस्वेतेष्वन्यतमस्यापि मार्दवस्य पृथग्विशेषणेन पुनः कीर्तनात् मार्दवमत्र भृशमतिशयितो गुण इति द्योत्यते । " कुसुमस्तबकालंकृतकेशपाशाश्चितनीळादेवी" ति कथनमिदं श्रीविष्णुपुराणश्लोकरत्नमेकं स्मारयतीव; तत्र हि * अत्रोपविश्य सा तेन काऽपि पुष्पैरलंकृता । अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्चितो यया ॥ * ( ५ - १३ - ३५. ) इति कीर्तिता गोपी प्रायश् यमेव स्यात । [ नीळादेवीस्तनतटीसंश्लेषविकस्वरवक्षस्स्थल ! ] इति कथ्यते; नीलास्तनतटसंश्लेषेण कृष्णवक्षस्स्थलस्य विकस्वरत्वमुच्यते; * अविकाराय शुद्धाय * सदैकरूपरूपाय * इत्यादिप्रमाणसिद्धं संकोचविकासराहित्यं तावत् कर्मनिबन्धनसंकोचविकासाभावपरत्वमेव; प्रणयनिबन्धनतया भगवदवयवानां जायमानो विकासो हन्त केन प्रमाणेन प्रतिरोद्धुं शक्यः ? दामोदरस्य कृष्णस्य वक्षस्स्थलं यशोदाकृतदामबन्धनेन विकस्वरमभूदिति श्रीपराङ्कुशमुनीन्द्रैः तिरुविरुत्ताख्ये दिव्यप्रबन्धेऽभिधीयते; दामबन्धेन विकस्वरतां विन्दतो वक्षसः किं नु देवीस्तनतटसंश्लेषेण विकासो न स्यादिति रसघनमुल्लिखन्त्याचार्याः ।

" देवीस्तनतटीसंश्लेषविकस्वरवक्षस्स्थल भोः उत्तिष्ठ " इत्यनभिधाय " भो हन्त वाचं न ददासी " ति कथनेन-दिव्यदम्पत्योः संश्लेषविघातकरणे स्वात्मनां रुचिर्नास्तीति, केवलमभयवाग्दानश्रवणमात्रतः स्वात्मनां परमतृप्तिस्स्यादिति च स्फोर्यते । भोः कृष्ण ! त्वदीयं वक्षस्स्थलं कामं प्रदीयतां नीलायै; न वयं तत्सापेक्षाः; वाङ्मात्रमस्मभ्यं दीयताम्-इति कथयन्तीव । एवमुक्तवतीनां गोपीनामतिमात्रमवसादं हृदि कलयन् कृष्णः कारुण्यविवशस्सन् वाचा किमपि वक्तुमुत्कण्ठितो वाचमुद्घाटयितुमुपचक्रमे; नीला तदवगत्य ' पूर्वं मदीयां प्रवृत्तिं प्रतिरुद्धवतोऽस्य प्रवृत्तिः मयाऽपि प्रतिरोद्धव्यैव खलु ' इत्याशय्य रोषाविला सती तर्जनीमुद्रया तस्य वाच उद्घाटनं निषेधतिस्म । जालकरन्ध्रेण तदिदमवलोकितवत्यो गोप्य आहुः ( अयि अञ्जनाश्चितपृथुनयने नीले ! इत्यादि ॥ सर्वाभिरस्माभिः प्रथमतः कृतं संकल्पम् ( द्वितीयगाथायां स्थितम् ) अतिक्रम्य नयनयोरञ्जनालङ्करणं यत्कृतं त्वया तदेव प्राथमिकमवद्यम्; ततश्चोपरि त्वया क्रियमाणस्तदीयकारुण्यनिरोधोऽपि महत्तरमवद्यं ननु - इत्युक्तं भवति । अशरण्यशरण्येति प्रसिद्धा त्वमपि हन्त संप्रति निर्घृणा हि भवसि; ईदृशं नैर्घृण्यं न तेऽनुरूपम् इत्याचचक्षिरे ॥

( अथ स्वापदेशार्थविवरणम् । ) गाथाया अस्याः पूर्वार्धेन गुरुसार्वभौमस्तुतिः प्रार्थ्यते; उत्तरार्धेन तु तदन्तरङ्गप्रियशिष्यः । भगवान् रामानुजमुनीन्द्रः स्वस्य भूयस्सु शिष्येषु विराजमानेष्वपि श्रीकूरनाथगुरुवरे अपरिमितप्रेमशाली विरेजे तदीयज्ञानभक्तिविरक्तिसाम्राज्यदृष्ट्या; एवं जगति सर्वेऽपि गुरवः भूयसां स्वशिष्याणां मध्ये एकमन्तरङ्गशिष्यमतितरामनुगृह्णन्तीति संप्रदायः । सैव प्रणाली इहानुसन्धेया । कृष्णो नीलादेव्याः स्तनयुगे निजं वक्षो निक्षिपति, तथा गुरुवरः स्वान्तरङ्गशिष्यस्य ज्ञानभक्तिसाम्राज्याति-

शये निजं हृदयं निदधातीति ज्ञेयम्। 'अहो! कीदृशमस्य ज्ञानम्! कीदृशीचास्य भक्तिः! इति विस्मयहर्षविवशो भवतीति भावः। पञ्चमुखप्रदीपज्वालाज्वलनं यदुच्यते मूले, तत्रेदमवधेयम्; १. श्रुतिषु २. स्मृतिषु ३. इतिहासपुराणेषु ४. पाञ्चरात्रशास्त्रेषु ५. सदाचार्यदिव्यसूक्तिषु च सर्वतोमुखं यद्विज्ञानं विजृम्भते तदुक्तं भवति। अथ चरणचतुष्टयधार्यमाणायां खट्वायां शयनं यत्कथ्यते तत्रेदमवगन्तव्यम्। खट्वा तावत् सर्वायासनिवृत्तिपूर्वकनिरतिशयसुखानुभवाधिकरणभूतं स्थानम्। ज्ञानिनां सांसारिकसकलक्लेशविस्मरणपूर्वकब्रह्मानंदानुभवः शास्त्रेष्वेव खलु; तथाच शास्त्रमेवात्र खट्वापदविवक्षितम्; अस्य चरणचतुष्टयधार्यमाणत्वम्— "चतुर्विधदेहवर्णाश्रमाधिकारफलमोक्षसाधनगतियुगधर्मव्यूहरूपक्रियादी" त्याद्याचार्यहृदयसूक्त्यनुसारेण चतुर्विधनानार्थभरितत्वमेव। तदिदं मनागुपपादयामः; देवमनुष्यतिर्यक्स्थावराकारेण देहश्चतुर्विधः; ब्राह्मणक्षत्रियवैश्यशूद्ररूपेण वर्णश्चतुर्विधः। ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासात्मकतया आश्रमश्चतुर्विधः; * आर्तो जिज्ञासुरर्थार्थी ज्ञानी * इति गीतोक्तरीत्या अधिकारश्चतुर्विधः; धर्मार्थकाममोक्षरूपेण पुरुषार्थश्चतुर्विधः; सालोक्यसामीप्यसारूप्यसायुज्यभेदेन मोक्षश्चतुर्विधः; कर्मज्ञानभक्तिप्रपत्तिभेदेन साधनं चतुर्विधम्; पञ्चाग्निविद्योक्तप्रकारेण संभवन्ती गतिश्च गर्भगति—याम्यगति—धूमादिगति—अर्चिरादिगत्यात्मना चतुर्विधा; कृतत्रेताद्वापरकलिरूपेण युगचातुर्विध्यम्; * ध्यायन् कृते यजन् यज्ञैस्त्रेतायां, द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्॥ * इत्युक्तरीत्या ध्यानयजनार्चनसंकीर्तनरूपेण युगधर्मचातुर्विध्यम्; वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपेण व्यूहचातुर्विध्यम्; सितपीतश्यामनीलतया युगक्रमेण भगवद्विग्रहरूपचातुर्विध्यम्; सृष्टिस्थितिसंहारमोक्षप्रदत्वात्मना भगवत्क्रियाचातुर्विध्यम्, आमोदप्रमोदसंमोदवैकुण्ठरूपेण व्यूहस्थानचातुर्विध्यम्। एवं नाम चतुर्विधत्वेन परिगणनीया भूयांसस्सन्ति हि शास्त्रार्थाः शास्त्ररूपखट्वाधारकाश्चत्वारश्चरणा अमी इति वेदितव्यम्।

खट्वायां चोपरि पञ्चशयनारोहणं नाम— * प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः। प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च। वदन्ति सकला वेदाः सेतिहासपुराणकाः। मुनयश्च महात्मानो वेदवेदार्थवेदिनः॥ * इत्युक्त-अर्थपञ्चकज्ञानैकनिष्णातत्वम्। काममधीयन्तां नाम भूरितराणि शास्त्राणि; तेषु प्राप्यस्य ब्रह्मणः स्वरूपम्, प्राप्तुरात्मनः स्वरूपम्, प्राप्तिसाधनस्य स्वरूपम्, प्राप्तिसमनन्तरानुभाव्यस्य फलस्य स्वरूपम्, प्राप्तिप्रतिबन्धकस्य स्वरूपम्—इत्येतानि पञ्चैव खलु ज्ञातव्यानि, नैतदतिरिक्तमेकमप्यस्ति नाम ज्ञेयत्वेन; एतेषामेवचार्थपञ्चकव्यपदेशः। तथाचैवंविधार्थपञ्चकज्ञाननिष्ठा कथिता भवत्याचार्यस्य शिष्यस्य च; उभयोरिह सामानाधिकरण्यवर्णनात्।

नीलायाः सुरभिकुसुमाञ्चितशिरस्कत्वं मूले कथितमस्ति। * विद्या हृद्याऽपि सावद्या विना विनयसम्पदम् * इत्युक्तेः अवद्यावहं दुर्विनयं विहाय परमशोभाजनकं विनयं परिगृह्य सर्वाभिनन्द्यतां प्राप्तवानयं शिष्य इत्युक्तं भवति। लोके दुर्विनीतो जनः पूतिगन्धिशिरस्कोऽयमिति खलु गर्ह्यते। विपर्यये तु सुरभिशिरस्कत्वमेव हि सिध्यति। एतादृशे विद्याविनयसंपन्न एकस्मिन्नेव शिष्ये दिव्यानुग्रहकारक गुरुसार्वभौम! स्वकीयं वागमृतमस्मास्वपि प्रसारयेति प्रार्थितं भवति। अथ सोऽयमन्तेवासिवर्योऽपि क्षेपापदेशेन अनुग्रहं प्रार्थ्यते। [ अयि अञ्जनाञ्चितपृथुनयने नीले! ] इत्यत्र बोध्यमिदम्; * ये तु त्वदंघ्रिसरसीरुहभक्तिहीनास्तेषाममीभिरपि नैव यथार्थबोधः। पित्तघ्नमञ्जनमनापुषि जातु नेत्रे नैव प्रभाभिरपि शंखसितत्वबुद्धिः॥ * इति श्रीकूरनाथगुरुवराः। * मनसि विलसताऽक्ष्णा भक्तिसिद्धाञ्जनेन * इति भट्टपादाः। नित्यं करीश! तिमिराविलदृष्टयोऽपि सिद्धाञ्जनेन भवतैव विभूषिताक्षाः। पश्यन्त्युपर्युपरि संचरतामदृश्यं मायानिगूढमनपायमहानिधिं त्वाम्॥ * इति निगमान्तसूरयः। लोके सिद्धाञ्जनविभूषितविलोचना जना यथा निगूढमपि निधिं सुखेन साक्षात्कुर्वते, तथा भक्तिभूमभूषितान्तःकरणा एव सन्तो

निगूढतरं शास्त्रतत्त्वमवबुध्यन्त इति निश्चप्रचमेतत्। एवंविधो विशिष्टाधिकारी सोऽयमित्युक्तं भवति॥ अये सर्वाङ्गसुन्दर सब्रह्मचारिन् (अथवा) सतीर्थ्य! गुरुवरं भवान् स्वात्मन्येव सदाऽभिमुखं कुरुते; युवयोरेव सततमविच्छेदेनानुभवो भवति; नैतदानृशंस्यानुरूपम्; * एकस्स्वादु न भुञ्जीत * इति शास्त्रतत्त्वं न ज्ञायत इव तत्रभवता इति क्षेपमुखेन, सर्वे वयं संमिलितास्सन्तः सदुपदेशानधिगच्छेम यथा, तथा नाम कुर्येथा इति प्रार्थितं भवति॥ ... ... ... १९

---

## २०. विंशी गाथा—मुप्पत्तु मूवरमरर्क्कु

* विंशगाथापद्यम् *

सर्वेषां निर्जराणां विपदमपहरन् जागृहि प्रौढशूर!
प्रध्वस्ताशेषविद्विड्गण विमल हरे! मुञ्च निद्रां मुकुन्द।
नीले! सर्वाङ्गरम्ये व्यजनमुकुरमुख्यं व्रताङ्गं वितीर्य
स्नानं निर्वर्तयेथा इति कथितवती पातु गोदा सदा नः॥ २०॥

त्रयस्त्रिंशदमराणां पुरस्तादुपेत्य तदीयविविधविपदपोहनप्रगल्भ! भगवन्! शयनादुत्तिष्ठ। आर्जवगुणनिधे महाबलाढ्य! रिपूणां भयज्वरप्रदायक! विमल! स्वामिन्! जागृहि। सौवर्णकलशसच्छायपयोधरे! बिम्बफलप्रतिमाधरे तनुमध्ये! हे श्रीः! नीलादेवि! तल्पादुत्तिष्ठ। उत्थाय व्यजनमुकुरादिव्रतोपकरणप्रदानपूर्वकमस्मान् त्वद्वल्लभेन सह संयोज्यास्मदीयं स्नानव्रतं समापयेथाः॥ (इति मूलगाथाविवर्तः)

अधस्तनगाथायां यद्यपि नीलादेव्या निर्घृणत्वमुदघोषि, तथाऽपि सा समुचितं समयविशेषं प्राप्य कृष्णसकाशे निवेदयितुकामा जोषमवतस्थे। विलम्बासहिष्णुतया पुनरपि गोप्यः कृष्णमेव कतिपयप्रभावविज्ञापनपूर्वकं समुद्बोधयन्ति; नीलादेवीं च तदीयसौन्दर्यलावण्यप्रशंसनपूर्वकं पुनरुद्बोधयन्ति। तथाच पूर्वगाथायामिवास्यामपि गाथायां दिव्यदम्पत्योरुद्बोधनं प्रशंसनं च संपद्यत इति बोध्यम्॥

वेदेषु "त्रयस्त्रिंशद्वै देवाः" इति मुहुराम्नायते। अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, उभौ भिषजावश्विनौ—इति त्रयस्त्रिंशद्देवविवरणं च कृतमधीयते। मुख्यतमानामेषां त्रयस्त्रिंशद्देवानां कथनम् इतरेषां भूयसाममराणामुपलक्षणं मन्तव्यम्। ज्ञानशक्त्यादिषु मनुष्यापेक्षया भृशमुत्तुङ्गा अपि देवाः स्वात्मनां संभवन्तीर्विपदः स्वयं निवर्तयितुमशक्तास्सन्तो देवाधिदेवं भगवन्तमच्युतमेव शरणं प्रपद्य विध्वस्तविपदो भवन्तीति इतिहासपुराणतः प्रसिद्धमेतत्। अत एव भगवद्यामुनार्यैः स्तोत्ररत्नेऽनुगृहीतम् * वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदानैः। कोऽन्यः प्रजापशुपती परिपाति? * इति। [त्रयस्त्रिंशदमराणां पुरस्तादुपेत्य तदीयविविधविपदपोहनप्रगल्भ!] इति प्रथमं संबोधनम्। पुरस्तादुपेत्य-आपदस्संभवात्पूर्वमेवोपस्थितो भूत्वेत्यर्थः। एतेन तदीयविपदुद्धारणे सन्ततदत्तावधानत्वमुक्तं भवति अथ वा, रणाङ्गणेष्वग्रिमप्रदेशे स्थितिरवबोध्या। युद्धभीताः खलु वीरान् पुरतोऽवस्थाप्य तेषां पृष्ठभागेष्ववतिष्ठेरन्; पार्थसारथित्वेनावस्थाय भगदत्तप्रयुक्तमस्त्रमुरसा प्रतिगृहीतवतो वासुदेवस्य रणाङ्गणेष्वग्रिमप्रदेशोपस्थितौ को नु विस्मयः?

भ्रमराणां विविधविपदपोहनप्रगल्भेति संबोधयन्तीनां गोपीनामिह वचसि बहवोऽर्था विवक्षिताः। १. हेकृष्ण! त्रयस्त्रिंशद्देवानामेव विपद्ग्रमहमपाकुर्याम्, पञ्चलक्षसंख्याकगोपीनां क्लेशं नाहमपनुदेयमिति किं त्वया संकल्पितम्? २. पुंसामेव विपदो विनिवर्तयेयम् न तु स्त्रीणामिति किं व्रतमास्थितम? ३. प्रबलानामेव क्लेशान् निरस्येयम नत्वबलानामिति किमध्यवसितम? ४. सोऽहमित्यहंकुर्वाणानामेव संकटमुद्धरेयम्, न तु दासोऽहमिति स्थितानां जनानामिति किमवधारितम्? ५. क्षुद्रपुरुषार्थलिप्सूनामेवाहमुपकारको भवेयम; न पुनः परमपुरुषार्थलिप्सूनामिति किं मनीषितम्? ६. * जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः। किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः * इत्युक्तरीत्या प्रार्थनाकाले पादयोः प्रणिपत्य, प्रार्थितार्थसिद्ध्यनन्तरं वैरिभावमास्थाय युद्धे सन्नह्यतामेवाहं कार्यकर्ता भवेयम्, न पुनस्सन्ततमपि पादाब्जसेवैकनिरतात्मनामिति किमभिसंहितम्? ७. मदीयदिव्यमङ्गलविग्रहक्लेशसंपादनेन स्वकार्यसिद्धिं प्रेप्सतामेवाहं साहाय्यसंविधाता भवेयम् न पुनर्मङ्गलाशासनैकनिरतात्मनामितिकिमाशयितम? ८. नश्वरशरीरसंबन्धिविपद्विनिवर्तनकामुकानामेवाहं हस्तावलम्बप्रदो भवेयम नपुनः शाश्वतिकात्मसंबन्धिविपन्निवारणकांक्षिणां जनानामिति किमवधृतम्?......इत्येवमेवमुच्चावचा अनुयोगा आसामत्र वचसि गर्भिता इति वेदितव्यम। अबलानामस्माकमवधीरणे कृते सति देवतावर्गसंरक्षणजनिता त्वदीया भूयसी प्रथा वितथा खलु भवित्री इत्यपि विवक्षितं स्यादिह।

अथ [आर्जवगुणनिधे!] इति द्वितीयं संबोधनम्। मनोवाक्कायानामैकरूप्यमार्जवम्। पञ्चवटीमागतया शूर्पणखया पृष्टो रामः कौटिल्येन किमप्यनभिधाय आर्जवेनैव प्रत्युत्तरमदादिति प्रकाशयन् प्राचेतसो मुनिवरः * ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे * इत्याह खलु; तादृशमार्जवं यद्यपि कितवाग्रगण्ये कृष्णे दुर्लभम् तथाऽपि तदिहाधिरोप्य कथ्यत इति वा, धर्म्यैक्यधिया कथ्यत इति वा बोध्यम्। प्रतिज्ञातार्थप्रपूरकत्वं वा आर्जवम्; तत्र कृष्णेऽपि भगवति निरपायम्। * द्यौः पतेत् पृथिवी शीर्येत् हिमवान् शकलीभवेत्। शुष्येत्तोयनिधिः कृष्णे! न मे मोघं वचो भवेत॥ * इति द्रौपदीं प्रति कथितवताऽनेन प्रयासशतसहस्रैरपि खलु तन्निर्वर्तनमकारि॥ अथ महाबलाढ्य! इति तृतीयं संबोधनम्। ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां षण्णां गुणानां मध्ये यत्पठ्यते बलमिति, तस्यार्थः श्रीपराशरभट्टपादैरेवमुपावर्णि श्रीरङ्गराजस्तवोत्तरशतके—*स्वयाहिमस्थितिरीश! भृगक्रियोऽप्यकलितश्रम एव बिभर्षि यत्। वपुरिव स्वमशेषमिदं बलम् * इति। निखिलानामपि चेतनाचेतनानां स्वशरीरत्वेन अनायासभरणमेव भगवतो बलम्। अवतारेषु गोवर्धनोद्धरणादिभिरतिमानुषकृत्यविशेषैस्तत्प्रकाशनं भवति च। अथ [रिपूणां भयज्वरप्रदायक!] इति चतुर्थं संबोधनम्। * समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः * देवानां दानवानां च सामान्यमधिदैवतम् * इत्याद्युक्तप्रकारेण सर्वजनवत्सलभावमुररीकृतवतो भगवतो रिपुरिति न कोऽपि वर्तते। आश्रितानां भक्तानां विषये ये प्रातिकूल्यं वहन्ति, द्रोहं च कुर्वते ते हि भगवतो रिपवः। तेषां भयज्वरसमुत्पादकेति यावत्। अथ विमलेति पञ्चमं संबोधनम्। हेयप्रतिभटेत्यर्थः। केषाञ्चिन्निरसनस्य तद्दौर्जन्यमूलकत्वात् तेन भगवतः किमप्यवद्यं नोपजायत इति भावः * वैषम्यनैर्घृण्ये न सापेक्षत्वादित्यादिकमिह भाव्यम॥

अथ नीलादेवीमुद्बोधयन्ति स्तुतिपूर्वकम्। पयोधर-अधरादिसौन्दर्यवर्णनमत्र किमर्थं कृतमिति चेत्; पुरुषकारकृत्ये निष्णाता श्रीमहालक्ष्मीर्यदा स्वकीयैरुपदेशशतैरपि भगवन्तं स्वाभिप्रायानुकूलं नावेक्षते तदा स्वकीयदिव्यावयवसौन्दर्यलावण्यप्रदर्शनेन तं व्यामोह्य विवशयतीति प्रसिद्धमेतत। श्रीगुणरत्नकोशे *पितेव त्वत्प्रेयान् जननि! परिपूर्णागसि जने* इत्यादिके श्लोके* त्वमुच्चैरुपायैर्विस्मार्येति कथितवतमाचार्याणामिदमेव ह्यभिसंहितम्। नीलादेव्यप्येषा लक्ष्म्या एव ह्यंशभूता। सेयमपि भक्तजनानुकम्पार्थं भगवतो व्यामोहनायैव अधरपयोधराद्यवयवसौन्दर्यं बिभर्तीति प्रतिपत्त्या [सौवर्णकलशसच्छायपयोधरे! बिम्बफलप्रतिमाधरे! तनुमध्ये!] इति संबोध्यते। किमपेक्षितं युष्माकमिति तया पृष्टा इमाः कथयन्ति [व्यजनमुकुरादिव्रतोपकरणप्रदानपूर्वकमस्मान् त्वद्वल्लभेन सह संयोज्यास्मदीयं स्नानव्रतं समापयेथाः]

इति । भगवत्परिचर्यायां व्यजन मुकुरयोरुपकरणत्वं शास्त्रसिद्धं प्रात्यक्षिकं च। मार्गशीर्षस्नानव्रतसमापनप्रार्थनं भगवन्नित्यसंश्लेषसंपादनप्रार्थनातिरिक्तमिति मन्तव्यम् । तथाच, त्वत्किंविशेषं वयमपि यथा भगवन्नित्यसंश्लेषभाग्यभाजो भवेम तथा दयेथा इत्युक्तं भवति ॥

( अथ ध्वन्यर्थविवरणम् । ) अत्रत्यैस्संबोधनपदैस्सर्वैरपि आचार्य एव तत्प्रभावप्रपञ्चनपूर्वकमुद्बोध्यते । भगवान् बहूनाममराणां विपद्विनाशनपूर्वकं संपत्प्रदानं यथा करोति, तथैव ह्याचार्योऽपि । * अजरामरवत्प्राज्ञो विद्यामर्थं च साधयेत् * इत्युक्तवचनानुसारेण विद्यासाधनार्थं ये तावदमरम्मन्या नक्तंदिवं प्रयतन्ते तेऽत्र अमरपदेन विवक्षिताः । तेषां प्रार्थनामन्तरेणैव उपदेशार्थमुपस्थितो भवत्ययमाचार्यः । इदमेव पुरस्तादुपगमनम् । तेषां विविधविपदपोहनं नाम—देहात्मभ्रम—अन्यशेषत्वभ्रमाद्यापद्विमोचनम् । आपन्निवारणानन्तरं संपत्प्रदानस्य च प्राप्तत्वात शेषत्वपारतन्त्र्यादिरूपमहिष्टफलप्रदानं चार्थसिद्धम् । अथ आर्जवनिधित्वं नाम—* करणत्रयसारूप्यमिति सौख्यरसायनमित्याचार्यवर्यसूक्तिश्रद्धया * मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यद् दुरात्मनामित्युक्तदौरात्म्यप्रहाणेन * मनस्येकं वचस्येकं कर्मण्येकं महात्मनामित्युक्तमहात्मभावस्वीकरणमेव । अथ महाबलाढ्यत्वं नाम— * अधोऽधः पापात्मा शरणद! निमज्जामि तमसीत्युक्तरीत्या संसारतिमिरान्धकूपे प्रपतितानामुद्धरणोपयुक्तधीबलशालित्वमेव । * कुदृष्टिकुहनामुखे निपततः परब्रह्मणः करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिरित्युक्तरीत्या कुदृष्टिकुहनान्धकूपनिपतितपरब्रह्मसमुद्धरणोपयुक्तप्रज्ञाबलशालित्वमपि सुवचम् । अथ रिपूणां भयज्वरप्रदायकत्वं नाम— * श्रुतिस्स्मृतिर्ममैवाज्ञा यस्तामुल्लंघ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः॥ * इति भगवताधिकृतानां सच्छास्त्रसरणिपरिपन्थिनां भयानकत्वमेव । श्रुतिस्मृतिचोदितनित्यनैमित्तिककर्मानुष्ठापनादिमुखेन सच्छास्त्रपद्धतिसंरक्षणैकदीक्षिते सदाचार्ये तदिदं निरपायं खलु । अथ विमलत्वं नाम— संसारिजनवदाचार्यस्य च प्रकृतिमण्डलेऽवस्थितस्यापि पाञ्चभौतिकदेहपिण्डपरिग्रहशालिनोऽपि अन्नपानादिकमनुज्झतोऽपि * साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्, मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना * इत्याद्युक्तरीत्या भगवन्निर्विशेषताप्रयुक्तहेयप्रत्यनीकत्वमेव । अथ सौवर्णकलशमच्छायपयोधराद्यवयवसौन्दर्यवर्णनपूर्वकं प्रतिबोध्यमाना व्यक्तिः काचिदिति चेत्; महाचार्यप्रसादजनकः सर्वथा तद्विधेय आचार्यतुल्यश्च कश्चन व्यक्तिविशेषः । स्त्रीणां पयोधरद्वंद्वं यथा भर्तृभोगविवर्धकं तथा पुंसां ज्ञानभक्ती आचार्यप्रेमविवर्धनक्षमे इति ग्राह्यम् । अधरशोभया यथा ललना पतिं विवशयति तथा विपश्चिदपश्चिम आचार्योऽपि निजवाग्विलसितेन स्वगुरुं स्वाधीनयतीति बोध्यम् । [ तनुमध्ये ! इति । ] वनितानां कृशोदरत्वं सुष्ठु लक्षणम् । अपरिमितभोज्यवर्गभोजनेन मांसलदेहत्वमनवाप्य दर्शनीयदिव्यमङ्गलविग्रहविशिष्टता आचार्याणां शोभावहा वेदितव्या । यदाहुः "आकारो ह्रस्वः कीर्तिश्च महती" इति ॥ नीलादेवी यथा ह्यन्यगोपाङ्गनापेक्षयाऽपि भगवतः प्रियतमा तथा इतरविद्वज्जनापेक्षया आचार्यस्य भृशमभिमतः कश्चन व्यक्तिविशेष इह विवक्षित इति प्रोक्तचरम् । हे श्रीरिति संबोधनेन श्रियो यथा घटककृत्यमेव प्रधानम् तथा व्यक्तिविशेषस्यास्यापि तदेव नियतमिति ज्ञाप्यते । श्रीस्तु भगवद्विषये घटिका; इयं व्यक्तिस्तावदाचार्यविषये इति विशेषः । नीलादेवीसविधे व्यजनमुकुरयोरपेक्षा हि प्रदर्शिता । व्यजनमुकुरयोः स्थाने मूलमन्त्रमन्त्ररत्नयोर्ग्रहणमुपपद्यते । मुकुरो यथा स्वात्मानं यथायथं प्रकाशयति तथा मूलमन्त्रः स्वस्वरूपयाथात्म्यप्रकाशक इति तस्य मुकुरत्वाभिमानो युक्तरूपः । अत एव श्रीमन्निगमान्तसूरिभी रहस्यत्रयसारे * आधेयत्वप्रभृतिनियमैरित्यादिके पद्ये व्यापकादर्शपदेन मूलमन्त्रो निर्दिष्ट इति बोध्यम् । अथ व्यजनपदेन द्वयाख्यमन्त्ररत्नविवक्षणं च सूपपन्नम्; तापतप्तस्य जनस्य यथा व्यजनं सततमपेक्षितम् तथा संसारतापसंतप्तानां मुमुक्षूणां सततमनुसन्धेयं मन्त्ररत्नमेवेति । अत एव भगवान् रामानुजः श्रीमता रङ्गनाथेनानुशिष्टः * द्वयमर्थानुसन्धानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व * इति । श्रीमद्वरवरमुनिदिनचर्यायां चानुसन्धीयते * मन्त्ररत्नानुसन्धानसन्ततस्फुरिताधरम् । तदर्थतत्त्वनिध्यानसन्नद्धपुलकोद्गमम् * इति । अन्ते स्नानव्रतसमापनकाङ्क्षणं तु स्वस्य निर्मलत्वप्रापणप्रार्थनायां पर्यवस्यति ॥ ... २०

# २१. एकविंशी गाथा—एत्तकलङ्कळेदिपोङ्गि

* एकविंशगाथापद्यम् *

दुग्धैर्भाण्डानि भूयांस्यविरतमभिपूर्योज्ज्वलैर्धेनुवर्गैः
आढ्यं नन्दं हि तातं कलयसि भगवन् जागृहि त्यक्तनिद्रः ।
रक्षादीक्षागरिष्ठ क्षितितलतरणे ! भग्नभूपालवत्ते
गायन्त्यो दिव्यकीर्तिं वयमिह पतिता इत्युवाचात्र गोदा ॥ २१ ॥

दोहनकाले दुग्धधारणाय गृहीतेषु भाण्डेषु क्षणमात्रे प्रपूर्णं पयो यथा ह्यूर्ध्वमुज्जृम्भेत तथा निरन्तरपयः-प्रवाहप्रसवित्रीणामौदार्यशालिनीनां भूयसीनां गवां स्वामिनो नन्दगोपस्य नन्दन भोः ! प्रबुध्यस्व । दृढप्रमाणभूतनित्यापौरुषेयवेदप्रतिपाद्य ! ( अथवा ) आश्रितजनसंरक्षणश्रद्धालो ! परब्रह्मभूत ! जगति प्रादुर्भूततेजः पुञ्जमय ! शयनादुत्तिष्ठ । अरातयः पराजिता भूत्वा यथा स्वात्मधारणान्यथानुपपत्त्या भवदीयभवनाङ्गणं प्राप्य भवत्पादारविन्दसेवानिरता भवन्ति तथा वयमपि भवद्गुणपराजितास्सत्य इह समागतास्त्वां स्तुमः ॥ ( इति मूलगाथाविवर्तः । )

अधस्तनगाथायामुत्तरार्धतः प्रबोधिता नीलादेवी सरभसमुत्थाय समागत्य 'अयि भो गोपाङ्गनाः ! अहं तावद्युष्मास्वन्यतमा खलु ; युष्माकमभीष्टानि सुष्ठु संपादयेयमहम् ; मा नाम मनागप्यवसीदत यूयम् , सर्वा अपि वयं मिलित्वा भगवन्तं कृष्णं प्रार्थयेमहि, समागच्छत ' इति कथितवती । अथ तथैव नीलादेव्या च सह संमिलिता गोपललना भगवन्तं स्तुवन्ति गाथयाऽनया । नन्दगोपगोसमृद्धिप्रशंसनपूर्वकं तदात्मजत्वकथने कृष्णमुखविकासं संपादयितुमिच्छन्त्य इमा इह विलक्षणस्तुतिं विरचयन्ति । अधस्तनगाथासु प्रकीर्तिताः कृष्णस्य प्रभावास्तु न तस्य तृप्तये कल्पन्ते । त्रैविक्रमक्रमकृताक्रमणत्रिलोकत्वं सप्तदश्यां गाथायामुक्तम् ; नीलातुङ्गस्तनगिरितटीसुप्तत्वम् एकोनविंश्यां गाथायामुदीरितम् ; त्रिदशनिवहपरित्राणपरायणत्वमनन्तरगाथायां निगदितम् ; एवंविधचर्याकीर्तनानि न भगवतस्तृप्तिमुत्पादयितुमलम् ; अवतारेषु * आत्मानं मानुषं मन्ये रामं दशरथात्मजम् * अहं वो बान्धवो जातः * इत्यादिकथनेन स्वकीयहर्षप्रकर्षं प्रकाशयतो भगवतो वस्तुगत्या यदतीव संतोषसंदायकम् तदेव वक्तव्यमिति समुत्कण्ठिता इमास्तदेव नन्दनन्दनत्वमभिधाय तमानन्दपरवशमारचयन्ति । नन्दगोपस्यापि प्रशंसा निबध्यते । अधस्तात् सप्तदश्यां गाथायां नन्दगोपस्य परमधार्मिकत्वमुक्तम् ; तदनन्तरगाथायां तस्य निरतिशयबलाढ्यत्वमभिहितम् ; इह तु गव्यसमृद्धिगोसमृद्धिशालितारूपः प्रभावातिशयः प्रशस्यते । ब्राह्मणा यथा वेदाध्ययनसंपदा प्रशस्यन्ते, यथा च क्षत्रिया भुजबलभूम्ना श्लाघ्यन्ते; तथा गोपा गोसमृद्धित एव हि श्लाघ्या भवितारः । तादृशीं श्लाघामत्र निबध्नन्तीति युक्तरूपमेतत ।

दोहनार्थं गोस्तनस्पर्शमात्रेण प्रतिक्षणं भूयांसि भाण्डानि पयसा प्रपूर्यन्त इति सत्यमिदमतिशयोक्तिं विना कथ्यते । व्रजे यदा कृष्णस्समवतीर्णस्ततःप्रभृति गोसमृद्धिर्गव्यसमृद्धिश्च सुमहती जातेति खलु पुराणान्यपि प्रवदन्ते । निरवधिकपयःप्रवाहसवितृत्वकथनानन्तरमपि उपरिष्टादौदार्यशालित्वं यत् कथितम् तस्यायं भावः ; कृष्णः परमपुरुषोऽपि सन् यथा ह्यर्भकाणां वत्सानामपि स्वात्मानमनुभवयोग्यमातनोति सौशील्यभूम्ना, तथा गावोऽपि बालकानां बालिकानां स्वगात्रं परमविधेयं कुर्वन्तीतिच, स्वात्मीयवस्तुप्रदानापेक्षया स्वात्मन एव प्रदानं हि महोत्तमौदार्यम् । प्रासङ्गिकी नन्दगोपप्रशंसा तावदास्तामियम् ; अथ

तदात्मजप्रशंसाः परिशीलयेम । " नन्दनन्दन भोः प्रबुध्यस्व " इत्येतत् स्वकीयां नन्दनन्दनतामवगच्छेत्यर्थकं मन्तव्यम् ! किमत्र तात्पर्यमिति चेत्, श्रीवैकुण्ठदुग्धाब्धिमथुरापुरादिकं परित्यज्य व्रजमुपेत्य नन्दात्मजभावं स्वीकृतवतस्तव अस्मास्वनुग्रहप्रकाशनमेव प्रधानं कर्तव्यं ननु, तदेतद्विद्धि भोः ! इत्युक्तं भवति । वयं तु न वैकुण्ठमागताः ; नापि दुग्धाब्धिम्, न चापि मथुरापुरीम् । अपितु अस्मादृशां पामरजनतानामनुग्रहार्थमेव यत्र भवान् स्वयमागमदस्माननन्विष्य, तत्रैव ह्यागत्य प्रार्थयामहे ; अस्मदीयकार्यनिर्वर्तनं स्वकीयकार्यनिर्वर्तनात्मकमेव भवता मन्तव्यमिति तात्पर्यसारः ॥

मूले ( ऊत्तमुडैयाय् ) इति द्वितीयं संबोधनमस्ति द्राविडवाचि । तस्य द्वेधाऽर्थं निर्वहन्त्याचार्याः । दृढप्रमाणसिद्धत्वम् आश्रितरक्षणबद्धदीक्षत्वं च तदर्थत्वेन कथयन्ति । द्वितयमपि युज्यते नाम । ❀ सर्वे वेदा यत्पदमामनन्ति ❀ वेदैश्च सर्वैरहमेव वेद्यः ❀ इत्याद्युक्तप्रकारेण नित्यनिरवद्यप्रमाणमूर्धन्यभूतवेदसिद्धत्वं हि भगवतो दार्ढ्यम् । तथैव, ❀ अप्यहं जीवितं जह्यां त्वां वा सीते ! सलक्ष्मणाम् । न हि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ ❀ न त्यजेयं कथञ्चन ❀ इत्यादिप्रमाणशतप्रतिपन्नमाश्रितजनपरित्राणप्रतिनियतव्रतशालित्वमपि खलु तस्य दार्ढ्यम् । अथ परब्रह्मभूतेति तृतीयं संबोधनम् । स्वरूपेण गुणैश्च अनवधिकातिशयस्य बृहत्त्वस्य आश्रयभूतेत्यर्थः । आश्रितानां कृते बहुतराणामुपकाराणां करणेनापि अपर्याप्त्या ' पुनः किं करवाणि ? पुनरपि किं करवै ? ' इति उत्तरोत्तरमुपचिकीर्षामेव बिभर्ति भगवानिति इदमेव तस्य गुणतो बृहत्त्वं नाम । असंख्येयैः प्रमाणबृन्दैः प्रभावातिशयेषु प्रपञ्चितेष्वपि इतोऽपि प्रपञ्चनीयाः प्रभावा भूयस्तरामवशिष्यन्ते इति हि कथयितव्यं भवति वस्तुतः ; इदमपि बृहत्त्वं ध्येयम् ।

अथ [ जगति प्रादुर्भूततेजःपुञ्जमय ! ] इति तावच्चतुर्थं संबोधनम् । स्वकीयप्रभावातिशयानां शाब्दिकप्रतिपत्तव्यतामसहमानस्तदातदा साक्षादप्यवतीर्य तान् अतिमात्रं प्रकाश्य स्वयं निरतिशयौज्ज्वल्यशाली भवति भगवानिति प्रतिपादयन्तीम् ❀ स उ श्रेयान् भवति जायमानः ❀ इति श्रुतिमनुसृत्यावतीर्णमिदं संबोधनम् । उपात्तश्रुतिवाक्ये द्वितीयं पदमवधारणार्थकम् । तच्च पदम् इतरेषु चतुर्ष्वपि पदेष्वन्वेतुं प्रभवतीति विलक्षणोऽयं पन्थाः । तत्कथमिति चेदवधेयम् ; उः एवकारार्थक इति न विस्मर्तव्यम् । स एव जायमानः श्रेयान् भवति , सः जायमानस्सन् श्रेयानेव भवति ; स जायमान एव श्रेयान् भवति ; सः जायमानः श्रेयान् भवत्येव—इति सर्वथाऽप्यन्वयः सुशोभन इति । पुण्यपापरूपकर्मफलभूतमस्मादृशां जन्म तावदवद्यावहं भवति नः ; कृपाबलैकनिदानकं भगवतो जन्म तु सर्वथा तस्य तेजस्करं भवति ; अवताराकरणे तेजसः प्रच्युतिरेव इत्युक्तं भवति । पुराणरत्ने कृष्णस्य जननं कथयन् पराशरमहर्षिः नतावदुवाच ' कृष्णो जज्ञ ' इति । अपि तु ❀ ततोऽखिलजगत्पद्मबोधायाच्युतभानुना । देवकीपूर्वसंध्यायामाविर्भूतं महात्मना ॥ ❀ इत्येव ह्यभिदधे । इदमपि वचनमनुसृत्यैव ' जगति प्रादुर्भूततेजःपुञ्जमये " त्युक्तमिह । एवं संबोध्य शयनादुत्तिष्ठेति प्रार्थ्यते । यदि तावदिदानीमपि त्वं शयनमधिशयानो नास्माननुग्रहीष्यसि, तर्हि तव तेजसो हानिरेव भवित्री ; तदसहिष्णुस्सन्नुत्तिष्ठेत्युक्तं भवति ।

अथ गोप्यः कथयन्ति स्वात्मनामिहागमनविषये दृष्टान्तविशेषम्— [ अरातयः पराजिता भूत्वा यथा भवत्सकाशमुपसर्पन्ति तथा वयमपीति । ] ❀ स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रीन् लोकान् संपरिक्रम्य तमेव शरणं गतः ❀ इति काकचरितं प्रथितम् । एवं भृशमुद्धतास्सन्तोऽपि तेते शत्रुवर्गा अथ पराजयं प्राप्य यथा हतावलेपाः प्रपद्यन्ते, तथा वयमपि निरवलेपास्सत्यस्समागत्यात्र भवन्मङ्गलाशासनप्रवणास्म इति कथयन्ति । ननु वायसरावणादयो भृशमुद्धताः प्रकृत्य भक्तिविनयादिविधुरा इति प्रसिद्धम् ; तादृशानां धूर्तानामत्र स्वनिदर्शनत्वेन कथनं प्रकृत्या परमभक्तानां वल्लवीनां कथमिव युज्यत इति चेत् । "तेषां पौरुषाभिमान आसीत् ; अस्माकं स्त्रीत्वाभिमान आसीत्" इति तावदासामभिप्रायः । पौरुषाभिमानादपि बलीयान् हि स्त्रीत्वाभिमानः । "पुमानेव स्त्रीसकाशमागन्तुमर्हति; वनिता वयं न बहिरणुमात्रमपि पादन्यासं कलयेम" इति चिरात् स्थितमभिमानमपहाय वयमागतास्स्म इति कथयन्ति । नैच्यानुसन्धानस्वरूपयामियमपि काचन फक्किका हि ॥

( अथ अन्यर्थविवरणम् । ) नन्दगोपनन्दनेति संबोधनमिह निबद्धम् । नन्दगोपस्थाने महानाचार्यो ग्राह्यः ; तत्तनयस्थाने तदीयः शिष्यो ग्राह्यः । क्वचिदाचार्याणामुपसेवनम्, क्वचित् सब्रह्मचारिणामुपसेवनं च भवतीति प्रत्यक्षदृष्टं ह्येतत् । * आचार्यवदाचार्यपुत्रे वृत्तिरित्यपि सूत्रकारा उपदिशन्ति । ततश्च आचार्यपुत्रोपसर्पणमप्यत्र ग्रहीतुं योग्यम् । आचार्यस्य प्रभावः प्रथमतो निगद्यते । * सद्बुद्धिस्साधुसेवी समुचितचरितस्तत्त्वबोधाभिलाषीत्यादिन्यासविंशतिश्लोकोक्तशिष्यलक्षणसंपन्नाः सत्पात्रभूता अन्तेवासिनो यथा * शिष्यादिच्छेत्पराजयमित्याचार्येच्छानुरूपतया भृशमभिवृद्धज्ञानयशसो भवेयुस्तथा नाम प्रतिबोधनप्रवीणता आचार्येषु कथिता भवति । दुह्यमानक्षीरधारणार्थगृहीतभाण्डस्थाने आचार्योपदिश्यमानविद्याग्राहकाः शिष्या विवक्षिताः । अथ प्रपूर्णस्य पयस ऊर्ध्वमुज्जृम्भणं नाम आचार्यज्ञानाधिकज्ञानसाम्राज्यं शिष्यनिष्ठं यत् तदेव । निरन्तरपयःपूरप्रसवितृत्वकथनेन—शिष्येषु अलंबुद्धियुक्तेषु सत्स्वपि * भूय एव महाबाहो ! शृणु मे परमं वचः * इदं च शृणु मैत्रेय * इत्याद्युक्तप्रकारेण पुनः पुनरुपदेशश्रद्धालुता गुरुवरे प्रोक्ता भवति । वत्सप्रपीतदुग्धापेक्षया भाण्डनिहितदुग्धस्यैव यथा सर्वोपजीव्यत्वमक्षतम्, तथा प्रबन्धरूपेण प्रबद्धानामर्थानां सुचिरमुपयोगार्हत्वमिह शब्दसन्निवेशगम्यं भवति । उदारत्वविशेषणेन—अनुवृत्तिप्रसन्नाचार्यत्वं न, अपितु कृपामात्रप्रसन्नाचार्यत्वमस्येति स्फोर्यते । भूयसीनां गवां स्वामीति कथनेन—एवंविधानां भूयसामाचार्याणां मध्ये अत्यन्तं श्लाघनीयता गुरुवरस्यास्य कथिता भवति । दृढप्रमाणसिद्धेति द्वितीयसंबोधनेन * आचार्यवान् पुरुषो वेद * पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत् । आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत् ॥ * इत्यादिभूरितरप्रमाणसिद्धत्वं बोधितं भवति । परब्रह्मभूतेति तृतीयं संबोधनं च गुरौ संगच्छते ब्रह्मत्वेन प्रसिद्धस्य परमपुरुषस्यापि स्वहृदयकोणेऽवस्थापनात् । सर्वाधिकारणस्यापि तस्य आचार्यनिष्ठाधिकरणतानिरूपिताधेयताशालित्वमेव हि भवति । जगति प्रादुर्भूततेजःपुञ्जमयत्वं च * यद्गोसहस्रमपहन्ति तमांसि पुंसां नारायणो वसति यत्र सशंखचक्रः । यन्मण्डलं श्रुतिगतं प्रणमन्ति विप्रास्तस्मै नमो वकुळभूषणभास्कराय * कलयामि कलिध्वंसं कविं लोकदिवाकरम् * पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च । श्रीमानाविरभूद्भूमौ रामानुजदिवाकरः * इत्यादिवचनशतप्रतिपन्नं वेदितव्यम्; भगवतः अच्युतभानुत्वेन व्यपदेशवत् आचार्याणामपि वकुलभूषणभास्कर-लोकदिवाकर-रामानुजदिवाकरादित्वेन हि व्यपदेशा भवन्ति । शयनादुत्तिष्ठेत्यनेन-स्वात्मानुभवं विहाय परोपदेशप्रावण्यं प्राप्नुहीत्युक्तं भवति । अरातयः पराजिता भूत्वेत्यादिनिदर्शनस्यायमर्थः—यादवप्रकाशयज्ञमूर्तिप्रभृतीन् मतान्तरस्थानपि यथा भगवद्रामानुजो निजवैदुष्यबलनिर्जितान् कृत्वा अन्तेवासिपदव्यां न्यधत्त, तथा भवानपि विजयते—इति ॥ ... ... ... २१

---

# द्वाविंशी गाथा—अङ्गण्मात्रलात्तु

### * द्वाविंशगाथापद्यम् *

तेते भूपाः स्वगर्वं विजहत उपसृत्याथ ते तल्पकोष्ठे
संघीभूता यथा सन्त्यहह वयमपि प्रापिमैवं प्रणम्राः ।
चन्द्रार्कोद्भूतितुल्यं यदि तव नयनद्वंद्वमस्मानुपेयात्
स्याम प्रध्वस्तशापा इति कथितवतीं नौमि गोदामनन्यः ॥ २२ ॥

विपुले पृथिवीमण्डले विरचितसाम्राज्यनिर्वाहा भूमिपाला भग्नाभिमानास्सन्तस्समागत्य भवदीय-सिंहासनपरिसरे यथा संघशोऽवतिष्ठन्ते, तथा वयमपि स्त्रीत्वाभिमानं विहाय त्वत्परिसरं प्राप्तवत्यः स्मः। अर्धविकसितसरसीरुहवत् तव नयने किमहो अस्मासु मन्दंमन्दं प्रसरं न करिष्यतः? चन्द्रसूर्ययोर्युगपदुदयवत विलोचने उभे अपि विष्फार्य यद्यस्मान् कटाक्षयेथास्तर्हि वयं विहतशापा भवेम ॥ ( इति मूलगाथाविवर्तः )

अधस्तनगाथायां गोप्यः स्वकीयामनन्यगतितां दृष्टान्तोपन्यासपूर्वकमपि प्रत्यपादयन्। अथाप्यासां भाषितं विशेषतो निशमयितुमिच्छन् भगवान् वासुदेवस्तूष्णीक आसीत। अथ पुनर्विज्ञापयन्ति गोप्यः—भगवन् नन्दनन्दन! यदि त्वमस्मान्नाङ्गीकरिष्यसि, तदाऽपि वयं नान्यत्र कुत्रापि गमिष्यामः; अस्मदीयामनन्यार्हतामवधेहि तावत्सुदृढम्; सर्वथा वयं भवदीयकटाक्षवीक्षालाभेनैव धन्या भविष्यामो नान्यथेति। तथाचैषा गाथा अधस्तनगाथाप्रतिपादितस्यानन्यगतित्वस्य सुदृढीकरणतात्पर्येणावतीर्णेति वेदितव्यम्।

* युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः। पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥ * हुत्वाऽऽत्मानं देवदेवो बभूव * इत्याद्युक्तरीत्या विरिञ्चिशर्वप्रभृतयोऽपि देवाः स्वस्वानुष्ठितभगवदाराधनभूम्नैव स्वस्वपदवीविशेषान् प्राप्तवन्त इति स्थिते, क्षोणीकोणशतांशपालनकलादुर्वारगर्वानलक्षुभ्यत्क्षुद्रनरेन्द्रा अप्यत्यास्वस्यैव भगवतो नारायणस्य कटाक्षलवलेशेनैव भूमिपालपदवीं प्रापुरित्यत्र न कोऽपि विशयः; अथाप्यमी विस्मृतविष्णुपादारविन्दाः पौण्ड्रकवासुदेवादिवदतिमात्रमवलेपभरिताः स्थित्वा, नानाविधान् क्लेशाननुभूय अन्ततः सोऽहमित्याहङ्कारिकमनुसन्धानं विहाय दासोऽहमिति स्वरूपानुरूपेऽनुसन्धाने निरता भगवदालयेषु [ अर्चास्थलेषु ] प्रवणा भूत्वा भूरितराणि कैङ्कर्याणि प्राकारगोपुरमण्डपप्रासादादि-निर्माणरूपाणि वितन्वन्तीति प्रत्यक्षयामः। श्रीपरकालमुनीन्द्रदिव्यसूक्तिषु श्रीकैरविणीक्षेत्रकाञ्ची-पुरीयाष्टभुजक्षेत्र-वैकुण्ठनाथक्षेत्र-सुगन्ध [ तिरुनरैयूर ] क्षेत्रादिस्तुतिपरेषु दशकेषु तत्तादृशां राज्ञामुपश्लोकितत्वं च द्रष्टव्यम्। तथाच तेऽमी राजानो यथा भग्नाभिमानास्सन्तो भगवदनन्यार्हशेषतामवगाहन्ते, तथा वयमपि * पतिगृहे तव दास्यमपि क्षमम्मिति कालिदासोक्तरीत्या अनन्यार्हशेषत्वाध्यवसायदृढिम्नाऽत्र समागता अभूमेति, अस्मासु भवत्कटाक्षवीक्षापात्रत्वप्रापणमत्यावश्यकमिति च विज्ञापितं भवति। कटाक्षधाराया एकपदे महत्तरप्रवाहरूपेण प्रसारणे कृते सति अतिवृष्टित इव महती हानिस्स्यात; सात्म्य-भोगप्रदाने भगवानतीव चतुरः खलु। क्रमशः क्रमशः कटाक्षधारा अभिवर्धयितव्याः; उपक्रम एव अतिशयितकटाक्षधाराप्रसारणं बालिका इमाः कथमिव सहेरन्? नैव सहेरन्। अत एव प्रार्थयन्ते "अर्धविकसितसरसीरुहवत्तव नयने अल्पाल्पशः प्रसरतामस्मासु" इति। तदनुगुणतयैव कथ्यते "चन्द्रसूर्ययोर्युगपदुदयवत" इति। अभूतोपमा सेयम्। कमलं तावत् चन्द्रोदये मुकुलितं भवति, सूर्योदये विकसितं भवति। युगपच्चन्द्रार्कयोरुदये सति अर्धमुकुलितत्वम् अर्धविकसितत्वं च संभवतीति बोध्यम्। अस्मदीयेष्वपराधेषु तव चक्षुषोर्निमीलनं भवतु; स्वल्पीयस्सु गुणेषु दृष्टिः प्रसरतु इति च प्रोक्तं भवति। दुष्कृतिनां संतापनार्थं सुकृतिनां प्रह्लादनार्थं च तव चक्षुषी सूर्याचन्द्रमसाविव प्रकाशेता-मित्यपि कथितं भवति।

अथ च [ यद्यस्मान् कटाक्षयेथाः ] इति कथनेन स्वाभाविकभगवत्कृपामूलकः कटाक्षपात एव सार्थ-स्तन्, अस्मदीयनिर्बन्धनिबन्धनः कटाक्षस्तु विरस एवेति शास्त्रार्थः प्रकाशितो भवति। अन्ततश्च [ वयं विहत-शापा भवेम ] इति कथ्यते। आसां गोपीनां कीदृशः शापः? केन प्रदत्तः? कदा संजातः? इति न प्रष्टव्यम्। अवश्यमनुभोक्तव्यं पापमेव शापशब्दाभिलप्यम्; प्रबलपापफलभूतो योऽयं भवद्विश्लेषश्चिरादस्माभिरनु-भूयते सोऽयमपसीदेदिति भावः। भगवत्कटाक्षवीक्षाविभवेन निरस्तपातकसमवायं भूयस्तु भक्तेष्वतिहास-

पुराणप्रसिद्धम् । किञ्चिदत्र प्रदर्शयामः । * श्रमणीं धर्मनिपुणामभिगच्छ * इति कबन्धोक्तिमनुसृत्य भगवान् रामचन्द्रः * सोऽभ्यगच्छन्महातेजाः शबरीम् * इत्युक्तरीत्या स्वयमेव मतङ्गाश्रममुपसृत्य शबरीं स्वकटाक्षवीक्षालक्ष्यतां निन्ये; अथ सा प्रोवाच * चक्षुषा तव सौम्येन पूतास्मि रघुनन्दन। पादमूलं गमिष्यामि यानहं पर्यचारिषम्॥ * इति । भगवन् ! तव कटाक्षवीक्षया प्रध्वस्तप्राप्तिप्रतिबन्धकवर्गाऽहमभूवमित्युक्तवती ॥ अभिजनाद्यहङ्कारयोग्यतागन्धविरहितं विदुरं परमभागवतं स्वयमेवानुग्रहीतुं * निवासाय ययौ वेश्म विदुरस्य महात्मनः * इत्युक्तरीत्या तस्य भवनमुपगतो भगवान् कृष्णः * विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च * इत्युक्तरीत्या तदीयमन्नमश्नातिस्म; स च विदुरो भगवतः कटाक्षपातेन परिपूतो बभूवेत्ययमर्थो महाभारते अतिविस्मयनीयप्रक्रियया प्रकाशितोऽस्ति। कथमिति चेत्; विदुरस्य गृहे भुक्त्वा यदा कृष्णो दुर्योधनादिसकाशमुपाययौ, तदा तमाक्षिपति दुर्योधनः * भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन ! किमर्थं पुण्डरीकाक्ष! भुक्तं वृषलभोजनम् ? इति। ज्ञाने समुत्तुङ्गं भीष्मं जात्यामुत्कृष्टं द्रोणम् ऐश्वर्ये गरीयांसं मां च विसृज्य जघन्यजातीयस्य विदुरस्यान्नं कथमहो भुक्तवानसीति दुर्योधन आचिक्षेप। अत्र भगवान् कृष्णो यदुत्तरं दत्ते तदास्तां नाम; अधिक्षेपेण कथनावसरे दुर्योधनः पुण्डरीकाक्षेति यत्संबोधनं कृतवान् तदिदमेव भृशं विमर्शनार्हम्। अधिक्षेपावसरे 'हे मूर्ख ! हे जालम !' इत्यादिरूपेण कर्तव्यं संबोधनं विसृज्य पुण्डरीकाक्षेति संबोधनं कृतवानिति यत्तदिदं विस्मयनीयमेव खलु। वस्तुतः अधिक्षेप्तुस्तस्य बुद्ध्या नैतत्संबोधनमवतीर्णम्; अपि तु भगवतस्संकल्पेनैव सत्यमिदमुद्भावितम् । मदीयदिव्यकटाक्षवीक्षाबलेनैव स पूतो बभूवेति भगवता बोधित इव सोऽभूत् । तथाच शबरीव विदुरोऽपि भगवत्कटाक्षवीक्षापवित्र इति सिद्धम्। एवमेवं बहु द्रष्टव्यम्। नित्यसंश्लेषौपयिककटाक्षवीक्षाप्रसारणेन वयमनुग्राह्या इति गोपीनां प्रार्थना फलत्यनया गाथया ॥

( अथ ध्वन्यर्थविवरणम् । ) आचार्यसकाशे शिष्याः स्वकीयामनन्यार्हतामावेदयन्ति । [ विपुले पृथिवीमण्डले विरचितसाम्राज्यनिर्वाहा इत्यादि । ] विपुलपृथिवीमण्डलस्थाने पाञ्चभौतिकं शरीरं ग्राह्यम्। तत्र अविवेकादहङ्कारममकारभरितो जीवात्मैव अवलिप्तभूमिपालस्थानीयोऽवगन्तव्यः। प्राकृतशरीरसंबन्धबलादेव आत्मनोऽहङ्कारममकारप्रादुर्भावो जायते। * सत्सङ्गाद्भवनिःस्पृहः इत्युक्तरीत्या सत्सङ्गभूम्ना अहङ्कारममकारभरे प्रनष्टे सति कस्यचिदाचार्यवर्यस्य परिसरप्राप्तिरन्यार्हशेषत्वपर्यन्ता सद्यो समिन्धे ॥ अथ [ अर्धविकसितसरसीरुहवत् ] इत्यादिना आत्मोज्जीवनोपयुक्तास्सदर्थाः क्रमशः क्रमश उपदेष्टव्या इति प्रार्थना प्रादुरस्ति। अन्तेवासिन उपक्रमकाल एव न हि श्रीभाष्यभगवद्विषयाद्युत्तुङ्गग्रन्थरत्नार्थोपदेशभाजनतां विन्दन्ति । सोपानक्रमत एव वयं सर्वज्ञाः कारयितव्या इति प्रार्थ्यते। चन्द्रसूर्ययोरुदयवदिति कथनेन—स्वरूपोपायपुरुषार्थयाथात्म्यप्रकाशकरहस्यग्रन्थोपदेशमुखेन सौम्यार्थाविष्करणम्, परमतदुरर्थप्रत्याख्यानप्रवणश्रीभाष्यादिग्रन्थोपदेशमुखेन तीक्ष्णतरार्थाविष्करणं चाभ्यर्थितं भवति। [ विलोचने उभे अपि विष्फार्य ] इत्यनेन * एकयैव गुरोर्दृष्ट्या द्वाभ्यां वाऽपि लभेत यत्। न तत्तिसृभिरष्टाभिस्सहस्रेणापि कस्यचित् * इति वैशिकसुभाषितनीवीप्रोक्तरीत्या अन्तर्दृशा कटाक्षणम् बाह्यदृशा कटाक्षणं चेत्युभयमपि शिष्यजनसमुत्तारकं भवतीति सूच्यते। अन्तर्दृशा कटाक्षणं नाम * स्यादसाविति अन्तःकरणतः क्रियमाणं मङ्गलाशासनमेव। [ वयं विहतशापा भवेम ] इति कथनात्—इयता कालेन सदाचार्यकटाक्षवीक्षाभाजनत्वप्राप्तिविरहः प्रबलशापफलभूत इत्युक्तं भवति। सदाचार्यकटाक्षवीक्षामात्रेण सर्वपातकराशेस्समूलोन्मूलनं बोभवीतीति परमार्थः॥ ... ... २२.

---

# २३. त्रयोविंशी गाथा—मारिमलैमुळञ्जिल्

* त्रयोविंशगाथापद्यम् *

वर्षास्वद्रेर्गुहायां विरचितशयनः केसरी द्राक् प्रबुद्धः
निर्धूताङ्गः प्रगर्जन् विचरति हि यथा तद्वदात्मीयगेहात् ।
उत्थायात्रोपगत्य प्रियतम ! महिते सिंहपीठे निषण्णः
शृण्वस्मत्कार्यवाचं तत इति गृणतीं नौमि गोदामजस्रम ॥ २३ ॥

हे अतसीकुसुमसवर्ण ! वर्षासु गिरिगह्वरे गाढनिद्रावैवश्येन शयानः प्रकृत्या समुत्तुङ्गः कण्ठीरवः प्रबुध्य वह्निकणान् विकिरन्निव चक्षुर्द्वन्द्वं विस्फार्य सुरभिसटापटलं विकसितमाकलय्य अवयवांश्च सर्वथा परिस्पन्द्य तन्द्राविसर्जनं च विरचय्य गभीरतरगर्जनोपबृंहणपूर्वकं यथा हि गह्वरान्निस्सरति, भगवन् ! तथा नाम त्वं गर्भगृहाद्बहिर्निष्क्रम्य आस्थानमण्डपमागत्य रमणीयसन्निवेशं लोकोत्तरं सिंहासनमधिष्ठाय अथ विचारय तावदस्मदागमनप्रयोजनम् ॥

(इति मूलगाथाविवर्तः ।)

अधस्तनगाथायां गोप्य ऊचुः—अनन्यशरणा वयमत्रागतास्स्म इति । तदाकर्ण्य कृष्णो भगवान् सरभसमुत्थाय 'अयि भो गोपाङ्गनाः ! निशीथे प्रबुध्य महत्तरान्परिश्रमाननुभूय समागताः खलु भवत्य इह ; युष्माकमावसथान्पन्विष्य मया खलु समागतेन भवितव्यम् ; स्वयमेव खलु मया भवतीनामनुग्रहः कर्तव्यः ; * प्रसीदन्तु भवन्तो मे ह्रीरेषा हि ममातुला । यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ॥ * इति खलु मया (रामावतारे) मदाश्रममुपस्थितानां दण्डकारण्यवासिनां महर्षीणां सकाशे विज्ञापितम् ; तेभ्योऽप्यतिशयितभक्तिभराणां भवतीनां सकाशे मया किं विज्ञापनीयमिति न जाने ; अस्तु । युष्माकमेतावन्तं परिश्रमभरमुत्पादितवानहं क्षन्तव्यः ; मत्सविधे यत् कांक्ष्यते भवतीभिस्तदहं प्रेम्णा प्रदातुं सज्जोऽस्मि । यदुद्दिश्य समागता यूयम्, तदभिधत्त ; तदहमवश्यं फलेग्रहि करवाणि ' इति सोपचारमूचे । तदाकर्ण्य गोप्यः 'भगवन् गोपालकृष्ण ! अस्मदीयो मनोरथ एवं शय्यायां रहसि विज्ञापयितुं योग्यो न ; महत्यां गोष्ठ्यां सिंहासनमधितिष्ठतु भवान् ; अथानुयुज्यताम् किमभीप्सितं युष्माकमिति । तदनन्तरं मनसि प्रतिभातं विज्ञापयिष्यामः । किञ्च भवतः शयनकालिकमाभिरूप्यमन्वभवाम ; तथा गमनकालिकमुपवेशनकालिकं चाभिरूप्यमनुभोक्तुमतीव स्पृहयालवो वयम् ; सा चास्मदीया स्पृहा भवता दयानिधिना पूरयितव्या । अतश्च प्रथमतस्तल्पादुत्थाय सिंहासनपर्यन्तमागम्यताम्, तदात्वे वयं गतिचातुर्यमनुभूय प्रहृष्येम ; अथ चोपविश्यतां सिंहासने ; तदानीमुपवेशनकालिकमाभिरूप्यं चानुभूय संतुष्येम । तदनंतरं च विजिज्ञापयिषितं विज्ञाप्य कृतकृत्या भूयास्म—इत्याचचक्षिरे । तदस्यां गाथायां निबध्यते गोदादेव्या । भगवत्कर्तव्ययात्रोत्सवप्रकारस्सविशेषमावेद्यते गाथायामस्यामिति सर्वत्रापि द्विरनुसन्धीयते गाथा सैषा ।

तल्पं विहाय गर्भगृहाद्बहिर्निस्सरणं यद्भविष्यति कृष्णस्य, तद्विषये अनुरूपनिदर्शनविशेषप्रपञ्चनं सुष्ठु क्रियतेऽत्र । वर्षाकाले गिरिगह्वरमधिशयितवान् केसरी वर्षापगमानन्तरं प्रबुध्य सटापटलविधूननगभीरगर्जनाविष्करणादिपुरस्सरं गह्वराद्बहिर्निस्सरतीति सिंहजातेरियं स्वाभाविकी प्रक्रिया । दिव्यप्रबन्धेऽस्मिन् प्रथमगाथायां यशोदासिंहत्वेन कीर्तितस्य कृष्णस्यास्यापि प्रक्रिया सैषा संभवितुमर्हति ।

श्रीरामायणे अयोध्याकाण्डे (१६—२५) * निश्चक्राम सुमन्त्रेण सह रामो निवेशनात। पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः॥ लक्ष्मणं द्वारि सोऽपश्यत * इत्युक्तमिहानुसन्धेयम्। * पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः * इत्येतदेवानुसृत्य गोदादेवी गाथामिमां निबध्नातीति सुवचम्। वर्षासु बहिरध्वनां पङ्किलत्वात् संचारयोग्यताविरहेण राजानोऽपि वैरिषु वैरं विस्मृत्य बहिर्यात्रादिकमुपरुध्य अन्तःपुरमधिशेरते। भगवान् रामचन्द्रोऽपि वैदेहीविरहावसन्नस्तद्विरहव्यथां क्षणमात्रमपि सोढुमशक्नुवन् भृशं परितप्यमानोऽपि सन् वर्षानिमित्तमेव हि यात्राप्रवृत्तीर्विसृज्य सुग्रीवं भोगप्रवणं कृत्वा स्वयं माल्यवति गिरौ सह सौमित्रिणा क्लेशाननुभवंस्तस्थौ। एवमेव सिंहोऽपि वर्षासु स्वकीयमृगयाविहारं सवासनं विस्मृत्य गिरिगह्वरान्तः शेते। एवं कृष्णसिंहोऽपि नीलातुङ्गस्तनगिरितटीसुप्त आसीदेतावता कालेन। अधुना तु तस्य प्रबोधो जातः। लोके प्रबुध्यमानः केसरी किं किं करोतीति चेत्; 'अस्मदीयायामटव्यामिह को वा मृगः प्रविष्टः?' इति सरोषमवेक्षमाण इव, चक्षुर्भ्यां वह्निकणान् विकिरतीति वक्तव्यतां दधानश्चक्षुर्द्वन्द्वमुन्मीलयति। शयनकाले करचरणाद्यवयवानां सटापटलानां च संकुचितानां श्लथतानां विकासं च वितनोति वपुषो विधूननेन। वपुषः स्वाधीनत्वाय गुहाद्वारे तत इतः संचरति च। अथ गभीरं कण्ठनादं चोपबृंहयति। ततः क्रमशो बहिर्निस्सरति। एवं नाम भगवता कृष्णेनापि परमगाम्भीर्येण निस्सर्तव्यमिति प्रार्थना क्रियते। प्रबुध्यमाने सिंहे प्रोक्ता अमी सर्वेऽपि गुणा कृष्णसिंहेन प्रदर्शयितव्या इति न निर्बन्धः; अथापि ते सर्वे कृष्णेन प्रदर्शयितुं शक्या एव। वह्निकणोद्भासिवीक्षणं भक्तजनवैरिव्रातविषयकं भवितुमर्हति। करचरणकेशादिविकासनं सुप्तोत्थितस्य संभवि। गम्भीरेण कण्ठनादेन अभयोक्तिवितरणं च भवितुमर्हति। एवमेवं कृत्वा गम्भीरगतिचातुर्यमनुभाव्य अथ सिंहासनमलंकृत्य वयं कटाक्षणीया इति प्रार्थितमासीत्॥ अतसीकुसुमसवर्णेत्यत्र * अतसीसुमसुकुमारात् अवयवसौन्दर्यलेशजितमारात्। गोपाङ्गनाकुमारात् कोऽन्यो देवः करोतु सुखमारात्?॥ * इति श्लोकरत्नमनुसन्धेयम्॥

अथ ध्वन्यर्थविवरणम्॥ गाथायामस्यां संबोध्यमानस्य गुरुवरस्य पुष्पसावर्ण्यमुच्यते; पुष्पाणि परिवृत्य यथा भ्रमरा वलन्ते तथा आचार्यवर्यं परिवृत्य मधुपानलोलुपभृङ्गसधर्माणः [दिव्यार्थसुधापानहेवाकिनः] शिष्यप्रवरा विराजन्ते; तथाच स्वोपजीविशिष्यमण्डलीपरिवृत भगवन् रामानुज भो! इति संबोधितं भवति। सामान्यतः पुष्पसाम्यमेवमुपवर्णितमाचार्ये; विशिष्य अतसीसुमसावर्ण्यमपि तस्मिन् सूपपादम्; अतसीसुमसच्छायस्य भगवतो निजहृदि धारणात् * निर्गुणः परमात्माऽसौ देहं ते व्याप्य तिष्ठति * इत्युक्तरीत्या तच्छायाया बहिर्विलसनेन आचार्यवर्योऽप्यतसीसुमसवर्णो भासत इति ग्राह्यम्। कण्ठीरववत् समागन्तव्यमिति प्रार्थनं भगवद्रामानुजे सुष्ठु संघटते। * जैनेभकण्ठीरव इति खलु यतीन्द्रो जोघुष्यते। * वेदोत्तंसगुहाविहारपटुना श्रीशैलशृङ्गोल्लसन्मायाकेसरिमानितेन गहनन्यायाटवीचारिणा। गम्भीरेण परात्मभेदनमहानादेन नाथेन मे गुप्तोऽहं यतिसार्वभौमहरिणा वर्ते भृशं निर्भयः॥ इत्येतत् श्लोकरत्नं चात्र चारुतरमनुसन्धेयम्।

अथ गाथोपक्रमात्प्रभृति विवृणुमः। सिंहो वर्षाकाले गिरिगुहामधिशेते। भगवद्रामानुजसिंहस्य को गिरिः? का च गुहा? इत्यमुं विषयमधिकृत्य परस्ताद्विशदमुपन्यस्येम। वर्षाकालमधिकृत्य पुरस्ताद्वदामः। जगति सानन्दमभिनन्दनीया वृष्टिश्चास्ति, सनिर्वेदं दूषणीया वृष्टिश्चास्ति। तथा प्रकृतेऽपि। स्पृहणीयां वृष्टिं काञ्चीपूर्णमुनिः कूरनाथगुरुवरश्चावर्णयताम्। जुगुप्सनीयां वृष्टिं भगवान् यामुनार्यो मुनिराडभ्यधत्त। तथाहि, देवराजाष्टके * देवराज दयासिन्धो! देवदेव जगत्पते। त्वदीक्षणसुधासिन्धुवीचिविक्षेपशीकरैः। कारुण्यमारुतानीतैः शीतलैरभिषिञ्च माम् * इति काञ्चीपूर्णमुनिप्रोक्ता, * हस्तीश! दृष्ट्यमृतवृष्टिभिराभजेथाः * (वरदराजस्तवे) इति श्रीकूरनाथगुरुवरोक्ता च भगवद्दिव्यकटाक्षामृतधारा-

वृष्टिः स्पृहणीया वृष्टिः । अथ, * अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि ! । भगवन् भवदुर्दिने * इति ( स्तोत्ररत्ने ) भगवद्यामुनमुनिकथिता वृष्टिस्तु जुगुप्सनीयकोटिप्रविष्टा वृष्टिः । तथाच स्पृहणीयां वृष्टिमुत्पादयितुं जुगुप्सनीयां वृष्टिं व्युदसितुं च समर्थो भगवान् रामानुजमुनिरिति हृदयमिहावसेयम् ।

अथ गिरिं गह्वरं चाधिकृत्योच्यते । तैत्तिरीययजुर्ब्राह्मणे काठके प्रथमप्रपाठके * भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास * इत्युपक्रम्य चारुतरमुपाख्यानं किमप्याम्नातम्; तदेवम् । भरद्वाजो नाम महर्षिः त्रिशतवत्सरावधिकमायुरुपलभ्य कृत्स्नेऽपि तस्मिन्नायुषि वेदानेवाध्यैष्ट । आयुषोऽवसाने सन्निहिते देवेन्द्रस्समुपेत्य पुनरपि शतवत्सरपरिमितमायुः प्रदास्यामीत्यभिधाय, प्रदास्यमाने तस्मिन्नायुषि किं चिकीर्षसीति तं मुनिमप्राक्षीत् । स च प्राह—' तस्मिन्नप्यायुषि वेदमेवाध्येष्ये ' इति । अतीत आयुस्त्रितये वेदत्रितयमधीतमिति, आगामिन्यायुषि चतुर्थवेदाध्ययने संपादिते चतुर्वेदविशारदत्वं स्वस्य भविष्यतीति तस्याभिप्राय इव । तमवगतवानिन्द्रो महर्षिणाऽनेन वत्सरत्रिशत्याऽधीतस्य वेदस्य इयत्तां दिदर्शयिषुः अदृष्टपूर्वान् सुमहत्तरांस्त्रीन् गिरीन् पुरस्तादुपस्थाप्य गिरित्रयादपि मुष्टित्रयमितां मृत्तिकामुपादाय 'भगवन्महर्षे ! भवता त्रिभिरायुर्भिरधीतो वेद एतन्मुष्टित्रयमितमृत्तिकापरिमित एव केवलम् , अग्रे दृश्यमानगिरित्रयमिता वेदास्तु भवता नैवाधीताः ' इति भरद्वाजमाह—इत्येष तावत्तदुपाख्यानप्रकारः ; तथाच गाथायामस्यां वेद एव गिरिरित्यनापदिष्ट इति वेदितव्यम् । अथ गुहा का नामेत्यभिदध्महे ।

महाभारते यक्षप्रश्नं प्रत्युत्तरयन् युधिष्ठिरः— * श्रुतिर्विभिन्ना स्मृतयो विभिन्ना नैको मुनिर्यस्य मतं प्रमाणम् । धर्मस्य तत्त्वं निहितं ' गुहायाम् ' महाजनो येन गतस्स पन्थाः * इत्युक्तवानिति सुप्रसिद्धमेतत् । एतत्प्रमाणरीत्या सूक्ष्मो धर्मो यत्र स्थले निलीनः तदेव स्थलं वेदगिरेर्गह्वरं विभाव्यम् । " तत्त्वं निहितं गुहायाम् " इति खलु कथितम् । श्रीरामायणे वालिनः प्रश्नं प्रत्युत्तरयन् रामचन्द्रो यदाह— * सूक्ष्मः परमदुर्ज्ञेयः सतां धर्मः प्लवङ्गम ! * इति, तदप्येतदनुगुणं ध्येयम् । तथाच वेदेषु सूक्ष्मधर्मनिकेतनभूताः स्थलविशेषा एवात्र गुहात्वेन विवक्षिता इति सिद्धम् । तत्र गाढनिद्रावैवश्येन शयानः कण्ठीरवो हि भगवद्रामानुजसिंहः । अस्तमितान्यभावत्वेन महानन्दानुभवशालित्वमेव गाढनिद्रावैवश्येन शयानत्वं नाम । निद्रासमये दुःखलेशप्रतिसन्धानमन्तरेण " सुखमहमस्वाप्सम् " इत्येवं प्रत्यवमर्शयोग्यतया आनन्दानुभवस्यैव सद्भावात् निद्रा च आनन्दानुभवश्च पर्यायभूतौ वेदितव्यौ । अनादिमायया सुप्तत्वं नात्र विवक्षितम् ।

अथ [ प्रबुध्य ] इत्यस्य —स्वावतारप्रयोजनमवबुध्येत्यर्थः । मायावादिमत्तगजकण्ठीरवस्य स्वस्य भूमाववतरणम् दुर्मतनिरसनपूर्वकस्वमतस्थापनार्थमेव हीत्यवधार्येति यावत् । शिष्यजनसमुज्जीवनमेव हि प्रधानं कृत्यमस्माकमित्यवधार्य, इत्यप्यर्थस्सुवचः । [ वह्निकणान् विकिरन्निव चक्षुर्द्वंद्वं विष्फार्य ] इत्यनेन * पाषण्डद्रुमषण्डदावदहनः * इत्येषा सूक्तिः स्मार्यते । [ सुरभिसटापटलं विकसितमाकलय्य ] इत्यत्रेदमवधेयम् ; मतान्तरस्था यतयः शिखाबन्धमपाकृत्य मुण्डितशिरस्का भवन्ति ; रामानुजास्तु नैवम् ; * काषायशोभि कमनीयशिखानिवेशम् * उपवीतिनमूर्ध्वपुण्ड्रवन्तम्.......शिखया शेखरिणं पतिं यतीनाम् * इत्याद्युक्तरीत्या चारुतरशिखाबन्धशोभिनो विलसन्ति ; एष एवातिशयोऽत्रानुसन्धेयः । [ अवयवांश्च सर्वथा परिस्पन्द्य ] इत्यनेन यात्राविशेषः स्फोर्यते ; * श्रीरङ्गं करिशैलमञ्जनगिरिं तार्क्ष्याद्रिसिंहाचलौ श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम् । श्रीमद्द्वारवतीप्रयागमथुरायोध्यागयापुष्करं सालग्रामगिरिं निषेव्य रमते रामानुजोऽयं मुनिः ॥ * इत्यभिष्टुता दिव्यक्षेत्रदिव्यतीर्थयात्रानिष्णाततात्रानुसन्धेया । [ तन्द्राविसर्जनं च विरचय्य ] इत्यनेन नित्यानुष्ठेयकर्मसु आलस्यविरहितत्वमभिष्टूयते । अथ गभीरतरगर्जनोपबृंहणं भगवद्रामानुजकृतमधिकृत्य किं वक्तव्यम् ? परमगम्भीरकण्ठनादेन सर्वजनश्रवणानन्दसंदायकत्वमुक्तं भवति । भगवतो भाष्यकारस्य दिग्विजययात्रायां सर्वत्र सिंहगर्जनैव ह्यासीत् ।

[ सिंहो यथा हि गिरिगह्वरान्निस्सरति ] इति ( मूले ) उपमानतया निर्देशसत्त्वेऽपि, उपमानार्थिना-मुपमेय एवोपसंहारो युज्यते ; * इन्दुरिन्दुरिव श्रीमान् * गगनं गगनाकारं सागरस्सागरोपमः । राम-रावणयोर्युद्धं रामरावणयोरिव * इत्याद्यनन्वयालङ्कारलक्ष्यानुसन्धानमिह स्मार्यते । [ गर्भगृहाद्बहिर्नि-ष्क्रम्य ] इत्यनेन, स्वामिपादानामवतारस्थलभूतात् श्रीमन्महाभूतपुरात् श्रीकाञ्चीपुरागमनम्, ततः श्रीवेङ्कटाद्रिगमनम्, ततश्च श्रीरङ्गगमनम्, ततश्च यादवाद्रिप्रवेश इत्येवंरीत्या संपन्ना गमनविशेषा अभि व्यज्यन्ते । [ आस्थानमण्डपमागत्य ] इत्यनेन उभयवेदान्तरहस्यादिप्रवचनगोष्ठीभूषणत्वमनुसंहितं भवति तदुपरि [ रमणीयसंनिवेशं लोकोत्तरं सिंहासनमधिष्ठाय ] इत्यनेन, यतिराजसप्तत्याम् * गाथा ताथाग-तानां गलति गमनिका कापिली क्वापि लीना * इत्यादिपद्ये * भजति यतिपतौ भद्रवेदीं त्रिवेदीम् * इत्युक्तं त्रिवेदीरूपभद्रवेदीविभूषणमनुस्मार्यते । भेदश्रुतिः, अभेदश्रुतिः, घटकश्रुतिरिति प्रसिद्धश्रुतित्रय-रूपसिंहासनारूढो हि भगवान् रामानुजो वेदान्तनिर्वाहधूर्वहो भवति । अद्वैतिनो ह्यद्वैतश्रुतिमेकामेव परिगृह्णन्ति ; द्वैतिनस्तु द्वैतश्रुतिमेकामेव ; उभयेऽपि अन्तर्यामिब्राह्मणात्मिकां घटकश्रुतिमतीव दूरे विसृजन्ति हन्त । भगवान् रामानुजस्तु ते उभे अपि द्वैताद्वैतश्रुती परिगृह्य सुबालोपनिषदादिप्रसिद्ध-घटकश्रुत्या सामरस्यं संपाद्य सकलास्वपि श्रुतिषु समरूपमादरं प्रादर्शयत् ; एतदेव रमणीयसन्निवेश-लोकोत्तरसिंहासनाधिष्ठानं मन्तव्यम् । [ अथ विचारय तावदस्मदागमनप्रयोजनम् ] इत्यनेन-प्रवचन-गोष्ठ्यां क्रियमाणो विलक्षणः शिष्यानुग्रहः सूचितो भवति ॥

---

# २४. चतुर्विंशी गाथा—अन्निव्वुलहमळन्दाय्

* चतुर्विंशगाथापद्ये *

विक्रान्ताशेषलोक प्रभुवर ! जयतात्ते पदाम्भोजयुग्मं
गत्वा लङ्कापुरीं तद्विदलनकर भो ! वर्धतां विक्रमस्ते ।
पादाघातेन दैत्यं शकटमपहरन् ! वर्धतां ते सुकीर्तिः
वत्सं क्षिप्त्वा कपित्थे द्वयमपि दलयन् ! ते जयेत्पादपद्मम् ॥
छत्रं गोवर्धनाद्रिं कृतवति भवति स्याज्जयी सद्गुणौघः
हस्ते ते भ्राजमानो जयतु रिपुकुलच्छेदनो दिव्यहेतिः ।
इत्थं भद्रोक्तिमालाः कथयितुमधुनोपस्थिता नो दयस्वे-
त्याहुर्गोप्यस्तदूचुष्यतिमधुरवचास्साऽस्तु गोदा जयाढ्या ॥ २४ ॥

पुरा जगतीतलमिदं विक्रान्तवन् भगवन् ! तव चरणारविन्दमङ्गलमाशास्महे ; तत्र गत्वा लङ्कां विध्वस्तवन् ! तव विक्रमो जयतु विजयताम् ; शकटं पादघातेन धूलिसात्कृतवन् ! तव कीर्तिर्जयतु विजयताम् ! कपित्थासुरहननसाधनीकृतं वत्सासुरमुच्चैः क्षिप्तवन् ! तव पादो जयतु विजयताम् ; गोवर्धनाद्रिं छत्रतया समुद्धृतवन् ! तव गुणप्रथा जयतु विजयताम् ; वैरिव्रातविमर्दनक्षमस्तव करस्थो जैत्रो हेतिराजो जयतु विजयताम्— इत्येवमेवं तवैव यशांसि संकीर्त्य पुरुषार्थं लब्धुमद्य वयमत्रागताः स्मः ; भगवन् दयेथाः ।

( इति मूलगाथाविवरणः । )

भारतसमरोपक्रमे * सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ! * इति पार्थेन चोदितस्तथैव कृतवानिति प्रथामुपेयिवान् भगवान् वासुदेवः अनन्यार्हशेषत्व-अनन्यशरणत्व-अनन्यभोग्यत्वनिधीनां गोपीनामभ्यर्थनां हन्त ! कथमिव फलेग्रहिं न कुर्यात् ? * अनन्याधीनत्वं तव किल जगुर्वैदिकगिरः पराधीनं त्वां तु प्रणतपरतन्त्रं मनुमहे * ( वरदराजस्तवे ) इत्युक्तरीत्या सर्वथा भक्तजनपरतन्त्रो हि भगवान् । भक्तानां शासनानि हि सततं प्रतीक्षते साभिनिवेशम् । भक्तजनताभिः क्रियमाणाः प्रार्थना अपि स्वयं दिव्याज्ञानिर्विशेषं हि प्रतिपद्यते । 'प्रभाते बल्लवीनां दिव्यं शासनमेवं खलु प्राप्तम् !' इति हर्षप्रकर्षमेदुरान्तरङ्गो भूत्वा 'अयि भो गोपाङ्गनाः ! युष्माकमाज्ञामवतंसयन्नहं तथैव तल्पादुत्थाय बहिरागन्ताऽस्मि' इति सादरं सानुरागभरं चाभिधाय शयनीयात्समुत्थाय, * पतिसंमानिता सीता भर्तारमसितेक्षणा । आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ * इत्युक्तप्रक्रियया स्वसंमानितया नीलादेव्या च आद्वारमनुसृतो भूत्वा दिव्यसिंहासनान्तिकमागन्तुमुपचक्रमे । तदावे गोप्यः * यल्लक्ष्मीकरसौख्यसाक्षि जलजप्रस्पर्धमानाङ्घ्रि यत् * ( श्रीरङ्गराजस्तवे—पादारविन्दवर्णनप्रकरणे ) इत्युपश्लोकितं कृष्णस्य पादारविन्दयोः परमसौकुमार्यमनुसंधाय 'हा हन्त ! एवंविधाभ्यामतिमृदुलाभ्यां दिव्यचरणाभ्यां सरणं प्रार्थितवत्यो वयं निशिचरजनतानिर्विशेषा हि भवामः ; * पादारुन्तुदमेव पङ्कजरजः चेटीभृशालोकितैरङ्गम्लानिरथाम्ब ! साहसविधौ लीलारविन्दग्रहः । डोला ते वनमालया हरिभुजे हा कष्टशब्दास्पदं केन श्रीरतिकोमला तनुरियं वाचां विमर्दक्षमा ॥ * ( श्रीगुणरत्नकोशे ) इत्युपश्लोकिताद्दिव्यमहिषीसौकुमार्यादपि सुतरामभ्यधिकं सौकुमार्यं बिभ्राणस्य देवदेवस्यास्य दिव्यचरणयोरतिकर्कशे भूतले विन्यासं प्रार्थितवतीनामस्माकं शोचनीयं हि महत्तरं पापम्' इति भृशमनुशयानाः, * रूपसंहननं लक्ष्मीं सौकुमार्यं सुवेषताम् । ददृशुर्विस्मिताकारा रामस्य वनचारिणः * ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणः । मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः * इत्युक्तरीत्या दण्डकारण्यवासिनां महर्षीणां या प्रक्रिया समजनि पुरा, तामेव दधुः । ते खलु महर्षयो निशाचरनिवहकृतनिरवधिकहिंसनानि भगवतो रामभद्रस्य सकाशे विज्ञापयितुमाक्रन्दितुं च कृतसंकल्पा अपि अस्पृष्टचिन्तापदस्य तदाभिरूप्यस्यावलोकनमात्र एव स्वविजिज्ञापयिषितं सर्वं विस्मृत्य सौन्दर्यसौकुमार्यविवशीकृतहृदयास्सन्तो यथा मङ्गलाशासने प्रावर्तन्त, तथा गोप्योऽपि * वन्दारुवृन्दारकमौलिमालायुञ्जानचेतःकमलाकरेभ्यः । संक्रान्तरागाविव पादपद्मौ पाणितलाभ्यां गृहीत्वा निजशिरस्सु निदधानास्सत्यो मङ्गलान्याशासत इति गाथा सैषा निबद्धा गोदादेव्या ।

ननु मङ्गलाशासनं नाम आशीर्वादापरपर्यायो हि भवति ; सर्वोत्तुङ्गस्य सर्वमङ्गलनिधेर्भगवतो विषये सर्वथा नीचा दासजना मङ्गलान्याशासत इति कथमिदमुपपद्यताम् ? अवाप्तसमस्तकामत्वेन सर्वरक्षकत्वेन च प्रसिद्धस्य भगवतस्सकाशात् स्वस्य मङ्गलप्रार्थनं खलु युक्तम् ; तादृशीं पद्धतिं विहाय मङ्गलनिधेरेव भगवतो मङ्गलाशासनं कथं नु क्रियते ? इति काचिदाशङ्का भवित्री । अत्रोच्यते । भक्तानां सज्जनानां ज्ञानदशा प्रेमदशेति दशाद्वितयं वर्तते ; ज्ञानदशायां रक्ष्यरक्षकभावो व्यवस्थितोऽवतिष्ठते ; भगवति रक्षकताधियं स्वात्मनि रक्ष्यताधियं च यथायथं बिभ्रति भक्ता इति यावत् । "सर्वरक्षको भगवान्, वयं भगवता रक्ष्याः ; तत्सकाशादस्माभिर्मङ्गलानि प्राप्तव्यानि" इत्यनुसन्धानम् तन्मूलकप्रार्थनादिकं च ज्ञानदशायां प्रवर्तते । प्रेमदशायां तु भगवति रक्ष्यताधीः स्वात्मनि रक्षकताधीश्च हठादेव भवति । रक्ष्यरक्षकभावानुसंधानं विपर्यस्यति । सर्वेश्वरस्य ज्ञानशक्त्यादिगुणगणान् विस्मृत्य तदीयसौन्दर्यलावण्यसौकुमार्यादिकमसकृदनुसन्धाय द्रवीभवन्मनसां प्रेमपरवशानां भगवति रक्षकत्वाध्यवसायः प्रच्युतो भवति । भगवन्तं रक्षितुं प्रयतन्ते ते । अस्थानभयशङ्कित्वं हि प्रेम्णो विपाकविशेषः । तदुक्तं श्रुतप्रकाशिकायाम्—" सम्बन्धविशेषान्वितेषु प्रीतिः स्नेहः ; यस्य विपाका अस्थानभयशङ्कित्वं दोषानवभासो दोषेऽपि गुणत्वबुद्धिरित्यादयः " इति । अखिलहेयप्रत्यनीककल्याणैकतानेऽपि भगवति कालदेशाविवैगुण्यवशात् हाहन्त ! किमप्यवद्यं संभवेत्किमु ! इति शङ्कातङ्काङ्कुरो मनसि भवति प्रीतिरूपापन्नतान-

निधीनां महताम्; तथैवातिशङ्कया मङ्गलाशासनप्रवृत्तिरुन्मिषति; एतादृशो विलक्षणः प्रेमपाकः श्रीमति वैकुण्ठे सर्वोपाधिविनिर्मुक्तानां नित्यमुक्तानामपि विलसतीति विज्ञायते। तथा ह्याहुः श्रीपराशरभट्टार्याः श्रीगुणरत्नकोशे * स्नेहादस्थानरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैः * इत्यादि। अज्ञानान्यथाज्ञानाद्यवद्यगन्धमसहमानायां नित्यविभूत्यां प्रकृष्टविज्ञानबलैकधामशेषशेषाशनगरुडपश्चायुधीप्रमुखा नित्यसूरयोऽपि व्यामुग्धास्सन्तो भगवद्रक्षणदीक्षिता भवन्तीति प्रत्यग्दृशा पश्यन्तो हि विपश्चितो व्याहरन्ति। सत्यमेतत्; भगवतः सर्वज्ञत्वसर्वशक्तित्वादिगुणभूमानं विस्मारयति तदीयमप्रमेयं सौकुमार्यम्। तथा चोपपद्यते सर्वोत्तुङ्गविषयेऽपि जघन्यजनकर्तृकं मङ्गलाशासनमिति कृतं पल्लवितेन।

भगवान् नन्दनन्दनो वासुदेवो दिव्यसिंहासनमधिष्ठाय 'अयि गोप्यः! यत्कार्यमुद्दिश्य समागता यूयम् तदधुना निवेद्यताम्; सिंहासनमधिष्ठाय शृणु तावदस्मदीयं कार्यमिति खलु भवतीभिरभ्यधायि; तथैव सिंहासनमध्यतिष्ठम्; विजिज्ञापयिषितं कार्यं विज्ञाप्यताम्; आज्ञापयत मां कामं शासनं करवाणि किम्?' इत्याचचक्षे। अथ च गोप्यः—'भगवन्! किमस्ति कार्यमस्माकं मङ्गलाशासनादतिरिक्तम्? एतदर्थमेव खलु समागता वयम् इति विज्ञाप्य मङ्गलान्याशासते।

प्रथमतस्तावत् त्रिविक्रमापदानमधिकृत्य मङ्गलमाशासते [पुरा जगतीतलमिदं विक्रान्तवन्! भगवन्! तव चरणारविन्दमङ्गलमाशास्महे] इति। महेन्द्रवैरिणा महाबलिनाऽपहृतं त्रैलोक्यसाम्राज्यं वासवाय तस्मै प्रत्यर्पयितुकामो भगवान् याचकरूपमास्थाय महाबलिमभिवञ्च्य प्रतिगृह्य प्रायच्छत्; तदात्वे इन्द्रादयो देवाः स्वाभिलषितप्रयोजनप्राप्त्या हर्षप्रकर्षपरवशास्सन्तो भगवन्मङ्गलाशासने प्रवृत्तिमात्रयाऽपि नोद्वहन्तिस्म। महाबलिप्रभृतयश्च स्वकीयत्वेनाभिमतानां वस्तूनां प्रच्युत्या खिन्ना भूत्वा मङ्गलाशासने प्रसक्तिमपि न दधुः। तथा च तदात्वे मङ्गलाशासनवार्तामात्रमपि नोदभूत्! निर्विण्णानामासुरप्रकृतीनां मङ्गलाशासने प्रवृत्तिरसंभविनी; प्रहृष्टानां देवानां तु सा भवितुमर्हति; केवलं स्वार्थपराः एते मङ्गलाशासनमिति कश्चन कृत्यविशेषो वर्तत इत्येतावन्मात्रमपि न जानन्तिस्म हन्त! परमसुकुमाराभ्यां दिव्यचरणारविन्दाभ्यां बतबत! कर्कशतमाः स्थलविशेषा आक्रान्ता इति निर्वेदभूम्ना मङ्गलान्याशासितुं तदात्वे विलक्षणोऽधिकारी नैकोऽप्यासीत। सा हि महती न्यूनता; तामपाकर्तुं वयमधुना मङ्गलान्याशास्महे—इत्युक्तं भवति।

एवं नाम प्रयुक्तां मङ्गलाशासनवाचमाकर्णितवता भगवता कृष्णेन प्रोक्तमेवम्—भो गोप्यः! लोकविक्रांतिकाले नैकोऽपि मङ्गलमाशास्त मह्यमिति न मन्तव्यम्; तदानीमपि जाम्बवदादयः स्थित्वा मङ्गलमाशासत—इति। अथ गोप्यो लङ्काविध्वंसनौपयिकविक्रममधिकृत्य मङ्गलमाशासते [तत्र गत्वा लङ्कां विध्वस्तवन्! तव विक्रमो जयतु विजयताम्] इति। रथगजतुरगराज्यादिकं सर्वं विहाय दारुणेषु भीषणेषु च महारण्येषु पदत्राणशिरस्त्राणादिपरिग्रहमप्यन्तरेण पद्भ्यां खलु हन्त पर्यटनमकारि; तदात्वे हन्त मङ्गलाशासनं केनापि न कृतम्; अथ लङ्कां प्राप्य तत्र सुमहत्तरं पौरुषं प्रख्यापितम्; तदधिकृत्यापि मङ्गलाशासनं नावातरत; तादृशीं न्यूनतां परिहर्तुं वयमधुना मङ्गलमाशास्महे—इति कथयामासुर्गोप्यः। अथ भगवानवोचत्;—भो गोपाङ्गनाः! श्रीरामायणं युष्माभिः किमहो मनागपि नाकर्णितम्? मङ्गलाशासनमयं खलु रामायणम्; * स्त्रियो वृद्धास्तरुण्यश्च सायंप्रातस्समाहिताः। सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः॥ * इति; * पतिसंमानिता सीता भर्तारमसितेक्षणा। आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी॥ * इति; * यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा। अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम्॥ * इति; * ते तं सोममिवोद्यन्तं ... मङ्गलानि प्रयुञ्जानाः * इति च मङ्गलाशासनानि भूरितराणि हि सन्ति मे। विशिष्य

विहगेन्द्रो जटायुमहाराजः * यामोषधिमिवायुष्मन्! * इति सर्वोत्तमं मङ्गलाशासनमातेने । तदधुना समावतारचर्यामधिकृत्य मङ्गलमाशासितुं नास्ति तावदावश्यकता । किञ्च, कृष्णकिशोरं मां पुरतस्सिंहासने समुपवेश्य, मामुत्सृज्य त्रिविक्रमस्य रामस्य च मङ्गलाशासनं कुरुध्वे; किमेतदहो! प्रत्यक्षं दैवतं परित्यज्य परोक्षं दैवतमाद्रियध्वे; तदिदं मम लज्जावहं ननु इति । अथ गोप्यः— भगवन् मुकुन्द! त्रिविक्रमोऽन्यः, रामोन्यः, कृष्णोन्य इति प्रतिपत्तिगन्धोऽपि नास्त्यस्माकम्; त्वयैव समयविशेषे लोका विक्रान्ताः; त्वयैव समयान्तरे लङ्का प्रधर्षिता-इत्येव वयं सुदृढं प्रतिपद्यामहे; वर्तमानमिममवतारमधिकृत्यापि मङ्गलमाशास्महे; शृणु भगवन्! इत्यभिधाय, शकटभञ्जन-वत्सासुरव्यापादन-गोवर्धनोद्धरणादिकृत्यविशेषानुद्दिश्य क्रमशो मङ्गलमाशासते ।

[ शकटं पादघातेन धूलिसात्कृतवन्! तव कीर्तिर्जयतु विजयताम् ] इति शकटासुरभञ्जचर्याविशेषमनुसन्धाय मङ्गलमाशासते । शकटभञ्जनकथा चैवम्:— व्रजे कदाचिद्यशोदा कृष्णशिशुं स्वगृहद्वारे शकटस्याधस्तात् शाययित्वा यमुनामयासीत; अथ कृष्णजिघांसया कंसप्रेरितेष्वन्यतमः (असुरविशेषः) कृष्णाश्रयभूतं शकटमाविश्य निपत्य चोपरि हन्तुमयतत; तदात्वे कृष्णो भगवान् सर्वरक्षणदक्षिणेन स्वचरणेनैव स्वस्यापि रक्षां संपिपादयिषुः स्तन्यार्थं प्ररुदन्निव चरणमुन्नमय्य तदभिघातेन सासुरं शकटं शिथिलीचकारेति । अत्रेदमवधेयम्; शकटे असुरावेशस्समजनीति यद्यपि पौराणिकाः स्पष्टं नाभ्यदधत; तथाऽपि श्रीशठकोपमुनिश्रीविष्णुचित्तसूरिप्रभृतय एवमाचक्षते । व्रजभूमावङ्कुरदोषधिमात्रमप्यासुरमेवेति मङ्गलाशासनपराणां दिव्यसूरीणामभिमानः । अस्तामेतत् । एवं शकटभञ्जनचर्याविशेषमधिकृत्य गोपाङ्गनाभिः कृतं मङ्गलाशासनमाकर्ण्य कृष्णेन कथितम्— 'गोप्यः! अतिशैशवे संवृत्तमिदं चरितम्; तदात्वे किमप्यहं नाज्ञासिषम्, प्रबुद्धेन मया कृतेषु कृत्येषु किमपि कथयतेति । अथ, " वत्सासुरेण कपित्थासुरं प्रध्वंसयामासिथ भगवन् कृष्णकिशोर!; तादृशमपदानमधिकृत्य मङ्गलमाशास्महे " इति गोप्य ऊचुः । तन्निशम्य कृष्णः प्राह—एतत्कृत्यविषयिणी प्रत्यभिज्ञा मम भूयसी वर्तते; यदाऽहं वत्सकपित्थौ मिथोऽभिघातेन विध्वस्तौ विरच्य्य गृहमगाम्, तदानीमेव मम जननी यशोदा विदितैतद्वृत्तान्ता मह्यं मङ्गलमाशास्तेति सम्यगेव स्मरामि; [ तदिदं श्रीभट्टनाथसूक्ते—पेरियाल्वार्तिरुमोळिदिव्यप्रबन्धे ३—३—७ गाथायामनुसन्धेयम् । ] अयि गोप्यः! कथामन्यां कथयत-इति । अथ गोपाङ्गनाः [ गोवर्धनाद्रिं छत्रतया समुद्धृतवन् कृष्ण! तव गुणप्रथा जयतु विजयताम् ] इति गोवर्धनोद्धरणरूपचर्याविशेषमधिकृत्य मङ्गलमाशासते । गोवर्धनोद्धरणकथा चैवम्— व्रजे प्रतिसंवत्सरं महेन्द्रपूजां निर्वर्तयन्तो गोपालास्तदर्थं पुरस्तादेव बहुशकटपरिमितशाकसूपादिसमेतबृहदन्नकूटसज्जीकरणे प्रवर्तन्ते; एवं नाम बहोः कालात् प्रचलति । एकस्मिन् वत्सरे तु कृष्णस्तदिदमन्नकूटसज्जीकरणमवलोक्य किमप्यजानन्निव तान् गोपान् प्राक्षीत्—किमर्थमेवमपरिमितान्नसन्नाहः क्रियत इति । पृष्टाश्च ते प्रत्यूचुः 'वत्स कृष्ण! किं न जानासि त्वम्? प्रतिसंवत्सरं खल्वेवं संभ्रियते देवेन्द्रसमाराधनाय । अस्मत्कुलधनभूतानां गवां वत्सानां च सलिलयवसादिवस्तुप्रदानेन महोपकारको महेन्द्रः खलु; स चावश्यमस्माभिस्संतर्पणीय इति चिरादेवमनुष्ठानं संपद्यते' इति । तदाकर्ण्य भगवान् कृष्णः 'परदैवभूतस्य मम पुरतो देवतान्तरसमाराधनमिदं कथमिव सह्यम्? यथाकथञ्चिद्वर्जनीयमेवैतत' इति मनसि कृत्वा प्रोवाच तान् प्रति, " अयि भो गोपवृद्धाः! असौ गोवर्धनाद्रिरेव खल्वस्माकं गवां वत्सानां च धारकपोषकभोग्यवस्तुप्रदानेन परिपालकः, प्रत्यक्षदेवं परित्यज्य अनुपकारकस्य परोक्षस्य चेन्द्रस्य समाराधनं न खलु न्याय्यम्; * यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति * इति भगवती श्रुतिश्च प्राह; तत्सर्वथाऽप्यनुचितं देवेन्द्राराधनमिह " इति । तदिदमाकर्णितवन्तो गोपास्सर्वेऽपि युक्ततरमेवैतद्वच इति प्रतिपद्यमानाः उपहारराशिस्सर्वोऽपि गोवर्धनाचलतल्लजायैव समर्पणीय इत्यवधारयन्तस्तथैव समार्पिपन्! अथ क्रुद्धो वासवः पुष्कलावर्तकादिपर्जन्यगणान् नियुज्य सुमहत्तरवृष्टिबाधा-

मुदपादयत् । अथ गोगोपगोपीजनसंचये सुदुस्सहवृष्टिबाधयाऽनया भृशं व्याकुले विह्वले च सति भगवान् भक्तवत्सलो नन्दनन्दनः स्वयं यमचलं रक्षकमाचचक्षे पुरा, तेनैवाचलेन रक्षां विधित्सुः तमेव गोवर्धनाद्रिं छत्रमिवोद्धृत्य सप्तरात्रं बिभर्ति स्म; अथ भृशमपत्रपयाऽभिभूतो बिडौजा अपचार-क्षामणेन पूतो बभूवेति ।

इदमाकर्ण्य कृष्णः प्राह— सप्तरात्रमहं गोवर्धनाद्रिं छत्रतया दधानो गोगोपजनरक्षणतत्परोऽतिष्ठम्; अथ वैरी स इन्द्र एव स्वयं समक्षमागत्य मङ्गलमाशास्य प्रतिनिवृत्तः; अतस्तत्रापि मङ्गलाशासनमन-पायम्; अन्यत्किमपि कथयत— इति । अथ गोप्यो हेतिराजाय भगवते सुदर्शनाय मङ्गलमाशासते [वैरिव्रातविमर्दनक्षमस्तव करस्थो जैत्रो हेतिराजो जयतु विजयताम्] इति । कृष्णस्यैव सर्वप्रकार-प्रभावकथने दृष्टिदोषो भवेत्किमु! इत्यतिशङ्कया प्रभावविशेषं हेतिराजेऽधिरोप्य कथयन्त्यस्तस्मै मङ्गल-माशासते । * काशीविप्लोषचैद्यक्षपणधरणिजध्वंससूर्यापिधानग्राहद्वेधात्वमालित्रुटनप्रभृतिषु कृत्य-विशेषेषु हेतिराजस्य जयशालित्वं प्रथितमिहानुसन्धेयम् । मूले हेतिराज इति शब्दो नास्ति; (द्राविडभाषायाम्) 'वेल्' इति पदमस्ति । गोपजात्युचित आयुधविशेषस्सः । तत्पदेन सुदर्शनस्यैव विवक्षेति वेदितव्यम् । उपलक्षणमर्यादया पाञ्चजन्यस्यापि विवक्षा भवितुमर्हति । श्रीसुदर्शनशतके * वाणी पौरा-णिकी यं प्रथयति महितं प्रेक्षणं कैटभारेः शक्तिर्यस्य—इषु दंष्ट्रा नख परशु मुखव्यापिनी तद्विभूत्याम् * इति कथ्यते; हेतिराजस्यावेशः कदाचिदिषौ, कदाचिद्दंष्ट्रायाम्, कदाचिन्नखे, कदाचित्परशौ...इत्युच्य-मानया प्रक्रिययाऽनया अधुना तस्यावेशो गोपजात्युचित आयुधविशेषे इति विभाव्यम् ।

अथ [इत्येवमेवं तवैव यशांसि संकीर्त्य पुरुषार्थं लब्धुमद्य वयमत्रागतास्स्मः, भगवन्! दयेथाः] इति व्याहरन्ति । रसनायाः षड्रसोपहरणवत् षड्विषयकमङ्गलाशासनं कृतमिह । एतावता कथमिमा-स्तृप्तिमधिगच्छेयुः ? पर्याप्तिस्तु नैव भवितुमर्हत्यासाम्; अत एव "एवमेवम्" इत्याहुर्गोप्यः । मङ्गला-शासनमेव परमप्रयोजनं मन्वाना इमाः "पुरुषार्थं लब्धुमद्य वयमत्रागता" इति च कथयन्ति; कोऽसौ पुरुषार्थ इति जिज्ञासा जायेत; क्रमशस्तद्व्यक्तीभविष्यति— एवं नित्यमङ्गलाशासनमेव पुरुषार्थ इति ॥

अथ ध्वन्यर्थविवरणम् ॥ प्रथमतस्त्रिविक्रमापदानस्य मङ्गलमाशास्यते । आचार्योऽपि त्रिविक्रमेण भगवता सह सर्वथा साम्यं बिभर्ति । भगवान् स्वयममेयमाहात्म्यशाली सन्नपि तन्निगुह्य वामनमूर्तिस्सन् याचको बभूव; एवमेव गुरुवरोऽपि नित्यमुक्तान्यतमस्वरूपं स्वकीयं माहात्म्यमनाविष्कुर्वन् संसारि-ष्वन्यतमतामेव प्रकाशयन् अत्यन्तस्पृहणीयलघुतमदिव्यमङ्गलविग्रहस्सन् आतुरप्रकृतीनामस्मादृशां सकाशे याचको भवति—रहस्यत्रयं श्रावयितुमवकाशो दीयताम्, तत्त्वत्रयं श्रावयितुमवकाशः प्रदीय-ताम्, षट्कत्रयं श्रावयितुमवकाशो वितीर्यताम्......इति । भगवान् सकलमपि जगतीतलं स्वपाद-स्पर्शधन्यं यथा कृतवान् तथा गुरुसार्वभौमोऽपि क्षेत्रतीर्थदिव्यदेशादियात्रापदेशेन कृत्स्नमपि भुवनं स्वपा-दारविन्दसंबन्धधन्यतां नयति । भगवान् जगद्विक्रमणकाले स्वपादतस्तीर्थमुद्भाव्य जगतः पवित्रतां चक्रे; तथा गुरुतल्लजोऽपि स्वचरणाम्भोजस्पर्शलम्पन्नसौरभेण पावनेन तीर्थेन प्रदत्तेन पुनाति शिष्य-निवहान् । एवंरीत्या त्रिविक्रमसधर्मण आचार्यस्य चरणयोरेव मङ्गलाशासनं कृतमिति ध्येयम् । अथ लङ्काध्वंसिनो मङ्गलाशासनं क्रियते; लङ्काध्वंसे हनुमानेव प्राधान्यमधत्तेति सर्वनिर्विवादमेतत्; स च हनुमान् सकलविद्याविशारदत्वेन जितेन्द्रियत्वेन च प्रथितः; * नानृग्वेदविनीतस्य नायजुर्वेदधारिणः । नासामवेदविदुषः शक्यमेवं प्रभाषितुम् ॥ नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् * इत्यादिना श्रीराम-चन्द्रवचसा तस्य सकलविद्यावैशारद्यं सुगमम् । * अन्यत्र भीष्माद्गाङ्गेयादन्यत्र च हनूमतः । हरिणी-खुरमात्रेण चर्मणा मोहितं जगत् * इत्यनेन प्रमाणेन तस्य जितेन्द्रियत्वं च प्रथितम् । तथाच ज्ञाना-

सुष्ठानसम्पन्नो गुरुवर इह आशासितमङ्गलो भवति । संकल्पसूर्योदये * दर्पोदग्रदशेन्द्रियाननमनोनक्तश्चराधिष्ठिते देहेऽस्मिन् भवसिन्धुना परिवृते दीनां दशामास्थितः । अद्यत्वे हनुमत्समेन गुरुणा संबोधितार्थस्सुधीः लङ्कारुद्धविदेहराजतनयान्यायेन लालप्यते ॥ * इत्यनुगृहीतं श्लोकरत्नमप्यत्रानुसन्धातुं योग्यम् ।

अथ शकटध्वंसकारिणे मङ्गलमाशास्यते ; आचार्यवर्योऽपि नूनं शकटध्वंसकारी ; स्थलात् स्थलान्तरप्रापकं हि शकटम् । कृष्णेन हतं शकटं हि दारुणम् ; तथा दारुणमेव शकटमिह विवक्षितम् । स्थलात् स्थलान्तरप्रापका मार्गाश्चारुतराश्च सन्ति दारुणाश्च सन्ति ; अर्चिरादिमार्ग एकश्चारुतरः ; अन्ये गर्भनरकस्वर्गादिमार्गा दारुणाः ; तेषां ध्वंसनं हि करोत्याचार्यवर्यः स्वपादसंबन्धेन । अथ वत्सेन कपित्थं हतवते मङ्गलमाशास्यते । कण्टकेनैव कण्टकोद्धरणवत् वैरिद्वारैव वैरिव्यापादनमिह विवक्षितम् । आचार्योऽपि दुर्मतदूरीकरणावसरे, परस्परव्याहतं व्याहरतां प्रतिपक्षिणां वादेषु परस्परव्याघातप्रदर्शनत एव विधूननं वितनोति यत तस्मै वैदग्ध्याय मङ्गलमाशास्यत इहेति ध्येयम् । अथ गोवर्धनाद्रिमुद्धरते मङ्गलमाशास्यते । अस्मिन् गोवर्धनाचलोद्धरणचरिते प्रशस्यतमः कोऽपि महागुणो विराजते, महदपचरितं कृतवतोऽपि महेन्द्रस्य मनागपि दण्डनमकुर्वन् भगवान् स्वकीयकृत्यनिर्वहणमात्रे निष्णात आसीदिति ; एतादृश एव हि महागुणो गुरुवरेष्वपि प्रथते । मात्सर्यवशादितरे महापचारकारिणोऽपि भवन्तु कामम् ; तत्प्रतिक्रियां मनसाऽपि न चिन्तयन्ति गरीयांसः । केवलं स्वकीये कर्तव्ये बद्धश्रद्धा भवन्ति ; तदिदं श्रीकूरनाथादिगुरुवरचरित्रेषु सुगमम् । अथ कृष्णकरस्थिताय वस्तुविशेषाय मङ्गलमाशास्यते ; अत्र * चारित्रोद्धारदण्डं चतुरनयपथालंक्रियाकेतुदण्डं सद्विद्यादीपदण्डं सकलकलिकथासंहृतेः कालदण्डम् । त्रय्यन्तालम्बदण्डं त्रिभुवनविजयच्छत्रसौवर्णदण्डं धत्ते रामानुजार्यः प्रतिकथकशिरोवज्रदण्डं त्रिदण्डम् * इत्यनेन श्लोकरत्नेन क्रियमाणं मङ्गलाशासनमाचार्यविषये विभाव्यम् ॥ ... २४

---

## २५. पञ्चविंशीगाथा—ओरुत्तिमहनाय्

* पञ्चविंशगाथापद्यम् *

श्लो० देवक्या आत्मजस्सन् निशि तदनु यशोदात्मजोऽभूदितीदं
श्रुत्वा द्रोहैकदीक्षाजुषमतिपरुषं कंसमुन्मूलयन् भोः ।
त्वय्येवेच्छां वहामस्तव च शुभगुणान् प्रोच्य खेदं त्यजामो
नन्दामश्चेति गोप्यो जगदुरिति गृणत्येधतां दिव्यगोदा ॥ २५ ॥

कस्याश्चन भाग्यशालिन्याः पुत्रत्वेन निशि जनित्वा तस्यामेव निशि अपरस्या भाग्यशालिन्याः पुत्रत्वेन निगूढं विवर्धमाने त्वय्यस्मिन् असहिष्णुताभूम्ना दुरितं हृदि चिन्तितवतः कंसस्याभिसन्धिं विपर्यस्तमारचय्य तस्य जठरे जातवेदस्समानतया स्थित सर्वेश्वर महाप्रेमशालिन् ! अस्मदपेक्षितपुरुषार्थप्रदानसमुत्सुको यदि त्वमसि, शृणु तावत् ; वयं त्वामेव काङ्क्षन्त्यस्समागतास्स्मः ; त्वदीयं लक्ष्म्यानुरूप्यात्मकं प्रभावं विक्रमं च वयं गायन्त्यस्सत्यो वीतविषादा महानन्दभरिताश्च भवामः ॥ [ इति मूलगाथाविवर्तः ]

अधस्तनगाथायां परमरमणीयं मङ्गलाशासनं कृतवतीनां गोपाङ्गनानाम् * द्राक्षामधिक्षिपति निन्दति माकरन्दधारां सुधारसझरीमधरीकरोतीति प्रशंसनयोग्यां फणितिपरिपाटीमाकर्णितवान् कृष्णकिशोरः

परमानन्दतुन्दिलस्वान्तस्सन् "अयि गोप्यः! युष्माभिः क्रियमाणं मङ्गलाशासनं न मे विस्मयाय कल्पते; नैसर्गिको ह्ययं प्रभावो युष्माकम्; इदमास्तां तावत्। शीतबाधामप्यविगणयन्त्यो हि यूयं देहाभिमानवैमुख्यभाजो भूत्वा निशीथे प्रस्थाय महता परिश्रमेण समागतास्स्थ; मङ्गलाशासनमेकमेव कार्यतया समुद्दिश्य समागता यूयमिति न मे मनसि प्रत्ययो भवति; मन्ये किञ्चिदन्यदुद्देश्यं स्यादिति; तदवश्यं वक्तव्यं युष्माभिः" इति प्रेममयीं वाचमूचे; तदिदमाकर्ण्य गोप्यो विज्ञापयन्तिस्म— भगवन्! * जन्म कर्म च मे दिव्यमिति त्वयैव प्रशस्यमानं त्वदीयं जन्म च कर्म च सानन्दं संकीर्तयन्त्यः खलु समागता वयम्; * गच्छतां दूरमध्वानं तृष्णामूर्च्छितचेतसाम्। पाथेयं पुण्डरीकाक्षनामसंकीर्तनामृतम्॥ * इति ह्याहुर्महर्षयः; तथा नाम समागतानामस्माकमायासलेशोऽपि नास्ति भगवन्; नान्यत्किमपि वस्तु काङ्क्षणीयमस्त्यस्माकम्; त्वामेव काङ्क्षन्त्यस्स्समागतास्म इति। तदिदं श्रुत्वा प्रहृष्टः कृष्णः तर्हि तद्विस्तरेण कथयत भो इति सुमहत्तरं श्रवणकुतूहलमुदजीघटत; अथ यद्विज्ञापितं गोपीभिस्तदनया गाथया निबध्यते॥

अधस्तनीषु बह्वीषु गाथासु कृष्णस्य प्रभावा बहुविधास्सन्ति कीर्तिताः; तेभ्योऽप्यतिशयितः प्रभावो गाथायामस्यामुच्यते; कोऽयं तथाविधः प्रभाव इति चेत्; कृष्णस्य जननमधिकृत्य यदिहाभिधीयते तदेव। नन्दगोपतनयः, यशोदास्तनन्धय इत्यादिरूपेण कथनं तिष्ठतु नाम। तत्र तावत् जन्मपदघटना नास्तीति कृष्णस्य मनसि अतृप्तिरेव सत्यम्। * अजायमानो बहुधा विजायते * इति, * पिता पुत्रेण पितृमान योनियोनौ * इति च श्रुत्युक्तरीत्या महता कुतूहलेन कृतजननं भगवन्तमुद्दिश्य * जातोऽसि देवदेवेश * इति वसुदेवदेवक्यौ कथयामासतुः; तदेव वचः कृष्णस्य हृदये हर्षप्रकर्षमुदपादयत। पुण्यपापरूपकर्मवशाद्धि वयं नानायोनिषु जायामहे; भगवांस्तु केवलं करुणया तथा। तादृशं जननमधिकृत्य ये भक्ता वाचं विसृजन्ति, तेष्वेव भवति भगवतो भूयान् प्रेमविशेषः। भगवान् पाराशर्यो महर्षिश्चतुरध्यायमयीं शारीरकमीमांसां प्रणयन्नपि नैकस्मिन्नपि सूत्रे भगवतो जननमधिकृत्य मनागप्यवोचत्। ततो महदेव दुःखमासीद्भगवतः; तद्दुःखापनोदनार्थमेव पराङ्कुशपरकालादयो दिव्यसूरयः स्वकीयेषु दिव्यप्रबन्धेषु असकृदनुसन्दधिरे भगवतो जननम्। श्रीपराङ्कुशमुनिः स्वकीये प्रथमदिव्यप्रबन्धे (तिरुविरुत्ते) प्रथमगाथायामेव हि * पन्निन्न योनियुमाय्प्पिरन्दायिमैयोर्तलैवा! * (छाया = नानायोनिषु जायमान भगवन् देवाधिदेव प्रभो!) इति भगवन्तं संबोधयामास। अत एव भगवतस्तेषु दिव्यसूरिषु वाचामभूमिः प्रेमविशेषः सर्वजगद्विदितः प्रथते। * अत्याम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः। अतितापिभिरत्यर्थं वर्धमानातिवेदनः॥ * (श्रीविष्णुपुराणे) इत्युक्तरीत्या गर्भवासकाले तीव्रवेदनानुभवः; अथ गर्भतो निष्क्रमणकालेऽपि * क्लेशान्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः * इत्युक्तरीत्या सुमहत्तरक्लेशानुभवश्च संसारिणां भवति; अत एवास्माकं जननं जुगुप्सनीयतामापद्यते; भगवतस्तु नैवम्। निरवग्रहानुग्रहपरीवाहरूपं हि तदीयं जननम्। अत एव हि स एव स्वयं गायति * जन्म कर्म च मे दिव्यम् * इति। श्रुतिश्चाह * स उ श्रेयान् भवति जायमानः * इति। एवं च तस्य परमानन्दसंदोहकन्दभूतं तदीयजननप्रस्तावम् इयता प्रबन्धेन अनाकलितमधुना कलयन्ति गोप्यः।

देवक्याः पुत्रत्वेन जनित्वा सद्य एव यशोदास्तनन्धयत्वेन निगूढं वर्धमानेति वक्तव्ये देवकीनाम यशोदानाम च नैव स्पृशन्तिस्मात्र; अपि तु [एकस्याः पुत्रत्वेन जनित्वा अपरस्याः पुत्रत्वेन... ] इति ह्याहुः; किमत्र कारणमिति चेत्; लोके परमपूज्यानां महनीयानां नामग्रहणं न कार्यमिति कश्चन संप्रदायो वर्तते; "स्वामी समागतः, स्वामिनी सेविता" इत्येवं व्यवहारास्संपद्यन्ते। एवं नाम व्यवहरणेन उद्देश्यव्यक्तिविशेषाणाम् अतिशयितमभ्यर्हितत्वं द्योत्यते। तद्वदेवात्र देवक्या यशोदायाश्च नामग्रहणप्रहाणेन तयोरसमाभ्यधिकभाग्यवत्त्वमभिव्यज्यते। देवकीं प्रति भट्टपादा अनुगृह्णन्ति श्रीरङ्गराजस्तवे— * आकण्ठ-

वारिभरमन्थरमेघदेश्यं पीताम्बरं कमललोचनपङ्क्तेति । ब्रह्म स्तनन्धयमयाचत देवकी त्वां श्रीरङ्गकान्त! सुतकाम्यति का परैवम्?॥ ※ इति । साक्षात्परब्रह्मभूतं पुण्डरीकाक्षं पीताम्बरधरं पञ्चायुधोद्भासिदिव्यगात्रं भगवन्तं नारायणमेव प्रसूतवत्या देवक्या भाग्यभूमा वैदेशिकः खलु वाचाम् । अथ यशोदाया भाग्यातिशयमधिकृत्य किमस्ति वक्तव्यम्? जन्मतः प्रभृति आषोडशहायनं संपन्नं सर्वमपि चेष्टितं साक्षात्कृत्य सन्तोषसीम्नि स्थिता खलु सा यशोदा । अस्या भाग्याधिकत्वं गोदादेवीजनको भट्टनाथसूरिराचचक्षे बह्वीभिर्गाथाभिः; तास्वेकस्या गाथाया अस्मदीयमनुवादमाकर्णयत ; — श्लो० ॥ वैलक्षण्येन कर्णाभरणमुपवहन् चारु वासो वसानः मुक्ताद्यम्भूषणाढ्यो मम तनयवरः पृष्ठतो गोगणानाम् । आयातीक्षध्वमेतं नयनशतसहस्रावलोकार्हवेषं सत्यं सर्वाः स्त्रियोऽस्मिन् जगति मदितरा हन्त! वन्ध्या हि सख्यः ! ॥ ※ इति [ भट्टनाथसूक्त ३-३-९. गाथाया अनुवादपद्यमेतत् । ] एवं नाम देवकीयशोदयोरत्युत्तमभाग्याधिकत्वान्नामग्रहणवर्जनमिति ध्येयम् ।

यद्यपि मूले संबोधनमेकमेवास्ति, न बहूनि सन्ति, तथाऽपि बहूनि संबोधनानि योजयितव्यानि । कथमिति चेत्; कस्याश्चन भाग्यशालिन्याः पुत्रत्वेन जात! अथ सद्य एव अपरस्या भाग्यशालिन्याः पुत्रीभूय निगूढं विवर्धमान!, त्वय्यसहिष्णुताभूम्ना दुश्चरितं हृदि चिन्तितवतः कंसस्याभिसन्धिं विपर्यस्तमारचितवन्!, तस्य ( कंसस्य ) जठरे जातवेदस्समानतया स्थित सर्वेश्वर! — इत्येवं संबोधनवाक्यानां बहुत्वेन योजना कर्तव्या । संबोधनद्वयं विवृतम् । अथ तृतीयं संबोधनम् [ त्वय्यसहिष्णुताभूम्ना दुश्चरितं हृदि चिन्तितवतः कंसस्याभिसन्धिं विपर्यस्तमारचितवन्! ] इति । कृष्णं निहत्य 'मम भागिनेयो मृतो बते' ति रोदनेन दुःखाभिनयः कार्य इति कंसस्याभिसन्धिरासीत्; तस्याभिसन्धेर्विपर्यासं कृतवान् कृष्णः; स्वयं कंसं निहत्य मम मातुलो मृतो बतेति हि रुरोद सः । एतदेव कंसाभिसन्धेर्विपर्यस्तताकरणं नाम । कंसस्य यदस्ति विशेषणं " दुश्चरितं हृदि चिन्तितवत " इति, अत्रेदमवधेयम् । वस्तुतः कंसो दुश्चरितानि बहूनि कृतवानेव— वसुदेवदेवक्योर्निगलबन्धप्रापणम्, कृष्णजिघांसया व्रजं प्रति आसुरप्रकृतीनां भूयसां प्रेषणमित्यादीनि; एवंच " दुश्चरितं कृतवतः कंसस्य " इति वक्तव्ये " दुश्चरितं हृदि चिन्तितवतः कंसस्ये" ति कुतः कथितमिति शङ्का जायेत; अत्रेदं तत्त्वमवबोधयन्ति गुरुचरणाः;— लोके कश्चित् भगवति भक्त इव वाचा स्तुतिशब्दान् विकिरति; परंतु तस्य हृदये प्रेमगन्धोऽपि नास्ति; तस्मिन् भगवाननुग्रहातिशयमेव प्रकाशयति; अस्य हृदये अनुरागो नास्ति हीति तं न परित्यजति; अथान्यः कश्चित् भगवन्तं भूरिशो विनिन्दति; तस्य निग्रहः खलु कर्तव्यो भगवता, परंतु तावता न निगृह्णाति; दूषकस्यास्य मात्सर्यं हृदयेऽप्यस्ति वेति परीक्षते; तत्र तदस्तीत्यवगते सति तदैव निगृह्णाति । एतेन किमुक्तं भवति? कश्चिदनुग्रहीतुं बाह्याभिनयमात्रमेव पर्याप्तम्; निग्रहीतुं तु न तावत्पर्याप्तम्; निग्रहहेतुभूतस्य वस्तुनो हृदयेऽपि सद्भाव आवश्यकः इत्युक्तं भवति । अनुग्रहाय व्याजमात्रमप्यलम्; निग्रहाय न तथा इति भगवतो निस्सममाभ्यधिको गुणातिशयः ख्यापितो भवति । प्रकृते कंसस्य भगवता कृष्णेन कृतं निग्रहणं तदीयहार्दक्रौर्यनिबन्धनम् इति द्योतयितुमेव " दुश्चरितं हृदि चिन्तितवतः कंसस्य " इति कथितमिति । एतावता, कंसो दुश्चरितं हृदये केवलं चिन्तितवान् न तु कर्मणा कृतवानिति अयमर्थो न लभ्येत । निग्रहं प्रति पुष्कलहेतुशाली सोऽयमित्ययमेवार्थः स्फोरितो भवति ।

[ तस्य जठरे जातवेदस्समानतया स्थित! ] ※ उल्लङ्घ्य सिन्धोस्सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्काम् ※ इति मारुतिस्तुतिपरपद्योक्तप्रक्रियया, कृष्णविषयकभयाग्निं येये भक्ता हृदि बिभ्रतिस्म तेषां हृदयात्तमग्निमुत्थाप्य कंसस्य जठरे प्रक्षिप्तवान् भगवानिति कथ्यत इव । कंसघातुकेति सिद्धोऽर्थः । अनुपदमेव [ महाप्रेमशालिन्! ] इति संबोधनेन, ※ न मे द्वेष्योऽस्ति न

प्रियः * इति कथयता भगवता कृतः कंसवधो भक्तेषु विनिहितेन महता प्रेम्णा, नतु स्वेच्छयेत्ययमर्थो द्योत्यते। स्वविरोधीति हेतुना न कंसो निहतः, अपितु भक्तजनविरोधीत्यनेनैव हेतुना; यदाह सहस्रगीत्यां श्रीशठकोपमुनीन्द्रः (३-५-५) * शादुशनतै नलियुम् कञ्जनैच्चादिप्पदर्कु * इति। (परमभागवतद्रोहिणं कंसं निहन्तुं प्रादुर्भूतो भगवानिति तदर्थः।) भक्तजनप्रेमपारवश्येन तदीयान् क्लेशान् सोढुमशक्नुवन् तत्क्लेशकारिणं कंसं जघानेति सूचनार्थमेव * महाप्रेमशालिन्निती्दं संबोधनमवतीर्णमिति बोध्यम्। अथ [अस्मदपेक्षितपुरुषार्थप्रदानसमुत्सुको यदि त्वमसि] इत्येतद्वाक्यम् अतिगम्भीरम्; भगवत्पादारविन्दपरिसरे नित्यकैङ्कर्यादन्यत् नासामपेक्षितं किमपि; तत उपरिष्टादेकोनत्रिंशगाथायां व्यक्तीभविष्यति। अथ [वयं त्वामेव काङ्क्षन्त्यस्समागतास्स्मः] इति यदभिधीयते, तदिदमनर्घं वचः। लोके तावत् प्रयोजनान्तरपरा जना न भगवन्तं कामयन्ते; अपितु भगवतस्सकाशात् अन्यत्किमपि कामयन्ते; ये ह्यनन्यप्रयोजना जनास्त एव हि त्वामेव काङ्क्षामो वयमिति धीरं वक्तुं प्रभवन्ति। एवमाचक्षाणा इमा गोप्यः स्वात्मनामनन्यप्रयोजनतां दृढीचक्रुरिति ध्येयम्। अथ स्वेषामिहागमने न मनागपि क्लेशो जात इति, परमानन्दभूम्नैव समागमनं जातमिति च विज्ञापयन्ति * त्वदीयं लक्ष्म्यानुरूप्यात्मकमित्यादिना। भवदीयं प्रभावं विक्रमं च गायन्तीनामस्माकं को नाम क्लेश इति भावः॥ लक्ष्म्यानुरूप्यं नाम— * तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम्। राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा॥ * इति मारुतिकथितमानुरूप्यम्। अनुरूपदाम्पत्यं हि लोके दुर्घटं प्रायः; पत्यौ विशालहृदये सति पत्नी संकुचितहृदया स्यात्; पत्न्यां विशालहृदयायां सत्याम् पतिस्संकुचितमनास्स्यात्; इह तु न तथा। अतिविस्मयनीयतया घटितमुभयोरानुरूप्यं गायन्त्यो वयम् आनन्दतुन्दिलस्वान्ताः स्म इत्युक्तं भवति॥

अथ ध्वन्यर्थविवरणम्॥ कृष्णो यथा द्वयोर्मात्रोः पुत्रो जातः तथा आचार्योऽपि द्वाभ्यां मातृभ्यां जनितो भवति। * गायत्रीछन्दसां मातेति श्रुतिप्रक्रियया प्रथमा माता गायत्री। अथ द्वितीया माता तु अष्टाक्षरी। * कुलम् तरुम् शेल्वम् तन्दिडुम् * इत्यादिश्रीपरकालसूरिदिव्यगाथायाम् * पेत्त तायिनुम् आयिन शेय्युम् * [साक्षाज्जनन्यपेक्षयाऽप्याधिक्येन हितं वितनोति मूलमन्त्रः] इति कथनात्। कृष्णो निशि जातः— अन्धतमसे जात इति यावत्। आचार्योऽपि * इरुळ्तरुमा ञालमिति श्रीशठकोपमुनीन्द्रेणोक्तायां तमोमय्यां विभूत्यां ह्यवतीर्णः। कृष्णो यथा निगूढं ववृधे तथाऽऽचार्योऽपि निगूढमेव हि वर्धते— स्वप्रभावातिशयान् अप्रकाशयन् संसारिष्वन्यतम एवायमिति भावनीयस्सन् वर्धत इति यावत्। कृष्णे असहिष्णुताभूम्ना कंसो यथा दुश्चरितं हृदि चिन्तयामास, एवं कलिपुरुष आचार्ये द्रोहचिन्तको भवति; कृष्णः कंसमिव आचार्योऽपि कलिपुरुषं क्षणेन भञ्जयति। * जातवेदस्समानतया स्थितेत्यत्र * पाषण्डद्रुमषण्डदावदहनः * पाषण्डसागरमहाबडबामुखाग्निः * इत्यादिकमनुसन्धेयम्। महाप्रेमशालित्वमाचार्याणाम् अन्तेवासिषु वेदितव्यम् * वयं त्वामेव काङ्क्षन्तस्समागता इत्यनेन— आचार्यनिष्ठस्य तदेकदत्तदृष्टित्वं द्योतितं भवति। अथ * त्वदीयं लक्ष्म्यानुरूप्यात्मकं प्रभावं विक्रमं च * इत्यादि। आचार्ये लक्ष्म्यानुरूप्यं नाम लक्ष्मीतुल्यकृपातिशयशालित्वम्। * लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः। ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत्॥ * इत्युक्तरीत्या पुरुषकारकृत्यैकनिष्णातायां लक्ष्म्यां कृपा पारतन्त्र्यम् अनन्यार्हत्वं च यथा पुष्कलम् तथा आचार्येऽपि तदिदं गुणत्रयमतीव पुष्कलमित्युक्तं भवति। भगवान् यथा लक्ष्मीपुरुषकारमन्तरा चेतनान् न स्वीकरोति तथा आचार्यपुरुषकारमपि विना नैव स्वीकरोतीति हृदयम्; उक्तं हि न्यासतिलके— * दत्ते रङ्गी निजमपि पदं देशिकादेशकाङ्क्षी * इति। अथ आचार्ये विक्रमो नाम— सकलविद्यावाहिनीजन्मशैलत्व— जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखित्व— निखिलकुमतिमायाशर्वरीबालसूर्यत्व— निगमजलधिवेलापूर्णचन्द्रत्वादिकथनयोग्यप्रभावातिशयशालित्वम्॥ ... ... ... ... २५

# २६. षड्विंशीगाथा—माले मणिवण्णा

* षड्विंशगाथापद्यम् *

स्नानं यन्मार्गशीर्षे तदनघचरितं प्राच्यशिष्टाग्रिमाणाम्
शङ्खास्त्वत्पाञ्चजन्योपमविभवजुषो भेर्य उच्चप्रणादाः ।
भद्रोक्तिज्ञाः प्रदीपा ध्वजपटविततिस्सद्वितानं च देया-
न्येतान्येतद्व्रतार्थं वटदलशयनेत्यूचुषी श्रीः शरण्या ॥ २६ ॥

अयि भो व्यामुग्ध! मणिसवर्ण! भगवन्! मार्गशीर्षावगाहनमिति उत्तमपुरुषैराचर्यमाणः कृत्यविशेषोऽस्ति ; तदर्थमुपयुक्तानंशान् विज्ञापयामः शृणु तावत् । कृत्स्नभूमण्डलकम्पप्रद-निनदशालि-दुग्धसवर्ण-त्वत्पाञ्चजन्यसदृशान् शंखान् , अतिबृहत्तमाश्च भेरीः ; मङ्गलाशासन-निरतान् , माङ्गलिकप्रदीपं पताकां वितानं च स्वामिन् वटदलशयन भगवन्ननुगृहाण ॥

( इति मूलगाथाविवर्तः )

अधस्तनगाथायाम् " अस्मदपेक्षितपुरुषार्थप्रदानसमुत्सुको यदि त्वमसि " इत्येतद्वाक्यम् , " त्वामेव काङ्क्षन्त्यस्समागतास्स्मः " इत्येतद्वाक्यं च श्रुतवान् भगवान् कृष्णो गोपीः प्राह— अयि भो गोप्यः! परस्परं व्याहतं वचो व्याहरन्ति भवत्यः ; यदि मामेव काङ्क्षन्ति भवत्यस्तर्हि " अस्मदपेक्षितपुरुषार्थे " त्यादिकथनं ह्यप्रसक्तम् ; मनसि कश्चिदपेक्षाविशेषो वो वर्तत इति प्रतिभाति ; युष्मदपेक्षितः पुरुषार्थः कोनामेति मम बलवती जिज्ञासा वर्तते ; तदुद्घाटयतां नाम मनसि स्थितमपेक्षितम् इति । तत्र प्रति-वदन्तिस्म यद्गोप्यः तदनया गाथया निबध्यते । मार्गशीर्षस्नानमिति कश्चन व्रतविशेषः शिष्टाचारसिद्धो वर्तते ; स एवानुतिष्ठासितोऽस्माकम् ; एतदर्थं केचन वस्तुविशेषा आवश्यकास्सन्ति भोः । तान् विज्ञा-प्यमानान् वितरतु भवान् कृपयेति कथयन्ति गोप्यः । कृष्णसकाशे स्वात्मनामागमनार्थं गोपवृद्धाना-मनुमत्यै व्रतविशेषानुष्ठानरुचिमभिनयन्तीनां गोपीनां गिरा तदिदमुच्यत इति प्रतिपत्तव्यम् ।

उपक्रमे हे व्यामुग्ध ! इति संबोधयन्ति कृष्णम् ; अनेन गम्यते कृष्णोऽधुना विशिष्य स्वकीयं व्यामो-हातिशयं प्रकाशयामासेति । ' आः ! गोपालबालिका इमाः प्रत्यूषे प्रबुध्य शीतबाधामप्यविगणय्य प्रस्थाय द्वारपालकं प्रबोध्य मम पितरं मातरं भ्रातरं च प्रबोध्य मां प्रबोध्य मद्दयितां नीलां प्रबोध्य पुनरपि मां प्रबोध्य, मां सिंहासने समुपवेश्य मह्यं मङ्गलान्याशास्य, मम दिव्यं जन्म कर्म च संकीर्त्य किं किं व्याहरन्ति हन्त!' इति विस्मयविवशहृदयस्सन् तासां मुखारविन्दे चिकुरबन्धे कुचकुड्मले च चक्षुषी प्रसारयन् स्वकीयं व्यामोहभूमानमाविश्चकार ; तदिदमवगतवत्यो गोप्यः व्यामोहैकनिरूपणी-योऽयं कृष्ण इति प्रतिपद्यमानाः हे व्यामुग्धेति संबोधयन्ति । सीतादेवी रामचन्द्रस्य स्वभावं " शरणा-गतवत्सल " इति प्राचीकशत् ; [ * विदितस्स हि धर्मज्ञः शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ * इति खलु रावणं प्रति सा कथयामास । ] गोप्यस्तु कृष्णस्य स्वभावं व्यामुग्धपदेन प्रकाशयन्ति । रामो यथा शरणागतेषु वत्सलः प्रोक्तः , तथायं कृष्णः शरणागतेषु व्यामुग्धो न कथितः ; अपितु सामान्यतो व्यामुग्धत्वमेवास्य स्वरूपमिति प्रख्यापितं भवति ।

अथ मणिवर्णेति द्वितीयं संबोधनम् कृष्णस्य सौलभ्यातिशयं दिव्यमङ्गलविग्रहशोभातिशयम् अन्यदन्यच्च वैभवं व्याख्याति। कथमिति चेत्; मणिर्नाम रत्नम्; तद्धि महार्घं सदपि चेलाञ्चले ग्रथनार्हं भवति; तथैव भगवान् निरतिशयपरत्वशाली सन्नपि सर्वेषां हस्तगतः सर्वात्मना विधेयो भवतीति सौलभ्यमुक्तं भवति। अथ मणिपदेन इन्द्रनीलमणिविवक्षा युज्यते; तत्सावर्ण्यकथनेन दिव्यमङ्गलविग्रहशोभातिशयः कथितो भवति। अथ च रत्नसाम्यं भगवति बहुधा निर्वोढुं शक्यम्। रत्नं तावन्न सामान्यपुरुषलभ्यं भवेत्; अपितु भाग्याधिकैकभोग्यं भविष्णु; भगवानपि * तेनावलोक्य कृतिनः परिभुङ्क्ते तम् * [श्रीरङ्गराजस्तवे २—१.] इत्युक्तरीत्या विलक्षणभाग्यभाजामेव भोग्यो भवति। रत्नं तावत् महार्घं सदपि धीवरादिजघन्यजनहस्तगतं सत् अल्पमूल्यकं भवति; तदेव वणिजो हस्तगतं सत् यथावस्थितमूल्यकं भवति; तदेव महाराजहस्तगतं सत् तस्य स्वयं भोग्यं भवति-इति जगति पश्यामः। एवमेव भगवानपि अल्पजनैरल्पवस्तुप्राप्तये प्रार्थ्यते; उत्तमैर्महात्मभिर्मोक्षाख्यसमुत्तुङ्गवस्तुप्राप्तये प्रार्थ्यते; उत्तमोत्तमैस्तु उपायत्वानुसन्धानगन्धमन्तरेण स्वयंपुरुषार्थतया परमभोग्यतयाऽनुभूयते। एवमेवं रत्नसाम्यप्रकारा भगवति बहवोऽनुसन्धेयाः।

अथ [मार्गशीर्षावगाहनार्थमित्यादि।] यद्यप्येवंविधो व्रतविशेषः शास्त्रचोदितो न भवति, तथाऽपि शिष्टाचारसिद्ध इति गोदादेवी प्रख्यापयति गाथायामस्याम्; पूर्वमीमांसायां होलाधिकरणे शिष्टाचारस्योपादेयत्वं व्यवस्थापितम्। वस्तुतः श्रुत्यपेक्षयाऽपि शिष्टाचारस्यैव प्रामाण्यं प्रबलम्। * धर्मज्ञसमयः प्रमाणं वेदाश्चेत्यापस्तम्बसूत्रम्। तैत्तिरीयोपनिषदपि * अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यादित्युपक्रम्य * यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः * इति शिष्टाचारस्यैवानुवर्तनीयतामाम्नासीत। गीताचार्योऽपि गायति * यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥ * इति। भगवतो यामुनमुनीन्द्रस्य सूक्तिरपि— * विधयश्च वैदिकाः त्वदीयगम्भीरमनोनुसारिणः * इति। (त्वदीयानां सतां गम्भीरमनोनुसारिण इति वैयधिकरण्येन विवक्षा। न तु सामानाधिकरण्येन) सोऽयमौपनिषदोऽर्थ एव सकलोपनिषद्बीजभूतेऽस्मिन्दिव्यप्रबन्धे गाथायामस्यां प्रख्याप्यते। तथाच शिष्टाचारसिद्ध-मार्गशीर्षावगाहनाभिधानव्रतविशेषनिर्वर्तनोपयुक्तानि वस्तुजातानि उपरि क्रमशः प्रार्थयन्ते— शंखाः, भेर्यः, मङ्गलाशासनकर्तारः, मङ्गलदीपः, पताका, वितानम् इत्येतानि। अपेक्ष्यमाणानां शङ्खानां विशेषणद्वयं दीयते— कृत्स्नभूमण्डलकम्पप्रदाननदशालित्वं प्रथमविशेषणम्। भारतसमरोपक्रमे भवदीयपाञ्चजन्यादुद्गतो घोषस्तावत् * स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् * इत्युक्तरीत्या धृतराष्ट्रसंबन्धिनां केवलं हृदयानामरुन्तुद आसीत्; अद्यास्माभिरपेक्ष्यमाणानां भवता दास्यमानानां च शङ्खानां घोषेण कृत्स्नभूमण्डलकम्पप्रदेन भवितव्यमिति कथयन्ति— भूमण्डलव्यापिनां भगवद्भागवतविरोधिनां सर्वेषामपि हृदयं विदारणीयमित्यभिप्राय आगमाम्। अथ द्वितीयं विशेषणं * दुग्धसवर्णत्वत्पाञ्चजन्यसदृशानिति। नीलमेघनिभस्य कृष्णस्य परभागशोभां दधानः पाञ्चजन्यो दुग्धसवर्णः भगवतो दिव्यमङ्गलविग्रहच्छविरिव भागवतानां शुभ्रवपुर्वर्णोऽपि अविशेषमुद्दिश्य इति व्यञ्जनार्थमेवं कथनम्। एवंविधाः शङ्खा बहवोऽपेक्ष्यन्ते। यात्रोत्सवाङ्गभूता इते। भगवत्पाञ्चजन्यसदृशः शङ्ख एकोऽपि दुर्लभ इति स्थिते तादृशान् बहून् शङ्खानपेक्षमाणानां गोपीनां हृदयं तावत् सपाञ्चजन्यः कृष्णो भगवान् स्वयमेव समागच्छतादिति। अथ अतिबृहत्तमा भेर्यः काङ्क्ष्यन्ते। यात्रोत्सवपूर्वाङ्गतया शङ्खनादकरणम्, अथ यात्रोत्सवे प्रवर्तमाने वीथीषु भेरीनिनदप्रपञ्चनं च समुद्दिष्टम्। यात्रोत्सवे समुपक्रान्ते * पल्लाण्डुपल्लाण्डिति. मङ्गलाशासनप्रबन्धपारायणपरायणा अध्यापकाश्चावश्यकाः खलु, तेऽपि काङ्क्ष्यन्ते। तेषां गोष्ठ्या मङ्गलदीपतो हि शोभितया भवितव्यम्; तदर्थं मङ्गलदीपापेक्षणम्। तेते भक्ता भागवताश्च दूरादेव वीक्ष्य हर्षप्रकर्षमवाप्नुवन्त्विति पताकाप्रार्थनम्। शिरसि हिमपतन-

निरोधाय वितानप्रार्थनम् । गोपीभिरेवं नाम विज्ञापितमाकर्ण्य कृष्णोऽब्रवीत्— अयि गोप्यः! सुबहूनि हि वस्तूनि भवतीभिरपेक्ष्यन्ते, कथमहं बालक एतावन्ति महत्तराणि वस्तूनि प्रदातुं प्रभवेयमिति । अत्र प्रत्युत्तरकथनरूपेण कृष्णं संबोधयन्ति गोप्यः— * भो वटदलशयनेति । भगवन्! तव दुस्साधमपि किञ्चिदस्ति किम्? सकलमपि जगन्निगीर्य लघिष्ठं वटदलं ह्यधिशेते भवान् समयविशेषे; एवमघटितघटनापटीयसस्तवापि दुर्घटं किञ्चिदस्ति किम्? इत्युक्तं भवति ॥

अथ ध्वन्यर्थविवरणम् ॥ व्यामुग्धेतिसंबोधनेन * यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने * इति (श्रीकूरनाथगुरुवरेण) व्यामुग्धतया स्तुतो भगवान् रामानुजः स्मार्यते । स खलु भगवति च व्यामुग्धः, शिष्येष्वपि व्यामुग्धः । शिष्येषु व्यामोहभूम्ना "श्रद्धालुभ्यः सर्वेभ्योऽपि सर्वेऽप्यर्था परीक्षामन्तरेण काममुपदेष्टव्याः" इत्याज्ञामुद्भावयत । अथ मणिसावर्ण्यमप्याचार्यसार्वभौमे संघटते; कथमिति चेत्; * आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनश्चर्वितं त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां माकृथाः । हे सद्रत्न! तवैतदेव कुशलं यद्वानरेणादरादन्तस्सारविलोकनव्यसनिना चूर्णीकृतं नाश्मना ॥ * इति कश्चन कविराह; रत्नस्य गौरवं यथा मर्कटादयो न जानन्ति तथा पामरा जना आचार्यगौरवं न ज्ञातुं प्रभवन्ति । तथाच, क्षुद्रजनदुरवगमप्रभावशालिन् भो इति संबोधितं भवति । अथ मार्गशीर्षावगाहनमित्यमुं विषयमधिकृत्य वक्तव्यं विपुलमवोचाम प्रथमगाथाव्याख्यायाम् । तदिहाप्यनुसन्धेयम् । मार्गेषु यच्छीर्षम्— तदेव मार्गशीर्षम्; उपायेषु शिरोभूतमिति यावत् । तत्रावगाहनमेव मार्गशीर्षावगाहनम्— आचार्ये अभिनिविष्टत्वम् । एतत् पूर्वाचार्यसंप्रदायसिद्धम् । * रामानुजांघ्रिशरणोऽस्मि कुलप्रदीपस्त्वासीत्स यामुनमुनेस्स च नाथवंश्यः । वंश्यः पराङ्कुशमुनेस्स च...... * इति कूरनाथसूक्तिः, * अन्धोऽनन्धग्रहणवशगो याति रङ्गेश! यद्वत् पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन । भुङ्क्ते भोगानविदितनृपस्सेवकस्यार्भकादिः त्वत्संप्राप्तौ प्रभवति तथा देशिकेन्द्रो (देशिको मे) दयालुः ॥ * इति वेदान्ताचार्यसूक्तिः । * पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा * इति कथयन् यामुनाचार्य एव मार्गदर्शी महर्षिः । एवं पूर्वाचार्यसंप्रदायसिद्धायाम् उपायमूर्धन्यभूतायामाचार्यनिष्ठायां वयमभिनिविष्टा इत्युक्तं भवति ।

अथ शङ्खभेर्यादिकाङ्क्षणाभिप्रायस्तावदित्थम्; भावप्रधाननिर्देशप्रक्रियया शङ्खत्वभेरीत्वादिकमपेक्ष्यत इति ग्राह्यम् । वयमेव शङ्खा भवेम, वयमेव भेर्यो भवेम, वयमेव मङ्गलाशासनकर्तारो भवेम, वयमेव दीपा भवेम, वयमेव ध्वजा भवेम, वयमेव वितानतां भजेम— इति प्रार्थनं सिध्यति । [शङ्खा भवेम] शुद्धसात्त्विका भवेम; अथवा सर्वज्ञा भवेम इति भावः; भगवान् ध्रुवं शङ्खस्पर्शेन सर्वज्ञं चकारेति हि श्रूयते । [भेर्यो भवेम] आचार्यस्याचार्यस्स्याचार्यस्य वैभवप्रख्यापनविषये वयं पटहा भवेमेति भावः । [मङ्गलाशासनकर्तारो भवेम] एतत्तु साम्प्रतं नास्तीति न; अस्त्येव; एतस्याविच्छेदः उत्तरोत्तरमभिवृद्धिश्च प्रार्थ्यत इति वेदितव्यम् । [दीपा भवेम] दीपो यथा स्वस्मै स्वयं प्रकाशते अन्यानपि प्रकाशयति तथा वयं स्वपरप्रकाशका भवेमेति भावः । [ध्वजा भवेम] * श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् * इति खल्वाचार्या उपश्लोक्यन्ते; एवं भगवद्रामानुजदर्शनविजयध्वजबिरुदभाजो भवेमेति प्रार्थना फलति । [वितानभावं भजेम] * दासस्सखा वाहनमासनं ध्वजो यस्ते 'वितानं' व्यजनं त्रयीमयः । उपस्थितं तेन पुरो गरुत्मता * [स्तोत्ररत्ने] इत्युक्तरीत्या सकलकैङ्कर्यधुरन्धरा भवेमेति प्रार्थितं भवति । वितानमित्येतदुपलक्षणं मन्तव्यम् । कृष्णो भगवान् अवतरणसमनन्तरमेव मथुरापुरीतो व्रजं नीतो वसुदेवेन; तदात्वे फणिराजो वितानतां गत इति शृणुमः; स एव कृष्णो यदा बृन्दावने विहरतिस्म, तदा तीक्ष्णातपबाधापरिहारार्थं वैनतेयः स्वकीये पक्षती वितानं चकारेति सैषा गोदादेवी

स्वकीये द्वितीयप्रबन्धे [ गोदासूक्ते ] अन्तिमदशकतृतीयगाथायामनुसन्धत्ते। तदेवं फणिराजपक्षिराजादिवद्वयमपि कैङ्कर्यविशेषनिरता भूयास्मेति प्रार्थितं भवति।

अथ वटदलशायिन्निति संबोधनमस्ति; अत्रेदमवगन्तव्यम्; * ब्रह्माण्डमण्डलमभूदुदरैकदेशे * इत्युक्तरीत्या स्वोदरे सकलां जगतीं बिभ्राणो भगवानिव सकला अपि विद्या अन्तर्बिभर्ति य आचार्यसार्वभौमः स हि वटदलशायी सत्यम्। अघटितघटनासामर्थ्यं भगवत इव आचार्यस्याप्यविशिष्टं बोध्यम्॥ ... ... ... ... ... २६

---

# २७. सप्तविंशी गाथा—कूडारैवेल्लुमुशीर

* सप्तविंशगाथापद्यम् *

वैरिव्रातावलेपक्षयकर भगवन् कृष्ण! गोविन्द संप्र-
त्यस्माभिर्लिप्स्यमानां बहुमतिमनघां शृण्वशेषैः प्रशस्याम्।
पाण्यंसश्रोत्रपादं महितविविधसद्भूषणैर्भूषयेथाः
क्षीरान्नं प्राशयेथा वसनमपि धरेमेति वक्त्री गतिः श्रीः॥ २७॥

विमुखजनवशीकरणविचक्षणगुणशालिन्! गोविन्द! भवत्सङ्कीर्तनात्मकं परमपुरुषार्थमुपलभ्य, अथ च भवत्सकाशादस्माभिर्लब्धव्यं पारितोषिकं चाद्य प्रार्थयामहे; कृत्स्नजगतीतलप्रशंसनार्हया समीच्या पद्धत्या पारितोषिकप्राप्तिरस्तु नः। करवलय-केयूर-कर्णभूषण-कर्णपुष्प-पादकटकप्रभृतीनि भूयांस्याभरणानि लभेमहि; पीताम्बराणि च परिदधीमहि। तदनु घृतसमृद्धिभरितं दुग्धान्नं कफोणिस्रुतियोग्यं भुञ्जीमहि। त्वया सह समवेतानामस्माकमेवं नाम परमशिशिरो भोगस्संपद्यताम्॥ ( इति मूलगाथाविवर्तः )

अधस्तनगाथायाम् पाञ्चजन्यसदृशशङ्खविशेषान् पटहान् मङ्गलाशासननिरतान् मङ्गलदीपं पताकां वितानं च दातुं प्रार्थितवतीनां गोपीनां हृदयं यथावदवजगाम भगवान् कृष्णः; इमाः खलु सत्यमनन्यप्रयोजनाः; इतः पूर्वं "त्वामेव काङ्क्षन्त्यस्समागता वयम्" इत्युक्तवतीनां वल्लवीनामासां मद्व्यतिरिक्तवस्तुलिप्सा मनागपि न स्यादेव; * वासुदेवस्सर्वमिति स महात्मा सुदुर्लभ इति मया सुदुर्लभत्वेन कथितेष्वधिकारिषु अग्रगण्या इमा मामेव सर्वस्वं मन्यमाना वस्त्वन्तराणि नैव कामयेरन्; पाञ्चजन्यसदृशशङ्खकाङ्क्षणापदेशेन पाञ्चजन्यपाणिं मामेव कामयन्ते; पटहकाङ्क्षणापदेशेन— घटनर्तनावसरेषु कटितटनिबद्धपटहस्य मम विभ्रमातिशयेषु विवशहृदया इमास्तादृशपटहविशिष्टं मामेव कामयन्ते; मङ्गलाशासननिरतानामभिलषणापदेशेन * स्नेहादस्थानरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैः * (श्रीगुणरत्नकोशे) इत्युक्तरीत्या नित्यमङ्गलाशासननिरतदिव्यहेतिसनाथं मामेव वाञ्छन्ति; मङ्गलदीपापेक्षणच्छलेन * श्रीरङ्गहर्म्यतलमङ्गलदीपरेखात्वेन प्रसिद्धदिव्यमहिषीसमेतं मामेव काङ्क्षन्ति; ध्वजापेक्षणापदेशेन * दासस्सखा वाहनमासनं ध्वजः ... उपस्थितं तेन पुरो गरुत्मता * इत्युक्तरीत्या ध्वजभूतवैनतेयाधिरूढं मामेव लिप्सन्ते; वितानवाञ्छामिषेण * निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः। शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरिते जनैः * ( स्तोत्ररत्ने ) इत्युक्तरीत्या यात्रासु वर्षातपवारणमुखेन वितानकार्यकारिफणिराजपरिवृतं मामेव प्रेप्सन्ति इति मनसि कलयन् भगवान् वासुदेवो गोपीरुद्दिश्य कथयति स्मैवम्—

अयि भोः परमभक्तिघनहृदयगोपाङ्गनाः! मदीयपाञ्चजन्यसदृशान् शङ्खानपेक्षध्वे; मत्सदृशः कश्चिदन्यः अस्ति चेन्मदीयपाञ्चजन्यसदृशोऽपि शङ्खस्स्यात्; किञ्च तादृशान् बहून् शङ्खानपेक्षध्वं; द्रक्ष्यामि तावत्; अथ च अतिबृहत्तमभेरीरपेक्षध्वे; गोपानां सकाशे प्रायस्सुलभमिदं वस्तु; नात्र कोऽपि विचारः। अथ मङ्गलाशासननिरतान् कामयध्वे; युष्मदपेक्षया अभ्यर्हिता मङ्गलाशासननिरता अन्ये जनाः के नाम सन्ति भुवि? स्वात्मन एवापेक्षणमिवैतत्। अथ च दीपध्वजवितानाख्यवस्तूनि काङ्क्षथ; नैतेषु दौर्लभ्यमस्ति नाम; अपेक्षितं वस्तुजातं प्रायस्सुलभमेवेति गृह्णन्तु भवत्यः; एतावद्भिर्वस्तुभिर्लब्धैः कच्चिद्भवति परिपूर्णतृप्तिर्युष्माकम्? निशीथे समुत्थाय प्रभाते समागत्य मधुरमधुराणि वचांसि व्याहृत्य काङ्क्षितवतीनां भवतीनां मनोरथपूरणं तु सत्यमवश्यकर्तव्यमेव मम; तत्तथा भविष्यति नाम; एतावता परिपूर्णतृप्तिर्भविष्यती वा भवतीनाम्? तदुच्यताम्— इति। अथ गोपीभिर्यदुक्तं तदनया गाथया निबध्यते— भगवन् कृष्ण! मार्गशीर्षावगाहनाख्यव्रतविशेषार्थमभिलषितानि खल्विमानि वस्तूनि; व्रतसमापने सति भवतस्सकाशादस्माभिरवाप्तव्या बहुमानविशेषा अवशिष्यन्ते खलु; तदधुना विज्ञापयामो निशमय तावत् इति विज्ञाप्य पुनः स्वाभिलषितविशेषान् विनिवेदयन्ति।

[विमुखजनवशीकरणविचक्षणगुणशालिन् गोविन्द!] इति कृष्णस्संबोध्यते प्रथमतः। लोके तावत् जनाः अभिमुखा विमुखा उदासीना इति त्रेधा विभागमर्हन्ति। अभिमुखास्तु सुहृदः; विमुखास्तु वैरिणः। अथ श्रूयताम्— वैरिण एव विमुखा भवन्तीति न नियमः; सुहृदोऽपि कारणवशाद्विमुखा भवन्ति भगवति। कथमिति चेत्; परमभक्तियुक्ता अपि * धिगशुचिमविनीतं निर्दयं मामलज्जं परमपुरुष! योऽहं योगिवर्याग्रगण्यैः। विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं तव परिजनभावं कामये कामवृत्तः॥' * (स्तोत्ररत्ने.) * गर्भजन्मजरामृतिक्लेशकर्मषडूर्मिगः। श्वेव देवषट्कृतं त्वां श्रियोऽहमकामये॥ * (श्रीरङ्गराजस्तवे.) इत्याद्युक्तप्रक्रियया नैच्यानुसन्धानभूम्ना भगवता सह संगतौ विमुखा भवन्ति केचित्। केचिच्च (प्रेयसीजनाः) प्रणयरोषभूम्ना * याहि याहि माधवा! गच्छ गच्छ केशवा! माऽत्र तिष्ठ माऽत्र तिष्ठ दूरतो व्रजाच्युता; देहि देहि कन्दुकम् याहि याहि दूरतो जारचोर माधवा! दूरतोऽपसर्प हे * इत्यपसारयन्तो वैमुख्यं प्रकाशयन्ति। मात्सर्यमलिनहृदया जना विमुखा इति तु सिद्धमेव। द्वेषं स्नेहं च विना उदासीनतया वर्तमाना अपि जना विमुखकोटावेव गणनीया भवन्ति। तथा च निर्दिष्टे संबोधने विमुखजनपदेन चतुर्विधा जना ग्रहीतुं शक्या इति सिध्यति। १. नैच्यानुसन्धानतो विमुखाः। २. प्रणयरोषवशाद्विमुखाः, ३. मात्सर्यहेतोर्विमुखाः, ४. औदासीन्यतो विमुखाश्चेति। एषां सर्वेषामपि वशीकरणे विचक्षणा गुणा विलसन्ति नाम भगवति। 'महतो मन्दैस्सह नीरन्ध्रेण संश्लेषः— शीलम्' इति निरुच्यमानसौशील्यगुणप्रदर्शनेन वशीकरोति नैच्यानुसन्धानतो विमुखान्; प्रणयरोषतो विमुखीः प्रेयसीस्तु शृङ्गारचेष्टितवैदग्ध्यभूम्ना विनयमहिम्ना च वशयति। मात्सर्यतो विमुखान् वैरिव्रातांस्तु शौर्यवीर्यपराक्रमगुणैः स्वाधीनयति। औदासीन्यतो विमुखानपि निरतिशयसौन्दर्यलावण्यसमुद्घाटनेन समाकर्षति। एवंविधान् अन्यत्र सामानाधिकरण्यमसहमानान् भगवत्येव केवलं सामानाधिकरण्येन नृत्यतो विलक्षणान् गुणान् हृदि निदधाना गोप्यः "विमुखजनवशीकरणविचक्षणगुणशालिन्!" इति संबोधयन्तिस्म। अथ * गोविन्देति संबोधनेन— गोपालजन्मनोऽपि तव ईदृशं विश्वतोमुखं वैदग्ध्यमतिमात्रविस्मयनीयमिति सूचितं भवति।

[भवत्संकीर्तनात्मकं परमपुरुषार्थमुपलभ्य] इति कथितेन— व्रतविशेषानुष्ठानमिति व्याजमात्रम्; गोपवृद्धानामनुमतिं प्राप्य प्रकाशमिव भवतस्संकीर्तनं यदकार्ष्म, यच्च कुर्मः, अयमेव हि नः परमपुरुषार्थलाभ इति व्यञ्जितं भवति। भगवन् गोविन्द! * नामसमेतं कृतसंकेतं गायति मुरलीं गोविन्दः * इत्युक्तरीत्या त्वमस्मदीयानि नामानि संकेतरूपेण मुरल्यां संयोज्य गायसि तदातदा; वयं तु तादृश-

वैचक्षण्यविरहिताः प्रत्याशमेव त्वदीयानि नामानि गायन्त्यः परमपुरुषार्थमलभामहि— इति च सूचितं भवति। [अथ च भवत्सकाशादस्माभिर्लब्धव्यं पारितोषिकं चात्र प्रार्थयामहे] इति कथयन्ति हिरण्यकशिपोः पुरे यथा हि भगवन्नाम न वक्तुं शक्यम्, तथा व्रजेऽप्यस्मिन् भवदीयं नाम हन्त वक्तुमशक्यमासीत् गोपवृद्धानां निर्बन्धतः; सत्यप्येवं यदस्माभिर्भवदीयनामावली उच्चैस्संकीर्तिता, एतदर्थं पारितोषिकमस्मभ्यं दातव्यमेव ननु भवता इति कथयन्तीव। दशरथाज्ञया सुमन्त्रेणाहूतो रामचन्द्रः प्रतस्थे पितुस्सकाशं गन्तुम्; तदात्वे सीताऽप्याद्वारमनुवव्राज मङ्गलान्यभिदध्युषी; तदा रामस्तस्यै किमपि पारितोषिकं प्रायच्छदिति गम्यते * पतिसम्मानिता सीता * इति तत्रत्यवचनव्यक्त्या; तादृशं पारितोषिकं गोप्योऽपि लिप्सन्ते। उपरि च विशिष्य वदन्ति [कृत्स्नजगतीतलप्रशंसनार्हया समीनया पद्धत्या पारितोषिकप्राप्तिरस्तु नः] इति। ख्यातिलाभपूजाविमुखाः खलु परमभक्तजनाः। पारमैकान्त्यसीम्नि स्थिता इमाः किमिति परकीयां प्रशंसां वाञ्छन्तीति शङ्का मा भूत्; अनन्यलभ्यमत्युत्तमं पुरुषार्थं प्रददातु भवानिति प्रार्थनायामेव तात्पर्यमिह वेदितव्यम्। परकर्तृकया श्लाघया न किमपि प्रयोजनमासाम्; ये जनाः श्लाघन्ते तेषामुज्जीवनं संपत्स्यते; तदेव ह्यासां धिया परमो लाभः। परेषामुज्जीवनमेव स्वोज्जीवनं मन्यमाना इमा एवं कथयन्तीति प्रतिपत्तव्यम्। कृष्णस्य पाण्डवानां च यदा सख्यं समजनि तदा कदाचित् कृष्णस्सत्यभामा च अर्जुनो द्रौपदी च विविक्तस्थलविशेषे शयानास्सन्ति; अन्तर्न कोऽपि प्रवेशयितव्य इति द्वारि द्वारपालक उपवेशितो वर्तते; तदात्वे संजयो द्वारान्तिकमुपाययौ; द्वारपालकस्तावदन्तः प्रविश्य 'भगवन्! सञ्जयस्समागतोऽस्ति; स कच्चिदन्तःप्रवेशनमर्हति? कथमाज्ञा?' इति व्यजिज्ञपत्। अथ भगवान् वासुदेवो व्याहरति— 'परमभक्तः सञ्जयः खलु समागतः; स तावदत्रत्यां स्थितिमभिवीक्ष्य हर्षप्रकर्षसमुत्फुल्लचेता भविता। न केवलमेतावदेव; पश्चात् बहिर्गत्वा, मत्सरिणां हृदयवेधो यथा भवेत्तथा प्रशंसावचांसि वर्षेदपि; तादृशोऽयमन्तःप्रवेशनमर्हत्येव; तत क्षिप्रं प्रवेश्यतामसौ' इति। अथ स चान्तः प्रविश्य चतुर्णां स्थितिमवेक्ष्य सन्तुष्य, पश्चात् बहिर्गत्वा धार्तराष्ट्रसकाशे कथयतिस्म— 'हा हन्त कृष्णार्जुनयोस्सख्यपरिपाटी कीदृशी नाम!; साक्षात्कृतवाहनम्; हतोऽसि त्वम्; कथं ते हन्त! जीवनं घटिष्यते? निरतिशयं हि पारितोषिकं प्रददाति पार्थाय कृष्णः! हाहन्त! कीदृशः प्रेमविशेषस्सः!' इति एवंविधानि प्रशंसावाक्यानि अस्मद्विषयेऽपि प्रादुर्भूयासुरिति हृदयमिहेति पूर्वाचार्या मधुरतरं व्याचक्षते।

श्रीरामचन्द्रराज्याभिषेकशुभावसरे सर्वेभ्योऽपि भक्तवर्गेभ्यः पारितोषिकप्रदानं प्रचलति; तस्मिन्प्रकरणे प्राचेतसो मुनिवरः प्राह— * अवमुच्यात्मनः कण्ठात् हारं जनकनन्दिनी। अवैक्षत हरीन् सर्वान् भर्तारं च मुहुर्मुहुः॥ तामिङ्गितज्ञस्संप्रेक्ष्य बभाषे जनकात्मजाम्। प्रदेहि सुभगे! हारं यस्य तुष्टाऽसि भामिनि। पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि नित्यशः। ददौ सा वायुपुत्राय तं हारमसितेक्षणा। हनूमांस्तेन हारेण शुशुभे वानरर्षभः। चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाऽचलः॥ * इति। एवं नाम दिव्यदम्पतिभ्यां हि पारितोषिकं प्रदत्तं प्रभञ्जनसुताय; अत एव हि तत् जगति भृशं प्रशस्यते; तथाविधं पारितोषिकं नीलादेव्या सह भवता प्रदातव्यमिति गोपीभिः प्रार्थितं भवति। अथ कृष्णो भगवान् प्राह— "अयि गोप्यः! तत्तथैव संपत्स्यते; युष्माभिरपेक्ष्यमाणं पारितोषिकमिह कीदृशमिति न जाने; निस्सङ्कोचं कथयत तावत्; यावच्छक्ति प्रदातुं प्रयतेय" इति। अथ कथयन्ति गोपललनाः—

[करवलय-केयूर-कर्णभूषण-कर्णपुष्प-पादकटकप्रभृतीनि भूयांस्याभरणानि लभेमहि.........] इत्यादि। * इयं सीता मम सुता। सहधर्मचरी तव। प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना॥ * इत्युक्तरीत्या पाणिग्रहणतो हि संबन्धाङ्कुरोऽस्माकम्; तादृश[illegible]भूतौ पाणी प्रथमतो भूषयितव्यौ; तदर्थं करवलयप्रार्थना क्रियते। पाणिग्रहणे जाते * अंसेनांसं प्रपीडितः * इत्युक्तियोग्यस्समाश्लेषो

नन्तरं वी । स चाप्यवयवो विभूषयितव्यः; तदर्थं केयूरप्रार्थना क्रियते । आश्लेषानन्तरं दम्पत्योर्मिथः कर्णमूले रहस्यवार्तालापो हि भविता; तदानीं भवत उद्देश्यभूतौ कर्णावप्यलङ्करणीयौ खलु; तदर्थं कर्णभूषणकर्णपुष्पप्रार्थना क्रियते । कर्णस्य अधोभागे धार्यमाणं वस्तु कर्णभूषणमित्युच्यते; उपरिभागे धार्यमाणं वस्तु कर्णपुष्पमित्युच्यते । एवं द्विविधं हि भूषणं कर्णालङ्कारतां नीयते जगति । तदुभयं च प्रार्थितमिह । अथ चोन्मस्तकभोगदशायां परमरसिकौ भर्ता सहचरीपादग्रहणमपि हि करोति; तौ पादावपि हि विभूषयितव्यौ; तदर्थं पादकटकप्रार्थना क्रियते; आदिशब्देन अवयवान्तराणामप्याभरणलिप्सा सूचिता भवति ।

अथ [ पीताम्बराणि च परिदधीमहि ] इति वसनालङ्कारलिप्सामपि प्रकाशयन्ति । आभरणधारणानन्तरमेव ललना वसनं धारयन्तीति स्त्रीणामाचारोऽप्यत्र सूचितो भवतीति रसिकालापः । अधस्तात् गोविन्देति संबोधनस्य कृतत्वात्, गोविन्दनामसंकीर्तनं कृतं भविष्यत्येव हि वस्त्रवृद्धिः । द्रौपदी गोविन्देति कथनेनैव हि वस्त्रवृद्धिमलभत । एवं वयमपि गोविन्दनामसंकीर्तनेन पीताम्बराणि लब्ध्वा परिदधीमहीत्याशंसन्ते । तदनु घृतसमृद्धिभरितं क्षीरान्नं कपोणिस्रुतियोग्यं भुञ्जीमहि ] इति क्षीरान्नभोजनवाञ्छामपि प्रतिपादयन्ति * वासुदेवस्सर्वमिति सुदृढाध्यवसायशालिनीनां भगवदेकभोगनिरतानां च वल्लवीनामासां भगवत्समविधे अन्नादनवाञ्छाप्रकाशनम् तत्रापि घृतसमृद्धिभरितक्षीरान्नभोजनवाञ्छाप्रकाशनं यद्यपि नोपपद्यते, तथाऽपि बहिः प्रकाश्यमानव्रतोपवासकर्शितानामासाम् एतत्काङ्क्षाप्रकाशनं लोकानुवर्तनार्थमिति नावद्यम् । वस्तुतः अन्तरङ्ग निगूढोऽर्थः अनुपदमेव प्रतिपादयिष्यते । 'कपोणिस्रुतियोग्यं भुञ्जीमहि' इत्युक्तेरभिप्रायोऽपि परस्ताद्वक्ष्यते । अन्ततः कथयन्ति— [ त्वया सह समवेतानामस्माकमेवं नाम परमशिशिरो भोगस्सम्पद्यताम् ] इति भोगे शिशिरत्वं नाम सर्वथा स्पृहणीयत्वमेव; भगवत्साहित्येन क्रियमाणेऽनुभवे शिशिरत्वं न खलु विवरणसापेक्षम् ॥

अथ ध्वन्यर्थविवरणम् ॥ विमुखजनवशीकरणविचक्षणगुणशालिन् ! इति संबोधनं भगवतीव आचार्येऽपि सुसाङ्गत्यमश्नुते । औदासीन्यभरितान् मात्सर्यभरितानपि विदुषः स्वकीयनिस्समाभ्यधिकवैदुष्यातिशयप्रदर्शनेन स्वाधीनयितुं समर्थो ह्याचार्यः । भगवान् रामानुजो हि * स्वबलादुद्धृतयादवप्रकाशः * ( यतिराजसप्तती ) इत्युक्तरीत्या भूतपूर्वं स्वोपाध्यायं यादवप्रकाशमपि स्वशिष्यकोटिं प्रावेशयत्; यज्ञमूर्तिप्रभृतीनन्यांश्च चिरं श्रदपश्चिमान् अन्तेवासिपदे न्यधत्त । श्रीपराशरभट्टार्योऽपि विश्वातिशायिस्वकीयवैदुष्यभूम्ना माधवाचार्यनामानं वेदान्तिनं स्वशिष्यमचकलत् । एवं बहव इतिहासा इहावगन्तव्याः । अथ * गोविन्देति संबोधनमप्याचार्ये सुसङ्गतम् । नानार्थकगोशब्द इह वागर्थको ग्राह्यः । 'गोदा' इत्यत्र गोशब्दार्थोऽपि वागेव हि । गाः विन्दतीति गोविन्दः— आळ्वाराचार्यदिव्यसूक्तिलाभप्रमुदित इत्यर्थः ।

अथ आचार्यसकाशादुपलब्धव्यं पारितोषिकं प्रार्थयन्ते । करवलयलिप्सा प्रकाशिता प्रथमतः; आचार्यसकाशे शिष्येण सर्वदा बद्धाञ्जलिपुटेनैव खलु वर्तितव्यम् । अञ्जलिबन्ध एव करभूषणम्; आचार्यकृपामन्तरा नैतद्भूषणं संसारिजनानां सुलभम् । अत एव तत्सकाशे एतत्प्रार्थना प्रवर्तते । अथ केयूरलिप्सा प्रकाश्यते; केयूरशब्देन भुजभूषणं लक्ष्यते । शंखचक्राङ्कनमेव हि भुजभूषणम् । * तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः । अमी परम संस्काराः * इति पारमैकान्त्यहेतुभूतपञ्चसंस्कारप्रथमगणितस्तापसंस्कार एव केयूरप्रार्थनापदेशेन काङ्क्ष्यते । अथ कर्णभूषणं कर्णपुष्पमिति कर्णाभरणद्वितयमपेक्ष्यते, भगवद्गुणानुभवप्रधानकशब्दराशीनाम् आचार्यवैभवप्रकाशकशब्दराशीनां च कर्णश्राव्यतासम्पादनं प्रार्थितं भवति । पादकटकप्रार्थनमन्ततोऽवतिष्ठते । जननपदवीजंघालानामस्मादृशानाम्

आचार्यसन्निधान एव सततमवतिष्ठमानत्वमेव हि संसारोच्छेदकं भविष्णु। यौ पादौ गुरुवरभवनद्वारे सततं तिष्ठतः, तावेव सत्यमाभरणभूषिताविव समुल्लसतः। आचार्यादिष्टकैङ्कर्यनिर्वर्तनार्थमेव सन्ततमितस्ततस्सञ्चरणशीलत्वमेव वा पादयोर्भूषणं भवतु; तादृशभूषणभूषितत्वमपेक्ष्यत इह। सदा तवैव वरिवस्यां विदध्यामेत्याशंसा प्रकाशितेति वेदितव्यम्।

अथ * पीताम्बराणि च परिदधीमहीति वाक्यमः काङ्क्षामनुच्यते। कटितटे वाससो धारणं मृगविहगादीनां प्राणिनां न भवति; अपि तु मनुष्याणामेव भवति। * ज्ञानेन हीनः पशुभिस्समानः * इत्युक्तरीत्या पशुप्रायाः स्थिता वयं वस्त्रधारणयोग्यतादिरहिता अवर्तामहि; आचार्यमणे! भवदीयकृपयैव पशुप्रायतां विसृज्य मनुष्यभावं प्राप्तवद्भिरस्माभिः "इदानीमेवास्माकं वस्त्रधारणं युज्यते" इत्येवमनुसन्धाय आनन्दशालिभिर्भवितव्यमिति कथितं भवति। * तदनु घृतसमृद्धिभरितं दुग्धान्नं कर्पोणिस्रुतियोग्यं भुञ्जीमहीति यदुच्यते, तत्रेदं बोध्यम्। उपनिषदि * सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति * इति भगवद्गुणानुभूतिः अशनत्वेनोच्यते। * अहमन्नादोऽहमन्नादोऽहमन्नादः * इति भगवदनुभवः अन्नादनमाम्नायते। * अन्नं ब्रह्मेति व्यजानात् * इति ब्रह्मैव साक्षादन्नमुच्यते चोपनिषदा। तथाच निरन्तरभगवदनुभवं करवामहीति कथितं भवति। दुग्धान्नमिति अन्ने उत्तमत्वकथनेन भगवदनुभवापेक्षयाऽप्युत्कृष्टो भागवतानुभवः स्फोर्यते। अथ च घृतसमृद्धिभरितमिति विशेषणेन अन्ने अत्यन्तमतिशयितत्वकथनेन आचार्यगुणानुभवसाहित्यं तत्र स्फोर्यते। एवं च भगवद्भागवताचार्यगुणानुभवैकसततसक्तचित्ताः स्यामेति प्रार्थना फलति। अत्र * कर्पोणिस्रुतियोग्यं भुञ्जीमहीति यदुच्यते तत्रेदं प्रतिपत्तव्यम्; लोके पिपासितो जनः प्रपायां पानीयदानार्थमधिकृतैर्जनैः पात्रतस्सिच्यमानं सलिलम् अञ्जलितः प्रतिगृह्य पिबतीति पश्यामः। इतोऽप्यत्यन्तं पिपासितो जनः पश्चात्तिष्ठति; स तु विलम्बमसहमानस्सन् पूर्वमञ्जलितः पिबतो जनस्य कर्पोणिद्वारा अणुशश्च कणशश्च परिस्रवत् पानीयं स्वयमञ्जलितः पिबति; एवं क्रमशः प्रचलति। इत्थं पारम्पर्येण क्रियमाणोऽनुभव एव * कर्पोणिस्रुतियोग्यमित्यनेन कथितो भवतीति वेदितव्यम्। अन्यत् शिष्टं स्पष्टम्॥ ... ... ... २८

## २८. अष्टाविंशी गाथा—करवैकल्पिन्शेत्रु

* अष्टाविंशीगाथापद्यम् *

नित्यं पृष्ठे गवां नश्चरणमशनमप्यस्ति कृत्यं मुकुन्द!
त्वामस्मिन् गोपवंशे जनिजुषमलभाम ह्यहो भाग्यमेतत्।
त्वत्सम्बन्धस्त्वहार्यो जडमतिभिरिहास्माभिरुक्ता लघूक्तीः
सोढ्वाऽभीष्टं प्रदेहीत्यभिहितमवदद्दिव्यगोदा मुदे नः॥ २८॥

सर्वथा परिपूर्ण भगवन् गोविन्द! वयं तावत् गवां पृष्ठतो गत्वा काननमासाद्य भोजनशीलाः, ज्ञानगन्धवैदेशिके गोकुले अस्मत्सजातीयतया त्वं यदजनिष्ठाः, एवंविधं परमसुकृतं हि वयं प्राप्तवत्यः। भो स्वामिन्! त्वया साकमस्माकं वर्तमानं बान्धवमिह त्वया चास्माभिश्च न विनाशयितुं शक्यम्। ज्ञानदरिद्राभिर्बालिशाभिरस्माभिः प्रेमवशात् यदसि त्वं लघिष्ठेन नाम्ना आहूतः; तत्र भोः! कोपं मा कुरु; प्रदेहि नः पुरुषार्थं कृपया॥

(इति मूलगाथाविवरणः)

अधस्तात् षड्विंशगाथायां मार्गशीर्षावगाहनं प्रस्तुत्य तदर्थान्युपकरणानि प्रार्थ्य, तदनन्तरगाथायां व्रतसमापनानन्तरमधिगन्तव्यान् बहुमानविशेषान् प्रार्थयामासुर्गोप्यः; उभयोरपि गाथयोरभिलषितानि वस्तूनि पुनःपुनर्मनसि कलयन् कृष्णः "ऐहिकपुरुषार्थमुपेक्ष्य आमुष्मिकं शाश्वतिकं पुरुषार्थमर्थयन्ते गोप्य इमाः" इति स्वयमध्यवस्यतिस्म । षड्विंशगाथायां शंखभेरीप्रभृतिवस्तुप्रार्थनं यदकारि, तत्र इहलोके प्राप्तव्यानां वस्तूनां प्रार्थनं नैव; अपितु श्रीवैकुण्ठे दिव्ये धाम्नि मुक्तभोगावली या कथिताऽस्ति तत्प्रार्थनमेव; मुक्तात्मसु दिव्यं धाम समुपस्थितेषु सत्सु तत्र भेरीगीतकाहलशंखाशीस्स्तुतिकोलाहला भवन्ति; दिव्याप्सरसो मङ्गलदीपहस्तास्सत्यस्समायान्ति । ध्वजाश्च नानाविधास्समुद्ध्रियन्ते; वितानच्छायायां नीयन्ते मुक्तपुरुषाः; एतदपेक्षाप्रकाशनमेव षड्विंशगाथायां स्थितम्; अथ च सप्तविंशगाथायाम् दिव्याभरणदिव्यपीताम्बरादिप्रार्थनं च मुक्तभोगावलीप्रार्थनमेव; श्रूयते ह्युपनिषदि— * तं पञ्चशतान्यप्सरसां प्रतिधावन्ति— शतं मालाहस्ताः, शतमञ्जनहस्ताः, शतं चूर्णहस्ताः; शतं वासोहस्ताः, शतं भूषणहस्ताः * इति । * तं ब्रह्मालङ्कारेणालङ्कुर्वन्ति * इति च । एवञ्च अप्राकृतभोगानेव लिप्समाना इमा गोपाङ्गना अन्यापदेशेन किमपि कथयन्तीति यथायथं गृह्णन् कृष्णः प्राह गोपीः प्रति— 'अयि भोः! युष्माकमन्तरङ्गाभिसन्धिमवगच्छाम्यहं यथावत्; युष्माकमधिकारपूर्तिरस्तिचेदहं तत्प्रदाने प्रभवामि; उपायविरहितानामुपेयसिद्धिः कथमिव भवित्री? सर्वमुक्तिप्रसङ्गपरिहारार्थं मया शास्त्रेषु उपायाः केचिदनुष्ठेयतया कथितास्सन्तीति युष्माभिरपि विदितं स्यान्ननु; कीदृशोपायानुष्ठानमस्ति युष्मास्विति जिज्ञासे' इति । तदाकर्ण्य गोप्यो यद्विज्ञापयन्तिस्म तदनया गाथया निबध्यते । वस्तुतः आकिञ्चन्यमनन्यगतित्वमेव परमपुरुषार्थप्राप्तावधिकारसम्पत्. ये हि जना उपायान्तरेषु परिक्लिश्यन्ते, तान् क्षिप्रं नानुगृह्णाति भगवान् । गोपीनामासां मुखादाकिञ्चन्यमनन्यगतित्वं च श्रोतुमेव कृष्णस्यापि महती समुत्कण्ठा; अकिञ्चना वयमिति कथयन्ति वा? अन्यत्किमपि कथयन्तिवेति परीक्षार्थमेव 'युष्माकमुपायानुष्ठानं कीदृशम्?' इति पप्रच्छ; गोप्यस्तु परीक्षायामस्यां न भङ्गमवाप्नुवन्ति लेशतोपि; वस्तुगत्या स्वात्मनि वर्तमानमाकिञ्चन्यमनन्यगतित्वं च विज्ञाप्य अपचारक्षामणमप्यनुतिष्ठन्ति गाथयाऽनया ।

कृष्ण संबोधयन्ति [ सर्वथा परिपूर्ण भगवन् गोविन्द! ] इति । ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्समाख्यषाड्गुण्यपरिपूर्णतैव हि सर्वथा परिपूर्णता । भगवन् त्वयि सर्वज्ञत्वसर्वशक्तित्वादिगुणगणपूर्णे विराजमाने सति का वदस्माकं न्यूनता । अस्मदीयास्सर्वविधा अपि न्यूनताः परिहर्तुमेव खलु भवान् सर्वथा परिपूर्णो विराजते; वयमपि यदि साधनानुष्ठानपरिपूर्णा भवेम, तर्हि भवदीया परिपूर्णता नैरर्थक्यमेव हि विन्देत-इत्युक्तं भवति । * गुणतुङ्गतया तव रङ्गपते! भृशनिम्नमिमं जनमुन्नमय । यदपेक्ष्यमपेक्षितुरस्य हि तत्परिपूरणमीशितुरीश्वरता ॥ * ( श्रीरङ्गराजस्तवोत्तरशतके ) इत्येषा श्रीपराशरभट्टार्यदिव्यसूक्तिरिहानुसन्धेया । सर्वथा परिपूर्णस्य भवतस्सर्वविधां परिपूर्तिं प्रार्थयितुमेव वयं सर्वथा विकलास्स्म इति कथनमेव गोपीनामिह हृदि स्थितम् । अथ कृष्णः कथयतिस्म—मम परिपूर्तिरास्तां नाम; युष्माकमुपायानुष्ठानसंपत् कीदृशीति खलु मम जिज्ञासा; सा कथ्यतां तावदिति । तत्र प्रतिवदन्ति [ वयं तावत् गवां पृष्ठतो गत्वा काननमासाद्य भोजनशीलाः ] इति । एतेन ज्ञानयोगकर्मयोगान्वयगन्धराहित्यं प्रोक्तं भवति । ज्ञानराहित्यसीमाभूमिभूतानां गवां पृष्ठे गच्छन्तीनामस्माकं ज्ञानप्रसक्तिः का नाम? वसिष्ठादीनां महर्षीणामनुवर्तनेन तेते ज्ञानं लभन्ते; वयं तु गवामनुवर्तने निरताः ज्ञानदरिद्रा इति किमु वक्तव्यम्? अथास्माकं प्राप्यभूमिश्च काननम्; तत्रास्माकं कृत्यं च भोजनमेव । एतेन कर्मानुष्ठानदारिद्र्यं च कथितं भवति । भोजनकाले प्राङ्मुखत्वादिनियमोऽपि नास्ति; उपविश्य भोक्तव्यमित्येतदपि न जानीमः । जात्याश्रयनिमित्तैरदुष्टमन्नं भोक्तव्यमित्यपि न विद्मः । हस्तलब्धं यत्किमपि वाऽन्नं स्वच्छन्दं भुञ्जानानामस्माकं कर्मनिष्ठा कीदृशीति ननु भवानेव विजानातु ।

इति गोपीभिरभिहितमाकर्णितवता कृष्णेन प्रत्युक्तम्; अयि भो गोपाङ्गनाः! अहमपि हि गवां पृष्ठतो गच्छामि; अहमपि हि काननमासादयामि; अहमपि खलु यत्किमपि लब्धमश्नामि नियतिरहितः; ममापि न्यूनतां कथयन्तीव भवत्यः इति। तत्र गोपीभिरुक्तम्— ॐ कश्चिन्नेजो विशेषेण प्रत्यवायो न विद्यते ॐ इति खलु महान्तो वदन्ति मुकुन्द!; ॐ सर्वथा परिपूर्णेति भवन्तं संबोधितवतीनामस्माकंवाचि त्वयि न्यूनतापत्तेः प्रसक्तिलेशोऽपि नास्ति भोः! केवलमस्मदीयामयोग्यतामभिदध्महे; मा स्म भावयः किञ्चिदन्यथा; सकलविधाऽप्यपूर्तिरस्मास्वेव वर्तते— इति। अथ कृष्णः पप्रच्छ,—' अयि गोप्यः! सुकृतलवलेशवर्जिता वयमिति हि युष्माभिरुच्यते; ईदृशीभ्यः कथमहं पुरुषार्थं प्रदातुं प्रभवेयम्? युष्मासु यत्किञ्चिदपि वा सुकृतमस्तिचेत् किमपि वितरेयम् ' इति। अथ गोप्य आहुः— भगवन् कृष्ण! कथमस्मासु सुकृतं नास्ति; अस्माभिः स्वप्रयत्नबलेनोपार्जितं सुकृतं किमपि नास्त्यस्मासु इत्येव कथितमस्माभिः; भवदीयया निर्हेतुककृपयाऽस्मासु समुत्पादितं बलवत्तरं सुकृतमस्त्येव भोः!, तदपि नास्तीति नास्माभिरुक्तमिति। अथ कृष्णोऽन्वयुङ्क्त; 'तादृशं सुकृतमहं न जाने; कथयत, किं तत्सुकृतम्?' इति। तत्रोत्तरमाचक्षते गोप्यः— [ज्ञानगन्धवैदेशिके गोकुले अस्मत्सजातीयतया त्वं यदजनिष्ठाः एवंविधं परमसुकृतं हि वयं प्राप्तवत्यः] इति। ॐ कृष्णं धर्मं सनातनम् ॐ इत्युक्तरीत्या साक्षादक्षय्यसुकृतभूतं त्वां गोकुलेऽस्मिन् लब्धवतीनामस्माकं भाग्यमप्रमेयं ननु। वेदान्तेषु ॐ सोऽन्वेष्टव्यः स विजिज्ञासितव्यः ॐ इति अन्वेष्टव्यत्वेन कथितो भवानेव खल्वस्मानन्विष्य समागत इह; किमेतत्सुकृतं सामान्यम्? ईदृगुत्तमोत्तमसुकृतशालिनीनामस्माकमनुग्रहो भवतः अवर्जनीय एव खलु-इति। एतदाकर्ण्य कृष्णो मनसि मन्यतेस्म— ज्ञानदरिद्रजातौ जातानामपि गोपीनामासाम् अध्यवसायभूमा बलवानहो!' महाज्ञाननिधीनां महतामपि धियस्सुदूरगं वचः खलु वदन्त्येताः; सत्यमेता एव परमानुग्रहपात्रतां नेतव्याः; अथाप्यासाममृतप्रायाणि वचनानि इतोऽपि कानिचन निशमयेयम्— इति। मत्वा चैवं गोपीः प्रति वदतिस्म;—' गोप्यः! व्रजेऽस्मिन्नहं जातोऽस्मीति सत्यमेतत्; नन्दस्य यशोदायाश्चाहं तनयस्सन् व्रजनिषि; नन्दात्मजो यशोदास्तनन्धय इति मां वदन्ति नाम; तावता युष्माकं किमायातम्?' इति। अथ गोप्य आहुः [त्वया साकमस्माकं वर्तमानं बान्धवमिह त्वया चास्माभिश्च न विनाशयितुं शक्यम्] इति। कृष्ण भोः; तवात्र जननेन नन्दस्य यशोदायाश्चैव भाग्यमिति किं मन्यसे? ॐ अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ॐ इत्येतद्वचनं किं त्वया न श्रुतम्? यशोदास्तनन्धय इति नन्दसूनुरिति च यथा त्वां वदन्ति, तथा गोपीजनवल्लभ इत्यपि व्यवहरन्त्येव खलु; किमेष व्यवहारस्तव कर्णकुहरं कदाऽपि न प्राविशत्? ॐ व्रजयोषिदपाङ्गवेधनीयं हि त्वां गुरुवराः कथयन्ति; मातापितृत्वसंबन्धतोऽपि भर्तृभार्याभावरूपस्संबन्ध एव ज्यायानिति भोः! किं न जानीषे? सकलवेदबीजभूते प्रणवे तावत् उकार एव मध्यस्थस्सन् महनीयतममर्थं बोधयति। स उकारो भर्तृभार्याभावरूपमुत्तमोत्तमं संबन्धमवगमयतीति निरूपयन्ति निपुणा आचार्यवर्याः। तादृशो हि गरीयान् संबन्धोऽस्ति नः। एष तावत्सम्बन्धस्सर्वशक्तेन त्वयाऽपि नोन्मोचयितुं शक्यः; घटप्रहारादिकर्मविशेषैः प्राकृतान् संबन्धान् क्षपयद्भिरस्मादृशैरपि जनैर्नोन्मोचयितुं शक्य इति विद्धि कृष्ण! इति।

तदिदं परमभोग्यं गोपीनां वचनमाकर्णितवान् वासुदेवः प्राह— अयि गोप्यः! गोपीजनवल्लभं मां कथयन्ति भवत्यः, तदिदमतिचारु; परमानन्दसंदोहकन्दमेवैतत्; परन्तु इदानीमेव खलु एतादृशं वचः कथयन्ति भवत्यः; असकृन्मां नारायणमेव हि कथितवत्यो भवत्यः; अनन्यसाधारणसम्बन्धविशेषविज्ञानसम्पन्नाभिर्भवतीभिः कथमिव सर्वसाधारणसम्बन्धप्रतिपादकनारायणशब्देन व्यवहृतोऽभूवमहम्? कथयत इति। एतदाकर्ण्य गोप्यो मनसि ह्रियं भियमनुतापं च दधुः; " गोपालगोविन्दादिदिव्यनामापेक्षया नारायणनाम सत्यं लघिष्ठमेव; परत्वे जुगुप्सां प्राप्य सौलभ्यसौशील्याद्यनर्घगुणप्रकाशनार्थमेव हि भुव्यवतीर्णं भगवता; त एव हि गुणा अत्र तमोगृहे प्रदीपवदतिमात्रमुद्द्योतन्ते, तादृश-

गुणप्रकाशकानि गोपालगोविन्ददामोदरादिनामान्येव ज्यायांसि भवितुमर्हन्ति ; नारायणनाम्नो लघीयस्त्वमेवेह ध्रुवम् ; तादृशेन नाम्नाऽस्माभिः कृतं व्यवहरणमयुक्तमेव : अपचरितमेवैतत् ; अपचारक्षामणमन्तरेण नान्या गतिः'' इति सुदृढं प्रतिपद्यमाना स्सत्यः कृष्णसविधे क्षमामर्थयन्ते [ ज्ञानदरिद्राभिर्बालिशाभिरस्माभिः प्रेमवशाद्यदसि त्वं लघिष्ठेन नाम्नाऽऽहूतः तत्र भोः कोपं मा कुरु ] इति ॥ अर्जुनो विश्वरूपदर्शनानन्तरम् * सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेमं मया प्रमादात्प्रणयेन वाऽपि ॥ यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथ वाऽप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम् ॥ * ( गी. ११ – ४१. ) इति क्षमाप्रार्थनां कृतवान् । स तु गोपालगोविन्दादिनामकथनमपचारं मन्यमानस्तदर्थं क्षमां प्रार्थयतेस्म । गोप्य इमास्तु नारायणनामकथनमपचारं मन्यमानास्तदर्थं क्षमां प्रार्थयन्ते । अर्जुनस्य धिया यानि नामानि लघीयांसि गृहीतानि तान्येव नामानि आसां धिया गरीयांसि गृह्यन्त इति तदिदं वैषम्यं रसिकहृदयैकवेद्यं भवितुमलम् । परत्वे बहुमानशालिनां जनानां नारायणनाम गुरुतरं भाति । सौलभ्ये सौशील्ये च बहुमानशालिनां गोपालगोविन्ददामोदरादिनामानि गुरुतराणि भान्ति । तत एव नारायणनामव्यवहरणमधिकृत्यात्र क्षमाप्रार्थनं युज्यतेतमाम् । मूले तावत् ''लघिष्ठेन नाम्ना'' इत्येतावदेवास्ति ; केचिद्रसिका अत्रैवं मन्यन्ते— भगवन् कृष्ण ! नारायणं त्वां लघुतमैर्गोपालदामोदरादिनामभिर्यद्ध्वयमाहूतवत्यस्स्मः तत्र क्षमामर्थयामहे इति गोप्यो वदन्तीति । लघीयानर्थस्सर्वथा विस्मर्तव्यो भगवद्गुणविद्भिः । ( मूले ) प्रेमवशादित्यस्य अज्ञानवशादित्येवार्थः । ज्ञानादितरत् प्रेमेति हि वस्तुस्थितिः । अन्ततः * स्वामिन् प्रदेहि नः पुरुषार्थमिति विज्ञप्तिमुपसंहरन्ति । काङ्क्ष्यमाणः कोऽयं पुरुषार्थ इति स्पष्टमुपरितनगाथायां भविष्यति ।

अथ ध्वन्यर्थविवरणम् ॥ आचार्यसार्वभौमसन्निधौ स्वकीयामयोग्यतां विज्ञाप्य शिष्याः क्षमाप्रार्थनपूर्वकं परमपुरुषार्थमर्थयन्ते । सर्वथा परिपूर्णेति संबोधनम् आचार्यस्य ज्ञानानुष्ठानपौष्कल्यं क्षमादयावात्सल्यादिगुणसमृद्धिं चाभिप्रेत्य । अथ [ वयं तावत् गवां पृष्ठतो गत्वा काननमासाद्य भोजनशीलाः ] इति यदुच्यते, तदिदं न केवलं वर्तमानकालिकपरिस्थितिकथनम्, किन्तु भविष्यत्कालिकपरिस्थितिप्रार्थनात्मकं च भवति । तथा हि— * ज्ञानेन हीनः पशुभिस्समान इत्युक्तरीत्या पशुप्रायाणामज्ञानामनुसरणेन विषयभोगैकनिरता वर्तामह इदानीम्-इति वर्तमानकालिकपरिस्थितिकथनम् । अथ भविष्यत्कालिकपरिस्थितिप्रार्थनप्रकारः कथमिति चेत् ; * गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दशेत्युक्तरीत्या चतुर्दशभुवनधारककामधेनुवत् चतुर्दशविद्याधारिणां महाप्राज्ञानामनुवर्तनेन बृहदारण्यकाद्यारण्यकभागेषु [ उपनिषत्सु ] सञ्चारशीला भूत्वा * सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेत्युक्तरीत्या भगवद्गुणभोगनिष्णाता भूयास्मेति ॥ ''काननमासाद्य'' इत्येतत् मूलस्थद्राविडपदरीत्या ''गानमासाद्य'' इत्यपि भवितुमर्हति ; * एतत्साम गायन्नास्ते * इत्याम्नातगानानिरता भवेमेति च हृदयम् ।

अथ [ ज्ञानगन्धवैदेशिके गोकुले अस्मत्सजातीयतया त्वं यदजनिष्ठाः एवंविधं परमसुकृतं हि वयं प्राप्तवत्यः ] इति ; नित्यमुक्तेष्वन्यतमः सूरिरेव हि अज्ञानतिमिरघने प्राकृतमण्डले पशुप्रायपामरजनपरिपूर्णे संसारिसजातीयतया प्रादुर्बभूव ; तदिदम् संसारिणामप्रमेयं खलु भागधेयम् इत्युक्तं भवति । अथ [ त्वया साकमस्माकं वर्तमानं बान्धवमित्यादि । ] तैत्तिरीयारण्यके ❀ नैवं विदुषाचार्यान्तेवासिनौ । अन्योऽन्यस्मै द्रुह्याताम् । यो द्रुह्यति । भ्रश्यते स्वर्गाल्लोकात् ❀ इत्याम्नातरीत्या आचार्यशिष्ययोर्बान्धवं परस्परमनवरतमभिरक्षणीयमित्युक्तं भवति । अथ च क्षमा प्रार्थ्यते । ❀ उपचारापदेशेन कृतानहरहर्मया । अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम ! * इति भगवत्सविधे यथा प्रार्थ्यते तदपेक्षयाऽप्यतिशयितं प्रार्थनीयमाचार्यसन्निधौ । आचार्यविषये खल्वपचारा अधिकतया संभवन्ति ; अतस्तत्सकाशे क्षमाप्रार्थनमत्यावश्यकमिति सूचितं भवति ॥ ... ... ... २८

---

# २९. एकोनत्रिंशी गाथा–शित्तम् शिरुकाले

※ एकोनत्रिंश गाथापद्यम् ※

प्रत्यूषेऽभ्यागताभिस्तव चरणयुगं सेवमानाभिराभिः
गोपीभिः कथ्यमानं निशमय भगवन् कृष्ण ! गोपालवंशे ।
जातस्त्वं नित्यसेवां वितर, सकलजन्मस्वपि स्याम नित्यं
युक्ता इत्यूचिरे ता इति कथितवती मे मनस्यस्तु गोदा ॥ २९ ॥

भगवन् गोविन्द ! प्रत्यूषेऽत्र समागत्य त्वां संसेव्य त्वदीयहैमपादारविन्दमङ्गलाशासनं यद्वयं कुर्मः तत्प्रयोजनमाकर्णय भोः गोचारणेन जीवतां कुले संजातस्त्वम् अस्मत्सकाशात् कैङ्कर्यमवश्यमेव स्वीकर्तुमर्हसि । पुरुषार्थलाभोऽस्माकम् अस्मिन्नेकस्मिन्नेव दिने न पर्यवसितो भवति । यावदात्मभावि सर्वेष्वपि च जन्मसु त्वया साकमविनाभूता वर्तमहि ; तवैव ऐकान्तिकनित्यकिङ्कर्यो भूयास्म । अन्यथाऽभिसन्धीन् नः प्रशमय ।

( इति मूलगाथाविवर्तः । )

अधस्तनगाथायाम् अन्यास्वपि च कासुचन गाथासु पुरुषार्थप्रदानं यन्नाम मुहुः प्रस्तुतम् तद्व्याख्यानमस्यां गाथायां चारुतरं संपद्यते । स्तोत्ररत्ने ※ भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिःशेषमनोरथान्तरः । कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितः ※ इति यत्पद्यरत्नं विराजते तत् अस्या एव गाथाया स्तात्पर्यसारप्रतिच्छन्दभूतमिति प्रतिपत्तव्यम् । दिव्यप्रबन्धस्यास्य श्रीपराशरभट्टार्यप्रणीतं मुखपद्यं यदस्ति ※ नीलातुङ्गस्तनगिरितटीत्यादिकम् तत्र ※ पारार्थ्यं स्वं श्रुतिशतशिरस्सिद्धमध्यापयन्तीति द्वितीयः पादस्तावदिमामेव गाथां हृदि कृत्वा निबद्ध इति निर्धेयम् । यावदात्मभावि सर्वदेशसर्वकालसर्वावस्थासु सहयोगेन नित्यकैङ्कर्यकरणमेवास्माभिरभिलष्यमाणः पुरुषार्थ इति विज्ञापयन्ति गोप्यः । एतदेव हि श्रुतिशतशिरस्सिद्धं पारार्थ्यम् । दिव्यप्रबन्धेऽस्मिन् प्रथमगाथायाम् " नारायण एव अस्माकमेव पुरुषार्थम् प्रदास्यति " इति प्रस्तुतः पुरुषार्थ इदानीं गाथायामस्यां स्पष्टीकृतः ।

इह च ※ हे गोविन्देति संबोधनेन, पूर्वगाथायां कृतं सामर्णं नारायणनामकीर्तनमधिकृत्यैवेति स्पष्टमवगम्यते । भवतः प्रधानप्रेमपात्रभूता गावः ; ता उद्दिश्य व्रजमागतस्य भवतो वयमपि परम्परया उद्देश्या अभूम ; साक्षात्प्रीतिपात्रत्वादपि परम्परया प्रीतिपात्रत्वमेव हि परमोद्देश्यं प्रतिपादयन्ति प्राज्ञपरिबृढाः । तथानाम सद्वारकप्रीतिभाजनभूतत्वेनाभ्यर्हिता वयमधुना यत् प्रार्थयामहे तदवश्यमेव फलेग्रहि कर्तव्यमिति संबोधनाभिप्रायः । अन्योऽपि कश्चिदभिप्रायः संबोधनस्य वर्णयितुं योग्यः ; नित्यकैङ्कर्यमेव ह्यस्माभिरधुना पुरुषार्थतयाऽभिलष्यते ; सर्वज्ञस्य भवतस्सकाशे एतदभिलाषोद्घाटनमनावश्यकमनुचितमेव च, तथाऽपि कुतः प्रार्थयामहे इति चेत् ; गवां चारणे व्यग्रतया व्रजमासाद्य स्वकीयं शेषित्वम् अस्मदीयं शेषत्वं च सवासनं विस्मृतवान् किल भवान् ; विस्मृतोद्बोधनमावश्यकं ननु—इति । अत एव श्रीभट्टार्यैः स्वकृते मुखपद्ये ※ सुप्तमुद्बोध्य कृष्णं पारार्थ्यं स्वम्...अध्यापयन्ती ※ इति चारुतरमन्वग्राहि । विस्मृतोद्बोधनमिति न ; इदम्प्रथमोद्बोधनमित्यपि तदभिप्रायः । लोके तावदुपाध्यायाः प्रत्यूषे स्वपन्तं विद्यार्थिगणमुद्बोध्य वेदमध्यापयन्तीति पश्यामः । अज्ञातज्ञापनमेव हि तत् । तद्वदेव गोपीजनोऽयमुपाध्यायस्थाने स्थित्वा नीलातुङ्गस्तनगिरितटे सुप्तं कृष्णमिममुद्बोध्य ' ' वेदार्थं शृणु भोः ! ' इति अज्ञातज्ञापनरूपमध्यापनमेव करोति । सर्वज्ञस्य भगवतःकथमिदमज्ञातं स्यात् ? कथं च वा अज्ञातज्ञापनं भवे-

देतत्? इति तु नाशङ्कनीयम् अनादिमायया सुप्ते संसारमण्डले सर्वे जना अहङ्कारममकारविमूढात्मानो भूत्वा भगवद्विमुखा एवासन्; स्वस्य शेषित्वमस्तीत्ययमंशो भगवताऽप्यत्यन्तं विस्मृतोऽभूत् । लोके विस्मरणं विविधम्— पादांशविस्मरणम् अर्धांशविस्मरणमित्यादिरूपेण । चिरपरिचितमपि शास्त्रं भूयिष्ठ-कालविप्रकर्षे सति आत्यन्तिकविस्मृतिगोचरीभूतं सत् अज्ञातादनतिरिक्तमेव भवतीति बहूनामनुभव-वेद्यमेतत्। एवं भगवानपि स्वसकाशमागत्य शेषत्वानुसन्धानं कुर्वतो जनस्य सुचिराददर्शनेन स्वकीयशेषित्वे ज्ञानानुदयापरपर्यायभूतविस्मरणमविन्दत; तस्मा अज्ञातज्ञापनमधुना क्रियत इति युक्तरूपमेवैतत्। अत एव * गोविन्द! आकर्णय भोः! इति लौकिकाध्यापकवदेव कथयन्ति गोप्यः।

मूलस्थमेकैकमपि पदमवधेयम्; [प्रत्यूषेऽत्र समागत्य त्वां संसेव्य] इति कथयन्तीनां गोपीनामयं हार्दो भावः—कृष्ण! त्वं खलु नक्तंदिवमस्मदीयानि सदनानि समागत्यास्मत्पादोपसंग्रहणपूर्वकं सामवादान् प्रेममधुरानाम्रेडयन्नासीः; तदात्वे त्वं शेषभावे स्थितवान्; वयं च शेषित्वाभिमानदूषिता आस्म; स्वरूप-हानिरेव खलु संपादिता तदाऽऽसीदस्माभिः; दैवादद्य हि स्वस्वरूपसत्ता लब्धाऽस्माभिः; अद्य प्रत्यूषे प्रबोधः, त्वत्सन्निधौसमागमनम् तव संसेवनं चेति यदिदं संघटितम् अहो भाग्यमहो भाग्यम्! इति। अथ [त्वदीयहैमपादारविन्दमङ्गलाशासनं यद्वयं कुर्मः] इति। भगवत्पादयोः सौवर्णकमलसादृश्यकथ-नेन उपायत्वमुपेयत्वं परमभोग्यत्वं च व्यज्यते। सुवर्णं हि केषाञ्चन जनानां धिया वस्त्वन्तरग्रहणसाधनं भवति; अन्येषां महतां धिया स्वयमाभरणादिरूपेण धार्यं वस्तु भवति। तथाच उपायत्वे उपेयत्वे च सुवर्णसाम्यं सुवचम्। अरविन्दं हि भोग्यतायां प्रसिद्धम्। एवंविधसमुत्कर्षशालिनोः पादयोर्मङ्गला-शासनात् किमन्यत् कर्तुं योग्यम्? तदेव वयं कुर्मः। तत उपरि यदुच्यते [तत्प्रयोजनमाकर्णय भोः] इति; तत्रेयं विचिकित्सा भवति; मङ्गलाशासनं हि स्वयंप्रयोजनम्; यत्किञ्चित् प्रयोजनान्तरमुद्दिश्य यदि मङ्गलाशासनं क्रियते, तन्नैव मङ्गलाशासनपदाभिलप्यं भवेत्; एवं स्थिते वस्तुतत्त्वे कथमिमाः कथयन्ति * तत्प्रयोजनमाकर्णयेति— इति। हन्त! लघीयसी सेयं विचिकित्सा। इदानीन्तनमङ्गला-शासनस्य निरन्तरमङ्गलाशासनमेव प्रयोजनमिति हि कथ्यते; नैतावता किञ्चित् क्षतम्। यावदात्मभावि निरन्तरमेवं मङ्गलाशासनसम्पदनुवर्ततामस्माकमिति एतावदेवाशास्महे इति विज्ञापयन्ति। सहयोगः, कैङ्कर्यम्, मङ्गलाशासनम् इति पर्यायपदान्येतानि परमैकान्तिनामिति मन्तव्यम्। [अस्मत्सकाशात् कैङ्कर्यमवश्यमेव स्वीकर्तुमर्हसि] इत्येतदेव वाक्यं गोपीजनकृतपरमपुरुषार्थप्रार्थनात्मकम्। 'कृपया स्वीकुरु भगवन् परमकारुणिक!' इति वक्तव्ये 'अवश्यमेव स्वीकर्तुमर्हसि कैङ्कर्यम्' इति निर्बन्धरूपेण कथनं स्वरूपोचितं भवितुं नार्हतीति यद्यपि केचन मन्येरन् तथाऽपि न किमप्यवद्यम्; गोपीषु वाल्लभ्याति-शयस्यापि विराजमानत्वात् तत्प्रयुक्तवाग्वैखरी न खलु वर्जनीया भवेत्। सीतादेव्यापि हि * प्रणयाच्चाभि-मानाच्च परिचिक्षेप राघवम् * इत्युक्तियोग्यं किमपि बभाषे। कैङ्कर्ये स्वात्मनां स्पृहातिशयमात्रमिह सूचितं भवतीति वेदितव्यम्। एवं निर्बन्धकरणे हेतुं च स्वयमेवाचक्षते हि गोप्यः— [गोचारणेन जीवतां कुले संजातस्त्वम्] इति। न वयं श्रीवैकुण्ठमागत्य प्रार्थयामहे; नापि दुग्धाब्धिमागत्य; न चापि वसिष्ठादिमहर्षिनियाम्यरामावतारे समागतास्स्मः। वामदक्षिणभुजभिदामप्यजानतां क्षुल्लकानां कुले हि अस्मादृशामपि नियाम्यस्सन्नवतीर्णस्त्वम्; एवमत्रावतरितुं को नु त्वां निर्बबन्ध? को वा समादिशत्? जघन्यजनानामपि नियाम्यो भूयासमिति महता कुतूहलेनैव खलु चोदित इहावतीर्णोऽसि; तद्वयं त्वां निर्बन्धुमपि प्रभवाम इति कथयन्तीव। [अस्मत्सकाशात्] इत्यनेन स्वकीयदेहं प्रदर्शयन्ति; पश्य हे कृष्ण! कैङ्कर्यरुचिरस्माकं देहेषु परिस्फुरति न वेति; कैङ्कर्याकरणेन परिशुष्कानस्मदीयानवयवानवे-क्षस्वेति।

विज्ञापनमेतदासामाकर्णितवान् कृष्णः 'पादसंवाहने व्यजनवीजने च रुचिरिव गोपीनामासाम्' इति मन्यमानो नीलादेवीं प्राह— देवि! अन्तर्गत्वा भूयांसि व्यजनानि समानीय एकैकस्या अपि हस्ते

देहोकैकं व्यजनम्; सर्वा अपि कामं संवीज्य तृप्यन्तु' इति। सा तु कथयामास-नाथ! नैष निदाघकालः; सुदुस्सहशीतबाधाप्रचुरो ह्ययं कालः; अधुना व्यजनानि मृग्यमाणान्यपि हन्त! न लभ्येरन्निति। अथ कृष्णः प्रोवाच गोपीः प्रति— 'अहं तु तल्पमधिशये; नीलया सह सर्वा यूयमुपविशत पादमूले; उपविश्य च यथारुचि पादसेवां कृत्वा यथागतं व्रजत' इति। तदेतन्निशम्य गोप्य आचक्षते [ हे गोविन्द! ] इति; एवंविधमराासिक्यं ते किं गोपालजातौ जननादजनि? इति पृच्छन्त्य इव गोविन्देति संबोधयन्ति। अस्मत्सकाशात् कैङ्कर्यं स्वीकर्तव्यमित्युक्तवतीनामस्माकं हृदयमवगन्तुमशक्तो ह्यभूस्त्वं गोपजातौ जननेन— इति जहसुः; अथ कृष्णोऽब्रवीत् युष्माभिरेवोच्यताम्, किं हृदयं युष्माकमिति। अथाहुर्गोप्यः— [ पुरुषार्थलाभोऽस्माकम् अस्मिन्नेकस्मिन्नेव दिने न पर्यवसितो भवति ] इति। अद्य परं व्यजनसेवां पादसंवाहनवरिवस्यां वा कृत्वा न वयं तृप्तिं विन्देमहीत्यर्थः। अथ कृष्णः पप्रच्छ— अद्य परं न; श्वोऽपि परश्वोऽपि; ततश्च पञ्चषदिनावधि सेवाहेवाकः किमस्ति युष्माकम? इति। तत्रोत्तरमाचक्षते गोप्यः— [ यावदात्मभावि ] इति। आत्मनस्सत्ता तु परमात्मनस्सत्तावधीति तत्त्वविदः। तथाच अविच्छिन्ननित्यकैङ्कर्यं प्रार्थयामह इत्युक्तं भवति। तदिदमाकर्ण्य कृष्णः प्राह— श्रीवैकुण्ठे नित्यमुक्तपरिषदि निविश्य नित्यकैङ्कर्यं कलयितुमभिरुचिरिव युष्माकम्; अस्तु नाम; तत् क्रमशो भविष्यति; श्रूयते हि * तस्य तावदेव चिरम्, यावन्न विमोक्ष्ये, अथ सम्पत्स्ये * इति। प्रारब्धकर्मावसाने प्राप्तव्यं पुरुषार्थविशेषमधिकृत्य सम्प्रति का नाम चिन्ता? इति। तत्रोत्तरमाहुर्गोप्यः— [ सर्वेष्वपि च जन्मसु त्वया साकमविनाभूता वर्तमहि ] इति। भगवन्! दुःखायतनं जन्म माभूदिति भवत्सकाशे बहवो भक्ताः प्रार्थयन्ते; भवानपि गायति * त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन! * इति; अस्माकं तु देहपरिग्रहे जुगुप्सा न मनागपि भवति भो; पुनः पुनर्भूयांसि जन्मानि घटन्तां नाम। श्रीवैकुण्ठे भोगो गरीयानिति नास्माकं मनीषा; "धीरसमीरे यमुनातीरे वसति वने वनमाली; गोपीपीनपयोधरमर्दननिर्दयकरयुगशाली; श्लिष्यति कामपि चुम्बति कामपि रमयति कामपि रामाम्, धीरसमीरे यमुनातीरे वसति वने वनमाली" इत्येवं मधुरतरगानयोग्यचरितास्सत्यो यदि तावदिहैव यमुनातटे विहर्तुं भाग्यं लभेमहि तर्हि जन्मनि को दोषः? * पत्युः प्रजानामैश्वर्यं पशूनां वा न कामये। अहं कदम्बो भूयासं कुन्दो वा यमुनातटे॥ * आसामहो चरणरेणुजुषामहं स्यां बृन्दावने किमपि गुल्मलतौषधीनाम्। या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्॥ * इति खलु तत् कामयन्ते; अपुनरावृत्तिलक्षणमोक्षपदवीं प्रेप्सन्तो जना नास्मासु केऽपि वर्तन्त-इति।

[ सर्वेष्वपि च जन्मसु ] इत्येतत् स्वात्मनां जन्मेव भगवतोऽपि जन्म विवक्षति; * देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी। विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनूम्॥ * (श्रीविष्णुपुराणे १-९-१४५.) इत्युक्तरीत्या, * अनुजनुरनुरूपरूपचेष्टेति श्रीरङ्गराजस्तवोक्तरीत्या च भगवतो जन्मसु जन्मसु स्वात्मभिरपि जनितव्यम् इति तावदासामभिलाषः। [ त्वया साकमविनाभूता वर्तमहि ] राघवत्वे यद्यपि सीता समजनि, तस्याश्चरितं विश्लेषमयं हि वीक्ष्यते; मा नाम तथा भूदस्माकम्; देहिनि देह इव, कारणे विकृतय इव, द्रव्ये जातिगुणकर्माणीव च पृथक्स्थित्युपलम्भयोग्यताविरहिता भूयास्मेत्याशंसनमासामिहावसेयम्। दशरथकौसल्याभरतादिवत् वसुदेवदेवक्यादिवच्च विश्लेषदुःखं न मात्रयाऽपि वयमनुभवितुमहमिः। अथ च कथयन्ति [ तवेव ऐकान्तिकनित्यकिङ्कर्यो भूयास्म ] इति कर्माधीनसेव्यान्तरनिवृत्तिव्यञ्जनार्थम् पुनरपि * तवैवेति कथनम्। एकस्मिन्नेव नियतत्वम् ऐकान्तिकत्वम्; दिव्यमहिषीपरिजनसनाथस्यापि भगवत एकत्वमनपायम्। * कुरुष्व मामनुचरम् * भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते॥ * तवानुभूतिसंभूतप्रीतिकारितदासताम्। देहि मे कृपया देव! न जाने गतिमन्यथा॥ सर्वावस्थोचिताशेषशेषतैकरतिस्तव। भवेयं पुण्डरीकाक्ष! त्वमेवैवं कुरुष्व माम्॥ * इत्यादिरीत्या कैङ्कर्यप्रार्थनायास्तन्मनोरथाभिवर्धनस्य च परमोद्देश्यत्वमिहानुसन्धेयम्।

इतश्चोपरि [ अन्याऽभिसन्धीन् नः प्रशमय ] इति प्रार्थनायाम् अत्युत्तुङ्गः साम्प्रदायिकार्थविशेषो गर्भितः ; तथा हि ; श्रीमदष्टाक्षरमहामन्त्रमध्यवर्तिना नमःपदेन * मन्त्रब्रह्मणि मध्यमेन नमसा पुंसः स्वरूपं गतिर्गम्यं शिक्षितमीक्षितेन पुरतः पश्चादपि स्थानतः * इत्युक्तश्लोकयुक्तप्रक्रियया स्वरूपशोधनम् उपायशोधनम् उपेयशोधनं च क्रियते ; स्वरूपशोधनमुपायशोधनं च आस्तां नाम ; उपेयशोधनं प्रकृते भृशमवधेयम् ; उपेयं नाम फलम् ; फलांशे शोधनं नाम किमिति चेदवधीयताम् । फलानुभवकाले आनन्दस्त्ववश्यमेव भवेत् ; तस्य चानन्दस्य स्वात्मनि न योग्यमनुसन्धानम् ; चन्द्रिकापवनपाटीरकुसुमादिकं परेषां भोगाय कल्पमानं सत परानेव प्रहर्षयति, न पुनर्मनागपि स्वयं प्रहृष्यति ; तथा चेतनेनापि स्वयं हर्षशालिना न भवितुं योग्यम् ; स्वकार्यनिष्पत्तौ सत्यां हि स्वेन संतुष्टेन भवितव्यम् ; परमात्मना हि स्वकीयं वस्तु महता प्रयासेन लब्धम् ; यस्य लाभोऽभूत्तेनैव हि संतुष्टेन भवितव्यम् ; अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ * इति श्रीरामायणश्लोकरत्नप्रकाशितश्चायमर्थः । भगवद्यामुनमुनीन्द्रोऽपि स्वकीये स्तोत्ररत्ने * कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितः * इत्यनुजग्राह ; अत्र ‘ अहं नित्यकिङ्करस्सन् कदा प्रहृष्येयम् ’ इति वक्तव्ये तथाऽनभिधाय “ भवन्तं कदा प्रहर्षयिष्यामि ” इत्यभिहितमवधेयम् । अत्र भाष्ये वेदान्तसूरिराह— “ [ प्रहर्षयिष्यामि ] त्वल्लाभभूतस्य मे त्वत्प्रहर्ष एव प्रधानं प्रयोजनमिति भावः ; एवम् स्वाधीनस्वार्थकर्तृत्वभोक्तृत्वभ्रमरहितकैङ्कर्यप्रार्थना कृता भवति ” इति । तथाच फलांशे स्वभोक्तृत्वधीप्रहाणमेव उपेयशोधनमिति निष्पन्नम् ; तदिदं द्वयाख्ये मंत्ररत्ने उत्तरखण्डचरमपदभूतेन नमसा निष्कृष्यत इति रहस्यविदः । एतदेवात्र प्रतिबोध्यते “ अन्यथाऽभिसन्धीन् नः प्रशमय ” इत्यनेन ।

ननु, चन्द्रिकाचन्दनपवनकुसुमादिदृष्टान्तप्रदर्शनेन साध्यमानोऽयमर्थश्चेतनेषु न संभवितुमर्हति ; अचेतनानां वस्तूनामानन्दभाक्त्वयोग्यताविरहात् आनन्दितृत्वं नोपपद्यते ; ज्ञानानन्दघनस्य चेतनस्य आनन्दितत्वं कथं नु न संभवेत् ? अवर्जनीयं हि तत्— इति चेदत्र श्रूयताम् । चेतनस्य सर्वथाऽप्यानन्दितृत्वं नेति न तावदुच्यते । * रसो वै सः ; रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति * इति मुक्तात्मन आनन्दवत्त्वं स्फुटमाम्नातमुपनिषदपि । स्वानुभवेन भगवन्तमानन्दानुभवशालिनमवलोक्य ‘ अल्पस्य मम लाभेन अवाप्तसमस्तकामस्य भगवत एतावान् महानन्दः खलु जातः ! ’ इत्यनुसन्दधानश्चेतनः भगवदनुभूयमानानन्दजनितमानन्दमनुभवत्येव ; एष एवानन्दस्तस्यावर्जनीयश्चेतनस्य ; एष स्वरूपविरोधी नोच्यते । यत्रयत्र चेतनस्यानन्दशालित्वमुच्यते नियमेन तत्रतत्र भगवदनुभूयमानानन्ददर्शनजन्यानन्दवत्स्वरूपमेव तदवगन्तव्यमिति रस्यं रहस्यम् । * कृतार्थोऽहं भविष्यामीत्यादिकतिपयवचनानां नयनमप्यनया दिशा सुगमम् ॥

अथ ध्वन्यर्थविवरणम् ॥ अन्तेवासी जनः स्वाचार्यमुपसंगम्य स्वां विज्ञप्तिमुपसंहरति । गोविन्देति संबोधनं भगवतीव गुरुवरेऽपि संघटत इति विवृतचरमेवैतत् ॥ * तावता कालेन अज्ञानतिमिरसान्द्रभाववशात् प्रबोधानुदयेन गुरुचरणसन्निधानमागन्तुमवकाशो न जघटे ; अधुनैवान्धं तमो विनष्टम् ; प्रबोधोन्मेषस्समजनि ; अथ इहागतास्स्मः । * तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवयेति गीतोक्तप्रकारेण तत्रभवन्तं सेवितवन्तः स्मः । अन्यत्र क्वचिदम्बुजयुग्मे हृद्यव्यामोहो नास्ति तावदस्माकम् ; सर्वविधोऽपि व्यामोहस्सत्यमस्माकं भवत्पादारविन्दद्वन्द्वे परम् । शीरारुमेदिराशर्तिरवडिहळ् वाळि * शेय्यतामरैत्ताळिणै वाळिये * इति भवत्पादारविन्दद्वन्द्वमङ्गळाशासनमेवास्माकं नित्यकृत्यम् । अज्ञानिनां संसारिणामस्मादृशां मध्ये समवतीर्णस्तत्रभवान् अवश्यमेवास्मदीयानि वचिवस्यनानि स्वीकर्तुमर्हति । विद्याग्रहणपर्यन्तमेव कैङ्कर्यानुष्ठानमिति, नदीनिस्तरणानन्तरं प्लवपरित्यागवत् परस्तात् कैङ्कर्यप्रहाणमिति च मास्काकं मतम् । * अत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम् * इति स्तोत्ररत्नानुगृहीतरीत्या

अत्र च परत्र च भवच्चरणैकशरणा वयम् । संसारिचेतनोज्जीवनार्थं यदायदा श्रीवैकुण्ठाद्भवानवतरिष्यति भगवन्नियोगतः, तदातदा वयमपि नियमेन * येनयेन धाता गच्छति तेनतेन सह गच्छतीतिन्यायेन भवदनुचरा भूयास्म ; सर्वथाऽपि भवद्विनाभाव एवास्माभिरभिलष्यते : तत्रभवति मनुष्यतुल्यताधियं भगवत्तुल्यताधियं च नः प्रणाश्य भगवतोऽप्यभ्यधिकत्वाधियं प्रतिष्ठापय परमकृपया— इति सप्रश्रमभ्यर्थ्य विज्ञापनामुपलेभिरे श्रीवचनभूषणदिव्यशास्त्रशिक्षितशिष्यलक्षणसंपन्ना इति सारनिष्कर्षः ॥ ... २९

---

# ३०. त्रिंशीगाथा— वङ्गक्कडल् कडैन्द

*** त्रिंशगाथापद्यम् ***

कृताम्भोराशिमन्थं सरसिजनिलयानायकं केशवं प्राक्
सुन्दर्यो गोपकन्यास्सविनयमुपसृत्याप्नुवन्ति स्म सिद्धिम् ।
इत्येतद्धन्विनव्यालयपति भगवद्भट्टनाथस्य गोदा
प्रोचे सद्द्राविडोक्त्या तदनिशमनुसन्धेयमानन्दपूर्त्यै ॥ ३० ॥

नौकापरीतम् ( अथ वा ) वीचिमालासंकुलम् पयोनिधिं मथितवन्तं माधवं केशवं भगवन्तं तुहिनकिरणसदृशवदनाः सकलाभरणसमलङ्कृता गोप्यः प्रणिपत्य पुरा पुरुषार्थमलभन्तेत्यमुं विषयमधिकृत्य, जगदाभरणभूत— श्रीधन्विनव्यपुराधीशस्य नलिनाक्षमालाविभूषितवक्षसश्च श्रीभट्टनाथमुनेः ( अभिमानपात्रभूतया ) गोदया कीर्तिता भागवतैर्वृन्दशोऽनुभाव्या द्राविडवाङ्मयीस्त्रिंशतमिमा गाथा अस्खालित्येन क्षितितल इह भावबन्धेन सह ये तावदधीयते ते पृथुतरशिखरिनिभद्विचतुर्भुजशालिनः पद्माक्षस्य सौम्यमुखस्य लक्ष्मीपतेर्दिव्यकरुणाम् अत्रामुत्र च समासाद्य ब्रह्मानन्दशालिनो विराजेरन् ॥ ( इति फलकीर्तनेन समापितोऽयं दिव्यप्रबन्धः । ) औपनिषदसकलार्थसंभृतस्सोऽयं दिव्यप्रबन्धः परिसमाप्तिमुपैति ।

अधस्तनगाथायाम्—भगवतः कृष्णस्य सकाशे गोप्यो नित्यनिरवद्यकैङ्कर्यमेव स्वाभिलषितपुरुषार्थत्वेन विज्ञापयामासुः । अथ भगवान् परमकारुणिकः ओमित्यभ्युपगतवानिति गाथयाऽनया व्यज्यते । कस्तत्र संदेहः ? भक्तजनपरतन्त्रो भगवान् अर्थितार्थपरिदानदीक्षितः खलु । गीतां समग्रां श्रुतवान् पार्थः * स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तवेति यथा कथयामास, तथा गोपिकागीतामिमां श्रुतवान् कृष्णोऽपि * करिष्ये वचनं वः इत्यनुक्त्वा किमन्यद्वक्ष्यति ? शिरःकम्पनेन मुखविकासप्रकाशनेन मन्दस्मितोद्गमनेन गभीरतरकण्ठनादप्रपञ्चनेन च तथाऽस्त्वित्यभ्युपगममाविश्चकार । ततश्च परमानन्दसंदोहकन्दलितस्वान्ता गोप्यः कृतकृत्या नित्यकैङ्कर्यनिरताः प्रमोदन्ते । स चायं विषयः कथमस्मादृशैरवगन्तुमर्हो भवेद्गोदादेवीदिव्यानुग्रहादृते । सैव गोदादेवी स्वकीयेन निरवग्रहेणानुग्रहेण गोपीचर्यानुकरणापदेशेन तमाविष्कृतवती । स एष दिव्यप्रबन्धः सकलार्थपुष्टिभूम्ना स्वाध्येतृजनान् लक्ष्मीनाथदिव्यकरुणापात्रभूतानाकलयितुं क्षम इति निरतिशयफलप्रदस्वरूपमप्रतिमवैभवं प्रबन्धस्यास्य प्रतिपाद्यते गाथयाऽनया ।

अथ गाथायामवतराम । गोप्यो गोविन्दं प्रणिपत्य पुरुषार्थमलभन्तेति तावद्वक्तव्यम्; न तथोक्तम्; अपितु 'पयोनिधिं मथितवन्तं भगवन्तं प्रणिपत्य पुरुषार्थमलभन्ते' ति कथ्यते; किमित्येवमुच्यत इति चेत् अवधेयम्; पुरा भगवान् अमरेभ्यः अमृतं प्रदित्सुरिव जलधिं ममन्थ; जलधिमथनस्य पारमार्थिकमुद्देश्यं तु कमलालाभ एव; यदाहुर्भट्टार्याः श्रीरङ्गराजस्तवे— * उन्मूल्याहर मन्दराद्रिमहिना तं संबधानामुना दोर्भिश्चाचलमालिकैश्च दधिनिर्माथं मथानाम्बुधिम् । श्रीरङ्गेश्वर! चन्द्रकौस्तुभसुधापूर्वं गृहाणेति ते कुर्वाणस्य फलेग्रहिर्हि कमलालाभेन सर्वः श्रमः * इति; तथाच तदात्वे कमलालाभेन भगवतो मुखारविन्दे यावान् हर्षप्रकर्षः परिस्फुरतिस्म तावान् ततोऽप्यधिकश्च स इदानीं कृष्णस्य मुखे विललास; तदनुसन्धानेन जलधिमथनवृत्तान्तोऽधुना प्रस्तूयते । अथ वा, प्रयोजनान्तरपराणां पामराणामप्यमराणां कृते स्वदिव्यमङ्गलविग्रहपरिक्लेशनरूपं परिश्रममनुभूय मनोरथसिद्धिसंपादको भगवान् अनन्यप्रयोजनानामासां गोपीनां मनोरथप्रपूरक इति किमु वक्तव्यम्? इत्याशयो वाऽत्र गम्यः । मथितस्य पयोनिधेर्विशेषणं यदस्ति मूले (द्राविडवाचि) तदुभयविधमनुवादं सहते— नौकापरीतम् इति, वीचिमालासंकुलम् इति च । वीचिमालासंकुलत्वे न किमपि चोद्यमवतरेत्; नौकापरीतत्वकथने तु—किं भगवत्कृतमथनकर्मीभूते कलशजलधावपि तरणिस्संचार आसीदिति केचिदाशङ्कन्ते; अत्रब्रूमः । नौकायन्त्रं नवीनतया समुत्पन्नमिति न मन्तव्यम्; * नावेव यान्तनुभये ह्वन्ते * इतितावद्वेदेऽप्यधीमहे । श्रीरामायणे वैदेहीवचनं च प्रथितम्— * पतिसंयोगसुलभं वयो दृष्ट्वा च मे पिता । चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥ * इति । अस्तु; क्षीराब्धौ तरणिर्नैवत्यभ्युपगच्छेम । तत्सद्भावाभ्युपगमेऽपि प्रकृते तत्सत्ताकथनं कस्मा उपयोगाय कल्पते? इति पृच्छा तु बलवती स्यात्; सत्यमेतदवश्यं प्रष्टव्यम् । उच्यते । द्राविडशास्त्रमर्यादा काचन वर्तते । प्रतिपाद्यमानानां विशेषणानां प्रकृतविशेष्ये सत्तानियमो नास्ति; विशेष्यजातौ सत्तामात्रमादाय विशेषणप्रयोगो द्राविडकवीनां समये वर्तते । गजेन्द्ररक्षाचरितमाचक्षाणो भूतयोगी (* तोडरेडुत्त माल्याने * इति) गजेन्द्रं शृङ्खलाबन्धयुक्तत्वविशेषणेन विशिनष्टि; वस्तुतः परमभक्ते गजराजे निगलबद्धत्वविरहेपि गजजातौ योग्यमिदं विशेषणमित्येतावतैव हेतुना भक्तगजेन्द्रे प्रयुज्यते । एवं भूयिष्ठमुदाहर्तव्यमस्ति । सैव प्रक्रियाऽत्र बोद्धव्या । समुद्रे तरणिसंबन्धो निरपाय इत्येतावदेवालं विशेषणतायै । द्राविडशास्त्रमर्यादानुसारेणैतदुक्तमस्माभिः; अथ पूर्वाचार्यसंप्रदायानुरोधेनोच्यते; इयमेव गोदादेवी स्वकीयद्वितीयदिव्यप्रबन्धे (गोदासूक्ते) पञ्चमदशके चतुर्थगाथायामाचष्टे "व्यसनार्णवान्तर्निमज्ज्य वैकुण्ठनाथाभिधानं पोतमलभमाना दूये" इति । एतेन भगवत एव तरणित्वमभिप्रेतम् । तथाच, भगवान् स्वाधिष्ठितमर्णवं स्वस्थानमित्यप्यविगणय्य भक्तजनप्रेमभूम्ना मथितवानित्युक्तं भवति ।

अथ गोप्यो विशेष्यन्ते [ तुहिनकिरणसदृशवदनाः सकलाभरणसमलंकृताः ] इति । इदमवधेयमिह; प्रबन्धेऽस्मिन् प्रथमगाथायाम् "सूर्यचन्द्रोपममुखशाली" इति भगवान् विशेषितोऽभूत्; चरमगाथायामस्यां चन्द्रोपममुखशालिन्यः कथ्यन्ते गोप्यः । सूर्योपममुखशालित्वं ललनासु न संभवितुमर्हतीति न तदुक्तिः । तदास्ताम् । उपनिषदि * तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति * इत्याम्नातत्वात् भगवान् भक्तेभ्यः स्वसाम्यं प्रददातीति लभ्यते । तदेवात्र सूचितं भवति । चन्द्रोपममुखशाली मुकुन्दः स्वसंसेविनीर्गोपीरपि चन्द्रोपममुखशालिनीः कृतवानिति व्यञ्जनेन परमसाम्यश्रुतिलक्ष्यतां प्रापुर्गोपाङ्गना इति लम्भितं भवति । अथ * सकलाभरणसंभृता इति द्वितीयविशेषणम् अधस्तात्सप्तविंशगाथायाम् आभरणलिप्सां विज्ञापितवतीभिर्वल्लवीभिः यथाप्रार्थनमाभरणालंक्रिया समुपलब्धेति सूचनाय । एतावता गोपीनां कृतकृत्यत्वं फलेग्रहिमनोरथत्वं च कथितमासीत् । अथ इमं विषयमधिकृत्य प्रबन्धं प्रणीतवती गोदादेवीति कथ्यते वेदे आप्त्यतिशयद्योतनार्थम् * स होवाच व्यासः पाराशर्यः * यद्वै किञ्च मनुरवदत्तद्भेषजम् * इत्येवमेवं कतिपये महर्षयः प्रस्तूयन्ते; एवमेव दिव्यप्रबन्धेष्वपि परिग्रहातिशयसिद्धये आप्तप्रणीतत्वद्योतनार्थमेव केचन दिव्यसूरयः स्वनामोट्टङ्कनं कुर्वन्ति । गोदादेव्यपि तथाऽत्र ।

सीतादेवी यथा जनकचक्रवर्तिना पुत्रीत्वेनाभिमताऽभूत्तथा सेयं गोदादेव्यपि श्रीविष्णुचित्ताख्येन भट्टनाथमुनीन्द्रेण दुहितृत्वेन स्वीकृताऽभूदिति प्रोक्तचरमेतत्। स मुनीन्द्रस्तु गोदामिमां पुत्रीत्वेनाभिमेने; गोदा तु तं मुनिवरम् आचार्यपदव्यामेव निवेशितवतीति अस्या एव सूक्तिभिरवधार्यते ! तस्यैव महाचार्यस्य सम्बन्धभूम्ना भगवत्कृपापात्रता स्वस्य समजनीत्यध्यवसायगरिम्णा सेयं गोदा स्वनामनिर्देशस्थलेषु नियमेन (स्वस्य पितरमाचार्यं च) तमपि मुनीन्द्रं प्रस्तौति। तस्य पुत्रीति स्वात्मानं न निर्दिशति; अपि तु तत्सम्बन्धशालिनीत्येतावदेव व्याहरति; अत्रापि तथैव। "भट्टनाथमुनेर्गोदा—विष्णुचित्तमुनेर्गोदा" इत्येव नियतं निर्दिशति स्वात्मानम्। सम्बन्धसामान्ये हि षष्ठी; प्रकृते विवक्षितस्सम्बन्धस्तावदाचार्यशिष्यभाव एवेति स्वयमेव तत्रतत्र व्यञ्जितवती। अत एव ह्यस्याः प्रबन्धेऽस्मिन् आचार्यप्रभावस्यैव प्राधान्यं ध्वन्यर्थप्रणाल्या विशदीकृतमस्माभिः।

आचार्यभूतस्स भट्टनाथमुनीन्द्रो विशेषणद्वितयेन विशेष्यते; जगदाभरणभूत श्रीधन्विनव्यपुराधीशत्वं प्रथमविशेषणम्। श्रीविल्लिपुत्तूरिति द्राविडभाषानामधेयम् संस्कृते श्रीधन्विनव्यपुरमिति व्यवह्रियते। तदेतत् क्षेत्ररत्नं जगदाभरणभूतमिति यदुच्यते तत्तथ्यमिततराम्। लोके केचन दिव्यदेशा भगवद्वैभवेन भासेरन्; अपरे केचन लक्ष्मीवैभवेन; इतरे केचन आचार्यवैभवेन। भगवान् लक्ष्मीराचार्य इति त्रयाणामपि समरूपेण वैभवेन भासमानो दिव्यदेशः प्रकृतादिव्यदेशादन्यो न कोऽपि सुवचः। अत्र हि भगवतो वटपत्रशायिनो वैभवमप्रमेयम्। लक्ष्म्यंशभूताया गोदादेव्या महिमा सुमहान्। आचार्यशेखरस्य भट्टनाथयोगिवरस्य अवतारस्थलत्वप्रयुक्तः प्रभावातिशयश्च प्रकृष्टः। एवंविधविलक्षणवैभवनिधेरस्य दिव्यदेशस्य जगदाभरणत्वरूपविशेषणमेव युक्तरूपम्। मुनीन्द्रोऽसौ क्षेत्रस्यास्य कथमधीश इति चेत्; अत्रत्यानां सर्वेषामपि श्रीवैष्णवानां द्विजन्मनां च नान्यः कोऽपि निर्वाहक इत्यतः। अथ द्वितीयं विशेषणम् * नलिनाक्षमालाविभूषितवक्षस इति। * ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः। ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति॥ * इत्युक्तप्रकारेण प्रसिद्धैः श्रीवैष्णवलाञ्छनविशेषैस्सर्वैरपि विभूषितदिव्यगात्रा ह्ययं सूरिवरः। नलिनाक्षमालायाः कथनम् तुलसीकाष्ठस्रजोऽप्युपलक्षणं मन्तव्यम्। श्रीवरवरमुनिवर्यदिनचर्यायामपि * अम्भोजबीजमालाभिरभिजातभुजान्तरम् * इत्युपवर्णितमिहानुसन्धेयम्।

एवंविधमहामहिमशालिनो भट्टनाथमुनीन्द्रस्य अभिमानपात्रभूतया गोदादेव्या कीर्तितोऽयं दिव्यप्रबन्धो विशेषणत्रयेण विशेष्यते— १. भागवतैः संघशोऽनुभाव्यत्वम्; २. द्राविडवाङ्मयत्वम्; ३. पुष्पमालारूपत्वम्— इति। यत्र भागवताः संघीभवन्ति तत्र त गोदाप्रबन्धमेव समाद्रियन्ते; यत्र गोदाप्रबन्धस्समाद्रियते तत्र भागवताः क्षणमात्रे संघशस्संमिलन्ति; इति तावद्विवक्षितम्। इतरेषां केषाञ्चन प्रबन्धानामनुभवे उपक्रान्ते संघशो निषण्णा अपि क्रमशो विरलविरला भवेयुः; गोदाप्रबन्धमनुभोक्तुं द्वित्रा निषण्णा अपि क्रमेण ते सहस्राधिका भवेयुः; गोष्ठी तथा नाम विवर्धेत; इममंशं पुरस्तादेव प्रतीचा हृदयेन साक्षात्कृतवती गोदादेवी सत्यमाह * भागवतैस्संघशोऽनुभाव्या इति। अथ द्वितीयं विशेषणम् द्राविडवाङ्मयत्वम्। संस्कृतभाषया ये ग्रन्थं लिखन्ति, ते 'अस्माभिरयं ग्रन्थः संस्कृतभाषया लिखित' इति न तावद्विलिखन्ति; भाषा तु स्वत एव स्पष्टीभवतीति नास्त्यावश्यकता तत्सूचनस्य। अथाप्यत्र द्राविडभाषामयत्वनिर्देशः कुतः कृत इति चेत् श्रूयताम्; भारतयुद्धकाले पार्थः शकुनिं प्रति कथयति * न द्यूतमेतत्कितव! क्रीडनं निशितैश्शरैः * इति; किमेतद्वक्तव्यं वचः? किमिदमज्ञातज्ञापनम्। न। सम्यग्विज्ञातस्यापि समुद्बोधनं फलविशेषं प्रजनयत्येव। द्राविडभाषामयोऽयं दिव्यप्रबन्ध इति सर्वविज्ञातस्याप्यंशस्य समुद्धङ्कनम्— माधुर्यातिशयप्रतिबोधनार्थमिति प्रतिपत्तव्यम्। वस्तुतो द्राविडभाषाया अतिमात्रमाधुर्यमनुभवरसिकहृदयैकवेद्यमित्यलम्।

अथ च दिव्यप्रबन्धस्यास्य पुष्पमालारूपत्वं मूले प्रोक्तम् । मालिका यथा भगवता भागवतैश्च शिरसा धार्यते तथा स एष प्रबन्धोऽप्यवतंसपदं निधातव्य इति सूचितं भवति । गोदादेवी पुष्पमालां सृष्ट्वा भगवते प्रादात्, पद्यमालां सृष्ट्वा भागवतेभ्यः प्रादात् । पुष्पमालां भगवान् शिरसाऽधारयत । पद्यमालां भागवताः शिरसा धारयन्ति । न केवलं शिरसा ; मनसा, वचसा च ।

अथ [ त्रिंशदिमा गाथा अस्खालित्येन क्षितितल इह भावबन्धेन सह ये तावदधीयते ] इति ॥ अष्टाक्षरादिवत् अतिसंक्षिप्तं न ; गीतादिवदतिविस्तृतमपि न ; सकलसारार्थभरितत्रिंशद्गाथात्मना निबद्धोऽयं दिव्यप्रबन्ध इति सुग्रहत्वं द्योत्यते । अत्र नैकाऽपि गाथा त्यक्तव्या भवति । अनर्घत्रिंशद्रत्नखचिते हारे एकरत्नशून्ये सत्यपि तस्य विशोभितत्वं यथा भवति, तथा त्रिंशद्गाथात्मकेऽस्मिन् दिव्यप्रबन्धे एकस्याः गाथायाः परित्यक्तायामपि तदर्थजिज्ञासुना सता महती हानिर्भवेदिति । तदिदं गोदादेवी स्वयमेव विदित्वा त्रिंशदपि गाथा अस्खालित्येनानुसन्धातव्या इति समादिशतीव । अस्खालित्यं नाम — एकस्या अपि गाथाया अपरित्यजनमिव, वर्णपदवाक्यादिभ्रंशराहित्यं च । शब्दोच्चारणकाले संभावितानां स्खालित्यानां सर्वथा वर्जनमनुशास्ति गोदादेवीति प्रतिपद्य भृशमवहितभावितव्यं भक्तैः । * इह क्षितितल इति कथनेन श्रीवैकुण्ठेऽपि दिव्यसूरीणामिमां गानमस्तीति सूचितं भवति । शुष्कहृदयैर्न वक्तव्यमिति स्फोरणाय * भावबन्धेन सहेति कथ्यते । गोपीनां भावबन्धो यथा गोदाया समजनि, तथा भक्तानामपि स भूयादित्याशंसा गम्यते । * ये तावदिति कथनेन— श्रद्धालवस्सर्वेऽपि जनिधर्माण एतत्कथनाधिकारिण इति द्योतितं भवति । अथ तेषां यद्भविष्यति श्रेयः तदुदीर्यते [ ते पृथुतरशिखरिनिभद्वियुगभुजशालिन इत्यादिना । ] दृष्टादृष्टविषयेषु सर्वत्र भगवत्करुणापात्रभूतास्सन्तो महानन्दभागिनस्स्युस्ते इति यावत् ॥ अथ, एतद्दिव्यप्रबन्धाध्येतृषु भक्तेषु कृपां प्रदर्शयिष्यन् भगवान्—चतुर्भुज इति, सरसिजाक्ष इति, लक्ष्मीपतिरिति च विशेष्यते ॥ चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः * इत्युक्तरीत्या यथाधिकारं चतुर्विधपुरुषार्थप्रदानोत्सुको भवेदिति द्योतनाय चतुर्भुजत्वोक्तिः । कटाक्षवीक्षणेन तान् पुनीयादिति द्योतनाय पद्माक्षत्वोक्तिः । उत्तरोत्तरमनवधिकातिशयश्रेयः प्रापणोत्कण्ठितत्वद्योतनाय सौम्यमुखत्वोक्तिः । निग्रहहेतुसत्त्वेऽपि अनुग्रहैकसक्तचित्तत्वद्योतनाय लक्ष्मीपतित्वोक्तिरिति सर्वं समञ्जसम् ॥

गाथायामस्यां ध्वन्यर्थविवरणावश्यकत्वाभिप्रायविरहेऽपि उपक्रमे कतिपयवाक्यानां तदावश्यकता वर्तते । भगवतस्सन्निधौ गोप्यः प्रणिपत्य पुरुषार्थसिद्धिमलभन्तेत्यन्यापदेशः । आचार्यसन्निधावन्तेवासिनः प्रणिपत्य स्वसमीहितसिद्धिमलभन्तेति तु स्वापदेशः । भगवान् यथा जलधिमथनमकार्षीत्तथा गुरुवरोऽपि । कथमिति चेत् ; * मतिमन्थानमाविध्य येनासौ श्रुतिसागरात् * इत्युक्तप्रक्रियया सोपबृंहणोभयवेदान्तसागरमथनप्रवीणो ह्याचार्यवर्यः । भगवांस्तु जलधिमथनेनोद्धृतममृताभासं प्रयोजनान्तरपरेभ्यस्सुरेभ्यः सकृत् प्रादात् । आचार्यस्तु उभयवेदान्तसिन्धुमथनसमुद्धृतं वस्तुतोऽमृतत्वप्रापकं दिव्यार्थामृतम् अनन्यप्रयोजनेभ्यः परमभक्तेभ्यो भूसुरेभ्य आचन्द्रार्कमसकृत्प्रयच्छति । जलधिमन्थनेन श्रियं लेभे भगवान् ; आचार्यस्तु श्रीवैष्णवश्रियम् । एवमादयो विशेषा उन्नेयाः । माधवमिति संस्कृतपदस्य मूलभूतं द्राविडपदं तु ( मूलस्थम् ) महातापसमित्यप्यनुवादं सहते । * तपस्स्वाध्यायनिरतं तपस्वीत्यादावनुसन्धीयमाना अर्थविशेषा अत्राप्यनुसन्धानार्हा इति दिक् ॥ केशिनामकवाजिवधकर्तृत्वेन भगवान् केशवः प्रथितः ;

आचार्योऽपि इन्द्रियरूपहयदौष्ट्यहननकर्तृत्वेन केशवप्रथां प्राप्तुमर्ह इति वेदितव्यम्। अथ गोपीस्थानीय-शिष्यविषये चन्द्राननत्वं सकलाभरणसमलंकृतत्वं च सुपपन्नम्। आचार्योपदिष्टशिशिरार्थपुञ्जलाभेन तत्प्रवचनेन च शिशिरमुखो हि शिष्यः। शमदमादिभिस्सकलैरात्मालङ्कारैरलंकृतश्चेति॥ एवम्भूतत्वमेव शिष्यस्य लब्धपुरुषार्थत्वमिति च ध्येयम्॥

अथ दिव्यप्रबन्धेऽस्मिन्नुदीरिता अर्था गाथाक्रमेण संगृह्यन्ते;— १. कालमधिकारिणम कार्यनिर्वाहकक्रृष्णं च संश्लाघ्य व्रतमुपाक्रंसत गोप्य इति प्रथमगाथायामुक्तम्। २. प्रकृतव्रताधिकारिभिः अकृत्यकरणाकृत्याकरणयोर्वर्जने भृशमवहितैर्भवितव्यमिति प्रत्यपादि द्वितीयगाथायाम्। ३. प्रकृतव्रतानुष्ठानतः सम्पत्स्यमानं फलम् असंकुचितं सर्वजनपदव्यापि भविष्यतीति कथितं तृतीयगाथायाम्। ४. लोकक्षेमनिदानभूतपर्जन्यदेवाज्ञापनमुपनिबद्धं चतुर्थगाथायाम्। ५. * श्रेयांसि बहुविघ्नानि भवन्ति महतामपीति वचनानुसन्धानेन प्रत्यूहशङ्कामुद्भावितवतां जनानां समाहितिरकारि पञ्चमगाथायाम्। ६—१५. * एकस्स्वादु न भुञ्जीतेत्यध्यवसायेन सर्वाभिर्वनिताभिस्सह मिलित्वा भगवदनुभवं कर्तुमुत्कण्ठया अन्वरशयानानामपि गोपीनामुद्बोधनमुपनिबद्धम् षष्ठादिपञ्चदशान्ताभिर्दशभिर्गाथाभिः। १६. संमिलितास्सर्वा अपि गोपाङ्गना नन्दगोपभवनद्वारमुपेत्य तत्र द्वारपालकसकाशे कवाटोद्घाटनप्रार्थनां प्रचक्रुरिति प्राम्ताविषोडश्यां गाथायाम्। १७. नन्दगोप-यशोदा-कृष्ण-बलरामाणां प्रतिबोधनं न्यबध्यत सप्तदश्यां गाथायाम्। १८. कृष्णावतारे प्रधानमहिषीपदवीमलङ्कुर्वाणाया नीलादेव्याः प्रतिबोधनं पर्यकल्प्यत गाथायामष्टादश्याम्। १९—२१. नीलादेव्या नीलावल्लभस्य च पुनःपुनरुद्बोधनं प्राकल्पम एकोनविंशाद्येकविंशान्तगाथात्रये। २२. गोपीभिः स्वकीयमनन्यार्हत्वम् कृष्णकटाक्षवीक्षैकधार्यत्वं च विज्ञापितं द्वाविंशगाथायाम्। २३. शयनकालिकमाभिरूप्यमनुभूतवतीभिः अथ च गमनकालिकमुपवेशनकालिकं चाभिरूप्यमनुभोक्तुं कामयमानाभिश्च गोपीभिः कृष्णं प्रति तल्पादुत्थाय सिंहासनान्तिकमागत्य तस्मिन्नुपवेशनमभ्यर्थितम् त्रयोविंशगाथायाम्। २४. यथाभ्यर्थनं सिंहासनमध्यासीनस्य भगवतः कृष्णस्य दिव्यचरितानि प्रस्तुत्य मङ्गलमाशासत चतुर्विंशगाथायाम्। २५ उपस्थि शीतबाधामप्यविगणय्य कथमिहागता हन्त बालिका यूयमिति कृष्णेन पृष्टा गोप्यो भवदीयं जन्म कर्म च गायन्त्यः क्लेशलेशमन्तरेण समागतास्स्म इति सानन्दमूचुः पञ्चविंशगाथायाम्। २६. मार्गशीर्षावगाहनमिति व्रतविशेषप्रस्तावपूर्वकम् तदर्थमपेक्षितान्युपकरणानि व्यजिज्ञपन् गोप्यः षड्विंशगाथायाम्। २७. व्रतसमापने सति भगवतस्सकाशादवाप्तव्या बहुमानविशेषा न्यवेद्यन्त सप्तविंशगाथायाम्। २८. स्वात्मनामाकिञ्चन्यनिवेदनपूर्वकमपचारक्षामणमक्रियत गोपीभिरष्टाविंशगाथायाम्। २९ आदितः प्रभृति असकृत्प्रस्तुतं पुरुषार्थप्रदानं सुष्ठु व्याख्यातं गोपीभिरेकोनत्रिंशगाथायाम्। ३०. गोपीनां व्रतस्य फलेग्रहित्वकथनपूर्वकम् प्रकृतदिव्यप्रबन्धस्य निरतिशयश्रेयःप्रापकत्वरूपं फलप्रदत्वमभ्यधायि चरमगाथायाम्— इति सर्वमवदातम्॥ ३०

श्लो० पूर्वं तावद्व्रजे यत्समभवदनघं गोपिकानां व्रतं तत्
गोदा स्वीयान्तरङ्गोद्यदनुभवपरीवाहरूपप्रबन्धे।
द्राविड्या दिव्यवाचाऽप्रथयत, तदिदं सर्वदेशस्थविद्वद्गोगायाणङ्गराचार्यस्सुरगिरि रचयामास वृन्दावने सन्॥

इत्थं वादिभयङ्करवंशीयाण्णङ्गरार्यरचितैषा ।
गोदाव्रत प्रबन्धव्याख्या विदुषां मुदे चिरं जीयात् ॥

देवी गोदा यतिपरिबृढो रम्यजामातृयोगीत्येतास्तिस्रः परमकरुणामूर्तयो मानसे मे ।
स्थेम्ना स्थित्वा निरुपममहानुग्रहं दर्शयन्त्यो व्याख्यामेतां व्यदधत ततश्चानवद्यैव सैषा ॥

इति
श्रीजगदाचार्यसिंहासनाधीश्वर-
श्रीकाञ्ची. प्रतिवादिभयङ्कराण्णङ्गराचार्यविरचितः
तिरुप्पावैदिव्यप्रबन्धसंस्कृतविवर्तस्सव्याख्यस्समाप्तः ॥

श्रीमत्यै गोदादेव्यै नमः ।

श्रीमते रामानुजाय नमः ।

श्रीमद्वर वरमुनये नमः ॥

श्रीरस्तु ॥

॥ श्रीरस्तु ॥

श्रीपराङ्कुशपरकालयतिवरवरवरमुनिभ्यो नमः ।

श्रीकाञ्ची प्रतिवादिभयंकर-अण्णङ्गराचार्य कृतिषु

द्राविडाम्नायसर्वस्वे-प्रथमसहस्रे चतुर्थो दिव्यप्रबन्धः

# श्रीगोदासूक्तम् ॥

## [ नाच्चियार् तिरुमोळिदिव्यप्रबन्धः ]

सरोमुनिमुखान् मुनीन् गुरुवरांश्च नाथादिमान् प्रणम्य च विशेषतो वरवर मुनि चिन्तयन् ।
मुदा द्रविडवेदवाग्विततिहृद्यभावान् गृणन् मुकुन्दगुणसागरे सततमस्मि मज्जन्मनाः ॥

गोदाप्रबन्धद्वितये द्वितीयां श्रीसूक्तसंज्ञां कृतिमद्भुतार्थाम् ।
गीर्वाणवाण्याऽद्य विवर्तयामि गीर्वाणवाणीरसिकोपभुक्त्यै ॥

[ तनियन्-- * अल्लिनाळ् तामरैमेल् ]

सद्यो विकस्वरसरोरुहवासिलक्ष्मीसख्याश्रिता सुभृतमल्लिसमाख्यदेशा ।
तन्वी मयूरसदृशी मधुवैरिभोग्या श्रीविष्णुचित्तकुलदीपशिखा हि गोदा ॥

— अवतारिका —

श्रीविष्णुचित्तदिव्यसूर्यात्मजा श्रीमती गोदादेवी स्वकीयानुभवपरीवाहरूपं भक्तजनभागधेयपरीपाकात्मकं च दिव्यप्रबन्धद्वितयं प्रणिनाय । तत्र द्वितीयोऽयं दिव्यप्रबन्धः " नाच्चियार् तिरुमोळि " इति

सुप्रसिद्धः । त्रिचत्वारिंशदुत्तरशतगाथात्मकेऽस्मिन् दिव्यप्रबन्धे चतुर्दश दशकानि विलसन्ति । एकैकमपि दशकं एकैकाऽपि च गाथा सर्वथाऽपि रसघनतां बिभर्तीति पुनरुक्तमेतत । पुरुषोत्तमं भगवन्तं स्त्रीरत्नान्येव सम्यगनुभोक्तुं प्रभवन्ति । श्रीपरांकुशपरकालादयोऽपि दिव्यसूरयो मध्येमध्ये स्त्रीभावनामधिगत्य स्त्रीवाचैव भगवदनुभवं परमविलक्षणं प्रचक्रिरे । स्वयं स्त्रीरत्नत्वेन समुत्पन्नाया अस्या गोदादेव्याः तादृगारोपिताकारधारणमनपेक्षितं खलु ! अत एवैतस्या अनुभवः स्वतः परमशोभनः प्रथते । गोदास्तुतौ श्रीवेङ्कटनाथगुरुवरेण— ✱ भोक्तुं तव प्रियतमं भवतीव गोदे भक्तिं निजां प्रणयभावनया गृणन्तः । उच्चावचैर्विरहसंगमजैरुदन्तैः शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः ॥ ✱ इत्युक्तं श्लोकरत्नमिहानुसन्धेयम् ।

अत्र च दिव्यप्रबन्धे ✱ तैयोरुतिङ्गलुम ✱ इत्यादिके प्रथमदशके गोदादेवी नन्दनन्दनादितरस्य कस्यापि मानुषस्य पतित्वेन प्रस्तावमप्यसहमाना श्रीरङ्गनाथात्मनाऽवतीर्णस्स एव स्वस्य पतिर्भवितुमर्हतीत्याशंसमाना तादृशं स्वकीयं सिद्धान्तं सम्यगाविष्कृत्य मन्मथदेवमुद्दिश्य प्रपत्तिं प्रयुङ्क्ते— " भगवन्, कामदेव ! मम मनोरथं निर्वर्तयतु भवान् " इति । न केवलं मन्मथमेव प्रपद्यते, सपरिकरस्य तस्य प्रपदनमविलंबेन कार्यसाधकं भवितुमलमिति मन्वाना तदनुजमपि ( साम्बं ) प्रपद्यते । आशाया उत्पादको मन्मथ एवेति लौकिकी प्रसिद्धिः । भगवद्विषयिण्या आशाया अपि स एवोत्पादको भवितुमर्हतीति प्रतिपत्तिरिव गोदादेव्याः । उत्पादकस्य एव तस्याः ( आशायाः ) फलेग्रहित्वमपि प्रजनयितुं प्रभवतीति तत्प्रपदनमत्र निबध्यते । पुरा गोपीभिः कृतस्य व्रताचरणस्यैवानुकारो यथा " तिरुप्पावै " नाम्नि पूर्वप्रबन्धेऽभूत्तथा ताभिः कृतस्यैव कामप्रपदनस्यापि अत्रानुकरणमिति सुवचम् । अनुकारमात्रमिति न स्वानुष्ठानरूपं च भवतीति विशेषः ।

ननु अनन्याहर्शेषत्वदृढिमशालिनी गोदादेवी कथमिव देवतान्तरप्रपदनप्रावण्यं प्राचीकशदिति चेत् ; अत्र समाहितिरेषा वेदितव्या— देवतान्तरप्रपदनमिदं अज्ञानकार्यमेव । तथाऽपि न किंचिदवद्यमिह । कर्मनिबन्धनमज्ञानमेव हेयम् ; ज्ञानविपाककार्यमज्ञानं तु न तथा । तदत्यन्तमुपादेयमेवेति श्रीवचनभूषणदिव्यशास्त्रे सिद्धान्तितमस्ति ! ✱ ज्ञानविपाककार्यमान अज्ञानत्ताले वरुमवैयेल्लाम् अडिक्कळुक्कु पेरुम् ✱ इति तत्रत्या सूक्तिस्सुप्रथिता तस्य सिद्धान्तस्य गोदाया इदमाचरणं निदानभूतमिति वेदितव्यम् । इत्यन्यत्र विस्तरः ।

तथा चैतद्दशकसारांशसंग्राहक श्लोक एषः—

> कृष्णादन्यः पतिर्मे न भवितुमिह कोऽप्यर्हतीति स्वकीयं
> सिद्धान्तं संप्रकाश्य प्रपदनमकरोन्मन्मथे भ्रातृयुक्ते ।
> अज्ञानं ज्ञानपाकोद्भवमिह तनुते यत्तदादृत्यमेवे-
> त्येनं राद्धान्तमुच्चैर्जगति विदधती विष्णुचित्तात्मजाऽऽद्ये ॥

———

# अथ प्रबन्धोपक्रमः ।

## प्रथमदशकम्-तैयोरुतिङ्गळुम् ॥

१. ( तैयोरुतिङ्गळुम् ) अयि भोः कामदेव ! कृत्स्नेऽपि पौषमासे त्वदीययात्रोत्सवोचित-वीथिकास्संशोध्य मण्डलपूजार्थं मण्डलवेदिकां च प्रतिष्ठाप्य माघमासस्य प्रथमपक्षे चारुलघुसिकताभिर्वीथीरलंकृत्य त्वां त्वदनुजं साम्बं च नमस्कारमुज्जिजीविषया । एतेन प्रसन्नस्त्वं सुतीक्ष्णहेतिराजाञ्चितहस्तस्य श्रीवेङ्कटाद्रीशितुर्भगवतो नित्यकिंकरीं मां कुरुष्व । [ इति मन्मथदेवप्रार्थनया स्वस्य भगवदनुरागभूमानं प्रख्यापयति गोदा । ]

२ ( वेळ्ळैनुण्मणलकोण्डु तेरुवणिन्दु ) हे कामदेव ! धवलतनुसिकतास्समाहृत्य वीथीरलंकृत्य प्रत्यूषात्प्रागेव जलाशये विगाह्य निरवद्यास्समिधो जातवेदसि हुत्वा शुचिः प्रयता सती त्वदाराधननिरताऽहं वर्ते । आराधनेनानेन प्रसन्नस्त्वं मधुस्यन्दीनि कुसुमानि धनुषि संयोज्य सिन्धुसवर्णस्य गोपालकृष्णस्य नाम मनसि कृत्वा बकासुरहन्तृभगवदात्मके लक्ष्ये मां प्रयुञ्जीथाः । [ तेन सह भगवता मां संयोजयेति कथितं भवति ॥ ] ... ... ... (२)

३. ( मत्तनन्नरुमलर् मुरुक्कमलर् कोण्डु ) हे कामदेव ! तव भोग्यानि धुत्तूरपुष्पाणि किंशुककुसुमानि चापार्य त्रिसन्ध्यं च ते पादयुग्मं प्रणिपत्य प्रार्थयमानाऽहं यथा तव नैर्घृण्यमुद्घुष्य न त्वां विनिन्देयं तथा नाम दयेथाः । विकस्वरकुसुमात्मकान् सायकान् धनुषि संयोज्य गोविन्दनाम मनसि धृत्वा विदग्धवेङ्कटनाथाख्यदीपे मामैक्यभाजं कलयेथाः ॥ ... ... ... (३)

४. ( शुवरिल् पुराण निन्पेरेळुदि ) चिरादेव मदुपकारक कामदेव ! भित्तौ तव नामानि विलिख्य मत्स्यात्मकान् ध्वजान् तुरङ्गमान् चामरहस्ता वनिता इक्षुमयं धनुश्च ते पुरतोऽर्पयामि । अवरवयसः प्रभृति ( बाल्यात् प्रभृति ) तमेव गोपालकृष्णमभिलष्य समुज्जृम्भितौ मम पयोधरौ तस्यैव, द्वारकाधीशस्योपभोग्याविति संकल्प्य त्वां प्रणमामि । तमिमं मनोरथं क्षिप्रं फलेग्रहिमाधेहि ॥ ... (४)

५. ( वानिडैवाळुमव्वानवर्क्कु ) अयि भोः कामदेव ! वैदिकैर्द्विजन्मभिरध्वरेषु दिविषद्भ्यस्समर्प्यमाणं हविः कश्चन काननचारी जम्बुकः पादाघातेन आघ्राणेन च दूषयति चेत् तद्यथा वृथा भवति तथा शङ्खचक्रधरभगवदेकार्हतया समुद्भूतयोर्मम पयोधरयोः मनुष्योपभोग्यताप्रस्तावमात्रमपि सत्यमवद्यावहं मम । तथा सति सत्यं प्राणापाय एव मम संभविता भो मदन ! ... ... (५)

६. ( उरुवुडैयारिळैयारकळ् नल्लार् ) अयि कामदेव ! कामतन्त्रविदुषीस्सुन्दरीर्युवतीः पुरस्कृत्य नित्यं धीथीः परिष्कृत्य त्वद्विषयकफाल्गुनोत्सवव्रतविशेषानुष्ठाननिष्ठाऽहमस्मि । वपुःकघलाहकसवर्णः अतसीकुसुमसुकुमारो वन्यकुसुमाभरणश्च भगवान् निजमुखारविन्दविलसद्विलोचनाभ्यां यथा मां कटाक्षयेत् तथा मयि त्वमनुग्रहमुपबृंहयेथाः ॥ ... ... ... ... (६)

७. ( कायुडैनेल्लोडु करुम्बमैत्तु ) अयि मन्मथदेव ! रुचिरव्रीहिगुच्छमिक्षुदण्डं च ते समर्प्य गुडमिश्रतण्डुलपृथुकादिकं च निवेद्य कामतन्त्रनिपुणजनकीर्त्यमानमन्त्रघोषपुरस्सरं त्वामाराधया

म्यहम् । पुरा रोदसी विक्रान्तवान् परमपुरुषो यथा हि निजकरतलेन मदङ्गं स्तनौ चाभिमृशेत् तथा नाम विधाय भुवि यशश्च मे विवर्धय ॥ ... ... ... ... (७)

८. ( माशुडैयुडम्बोडुतलैयुलरि ) विश्लिष्टजनसंघटनरूपवैभवशालिन् ! भगवन् ! कामदेव ! मलिनवपुरहं कचभरं विकीर्य अधरोष्ठश्वेतिमानं च प्राप्य एकवेलाशनव्रतं चावलम्ब्य यत्तपोऽनुतिष्ठामि तदवधेहि । अधुना तावदभ्यर्थनीयमेकमेव प्रभो ! महाप्रभो ! केशवभगवतः पादसंवाहनकैंकर्यरूपपरम-पुरुषार्थनिरता सेयमिति प्रथां मे समुत्पादयेथाः कृपया ॥ ... ... ... (८)

९. ( तोंळुदु मुप्पोदुमुन्नडिवणङ्गि ) अयि कामदेव ! त्रिसन्ध्यं च प्रणतिपूर्वकं त्वामाश्रित्य पवित्राणि पुष्पाणि च समर्प्य त्वदभिष्टवनिरताऽहं सिन्धुसवर्णस्य भगवतो निरवद्यकैंकर्यमेव कृत्वा यदि नोज्जीवेयं तर्हि पश्चात् प्रलापविलापैरेव मया कालः क्षेप्तव्यो भवेत् । तदिदं ते महत्तरं हि पातकं स्यात् । कर्षणक्लेशसहमनड्वाहं यष्टिप्रहारेण अशननिरोधेन च बाधमानस्य जनस्य पापं च ते संभवेत् ॥ (९)

१०. ( करुप्पुविल् मलर्क्कणैक्कामवेळै ) कुवलयापीडाख्यमत्तवारणमदभञ्जनविचक्षणस्य बका सुरभेदननिपुणस्य च मणिवपुषो भगवतो मां वल्लभां कुरुष्वेति इक्षुधन्वानं कामदेवमाश्रित्य प्रार्थितवत्या शैलोपमसौधाश्चितश्रीधन्विनव्यनगराधीश विष्णुचित्तसूयात्मजया गोदया साभिनिवेशम-भिहिता इमा द्राविडदिव्यगाथाः कीर्तयन्तस्सन्तो दिविषदधीशदिव्यपादभाजस्स्युः—इति फलकीर्तनेन समापितमिदं दशकम् ॥ ... ... ... ... (१०)

इति श्रीगोदासूक्ते प्रथमदशकविवर्तस्समाप्तः ॥

---

## द्वितीयं दशकम्—नाममायिरमेत्तनिन्न ॥

---

### — अवतारिका —

दशकेऽस्मिन् गोपीकृष्णसंवादविशेषमेकं निबध्नाति गोदा । गोपीतादात्म्यभावनया दशकमिदं निबध्यत इति यावत् । कृष्णसंश्लेषैकरसिका गोप्यः कदाऽचित् तत्संश्लेषसुखमलभमानाः प्रणयरोषभूम्ना अन्यपरतां प्रदर्शयितुमिच्छन्त्यः सिकतासु कृत्रिमसद्मनिर्माणात्मके विहरणविशेषे प्रावर्तन्त । अद्यापि लोके प्रत्यक्षविषयोऽयं विहारो बालानाम्; यत्र यत्र गृहनिर्माणकर्म प्रचलति तत्र बहिः प्रक्षिप्तासु कार्योप-योगिनीषु सिकतासु बाला अवस्थाय सिकतागृहाणि क्षुद्राणि निर्मिमत इति । एतादृश एव विहरणे प्रवृत्ता गोप्यः कृष्णे विमुखतां प्रादर्शयन्निव । अथवा ताभिः प्रदर्शितं वैमुख्यं सैकतसद्मनिर्माणप्रवृत्तिरूप-त्वेन कीर्तितमित्यपि ग्रहीतुं योग्यम् । स्वयमागते कृष्णे आभिमुख्यमप्रकाश्य कार्यान्तरपरताविष्करणेन वैमुख्यं प्रकाशितवत्यो गोप्य इति वेदितव्यम् । तदिदमसहमानः कृष्णकिशोरः “ कथमिमाः कन्यका मया सह विहरणेऽभिरुचिं विहाय आन्यपर्यमभिनयन्ति ! ” इति रुषित इव सहसा सन्निकृष्टो भूत्वा, ताभिर्निर्मी-यमाणानि सैकतसद्मानि स्वपदघातेन शिथिलयितुमुपचक्रमे । उच्चावचकितववाक्यविन्यासैः शृङ्गारचेष्टि-ताचरणैश्च तासामन्यपरतां निवर्तयितुं प्रायततेति यावत् । येन केनापि प्रकारेण मिथो वाग्विवादप्रपञ्चं कृष्णस्य गोपीनां च भृशमभिसंहितम् । “ अत्र कृष्णस्समागन्ताः कामपि कामपि कामुकचेष्टकर्ता च सः ” इत्याशयैव गोप्यस्सैकतसद्मनिर्माणविहरणनिरता अभूवन् । ताभिर्विनाऽवस्थातुमक्षकनुवन्मुकुन्दश्च मनोरथानामतटान् प्रवाहानभिवर्धयन्नुपागतस्तत्रैव । सपदि भञ्जयामास च स्वचरणघातेन तासां ताभि

कृत्रिमलघुसदनानि । तदात्वे अवसरात् तं प्रति भाषणमुपनतमभूत्तासाम् । " हे कृष्ण ! किमन्धस्त्वम् ? चक्षुष्मता त्वया साभिनिवेशमवलोकनीयं खल्वस्मदीयं विहरणम् । तथा सत्येव हि अस्माकमपि प्रयासस्सफलो भवेत् । भूयसा कालेन भूरिपरिश्रमेणास्माभिः परिकल्पितानीमानि रमणीयलघुसदनानि निर्दयं शिथिलीकुर्वता त्वया बत किं नाम फलमवाप्तम् ? अद्यापि तवास्मासु मनागप्यनुक्रोशः कुतो हि नोदेति ? एवं नाम क्लेशमुत्पादयत्यपि त्वयि नास्माकं मनो विरक्तं भवति । त्वदीयानि मञ्जुमधुरभाषितानि मुग्धविलोकितानि कैतवचेष्टितानि च प्रसभमपहरन्ति हृदयानि नः । बालिकानामस्माकं स्तनोद्भेदोऽपि नाभूदिति ननु जानाति भवान् । ईदृशीष्वस्मासु उच्चावचं किमपि किमपि शृङ्गारमयं भावजालं प्रपञ्चयतस्तव हन्त ! किं नाम समीहितं सेत्स्यति ? सन्ति भूयस्यो रसिकचक्रवर्तिन्यो ललनाः ताभिस्सह यदि भवानीदृशानि कामवचनानि भाषेत, तद्धि भवेद्रसिकतयानुरूपम् । त्वां वयं सत्यं जानीमः शङ्खचक्रगदापाणिं साक्षान्नारायणं देवम् । तथाऽपि त्वयि नास्माकमभिरुचिः । सितायामपि कषायतामतिर्यदि नाम जायते केषाञ्चित् ते तां दूरीकुर्वन्त्येव खलु । तथैवास्माकं कटुभूतो भवान् दूरत एव वर्तितुमर्हति । सहसा परिसरमुपेत्य देहेषु चास्माकं निपत्य शृङ्गारचेष्टाः कुर्वन्तं भवन्तं परिसरस्था यदि केऽपि पश्येयुस्तर्हि किमपि किमपि कथयेयुर्ननु । माभूद्व्रत ! वृथापवादास्पदम् । मा चकार्षीरस्मदीयसिकतासद्मशैथिल्यम् " इति सविनयं सानुनयं च ताः प्रार्थयन्तेस्म । तदिदं तद्भावभावनया दशकेऽस्मिन् प्रतिपादयति गोदादेवी ॥ तथा चैतद्दशकसारसंग्राहकं पद्यम्—

> गोप्यः कार्यान्यपर्यभ्रमकटनकुतुकात् सैकतं सद्म कर्तुम्
> प्रावर्तन्ताथ कृष्णो विहरणरसिकस्तत्र गत्वा स्वपद्भ्याम् ।
> तच्छैथिल्यं वितेने तदनु सविनयं प्रार्थयन्तेस्म मैवं
> कार्षीरित्ये एवदूचे सरसमधुरवाग्दिव्यगोदा द्वितीये ॥

१. ( नाममायिरमेत्तनिन्न ) अयि भोस्सहस्रनामस्तुत्य नारायण । नरवेषधारिन् ! धूर्त त्वं श्वश्रूतनयपदेऽपि कलितवतीनामस्माकं हहो ! कथमिव क्लेशनिवृत्तिर्भवित्री । फाल्गुने मासि मन्मथयात्रोत्सवसमयविशेषोऽयमिति धिया तद्यात्रोत्सवोचितां वीथीं वयमधुना विभूषयामः । अये धौर्त्यनिरत श्रीधर ! मास्म भञ्जयस्सैकतसदनमस्मदीयम् ॥ (" त्वां श्वश्रूतनयपदेऽपि " इत्यादरयं भावः श्वश्रूतनयो नाम भर्ता । आर्यपुत्र इतिवदयं व्यवहारः । संबन्धविरहितव्यक्तिष्वपि स्वैरं बाधां कुर्वतस्तव अस्माभिस्सह भर्तृभार्याभावरूपसंबन्धो यदि स्यात् सततमस्माकं बाधनमेव ते कृत्यं भवति । क्लेशनिवृत्तेर्न कोऽपि मार्ग इति । ) ... ... ... ... ... (१)

२. ( इन्नुमुत्तुमुदुहूनोव ) कृत्स्नेऽपि दिवसेऽस्मिन् वपुषः क्लेशमप्यनालोचयन्तीभिरस्माभिरारचितमिदं सैकतसदनं यदि लोचनाभ्यां पिबन्निव सुष्ठु वीक्षेथास्तर्हि परिश्रमोऽस्माकम् अवितथस्स्यात् । तथा नाम वीक्ष्य अस्मदीयमनोरथसाफल्यं कुरु तावत् । पुरा शिशुभावेन वटदलमधिशयितवन् महाप्रभो ! पुराणपुरुष ! अस्मासु त्वं न कदाऽपि दयमानमना भवसि । पापमेव ह्यस्माकमेतत् ॥ ... (२)

३. ( कुण्डुनीरुरैकोलरि ) भो अगाधमहोदधिशयन ! प्रबलकण्ठीरव ! गजेन्द्रबाधाविमोचन ! एवमाश्रितदुःखहरोऽसि त्वमिति त्वयि स्पृहामुद्वहन्तीरस्मान् कटाक्षवीक्षात्मकनिशितशरप्रयोगतो मास्म बाधयाः । स्वच्छवीचिविपुलभगपयोधिशायिन् ! एतत्सैकतसद्मनिर्माणाय सूक्ष्मतरसिकतास्स्वीय वयमतिमात्रश्रमशालिन्यो बभूम । परिश्रमं नो मनसि कलयन् सन् विरम तावत्सैकतसद्मभञ्जनात् ॥ (३)

४. ( पेय्युमामुहिल्पोल्वण्णा ) अयि वर्षुकवलाहकसवर्ण कृष्ण ! तव भाषितानि चेष्टितानि चास्माकं व्यामोहभूमानमेव जनयन्ति हन्त । किं ते मुखारविन्दं मायामंत्रगुलिकाविशेषः ? भवानिव वयमपि यद्यरुन्तुदभाषितभाषणे प्रवर्तेमहि, तर्हि " बालिका इमाः क्षुद्रबुद्धय " इति त्वं विभावयिष्यसीति भियैव तूष्णीमास्महे । अयि सरोरुहसदृशनयन ! मास्म भञ्जयोऽस्मद्विनिर्मितं सैकतसद्म ॥ ... (४)

५. ( वेळ्ळुनुण्मणल्कोण्डु ) अयि तस्कर ! माधव ! केशव ! अतिधवलतनुतरसिकताभिर्वीथिकासु अत्यद्भुतमस्मद्विनिर्मितानि चित्राणि यद्यपि विध्वंसयसि त्वम् , तथाऽपि तव सौशील्याद्यनुसंधानेन द्रवीभवन्मनस्का एव भवामः ; न तु रोषवशंवदहृदया भवामः । आस्तां नामैतत् । सस्पृहं द्रष्टव्यमपि सैकतसद्म सहसा भञ्जयतस्ते मुखे किमहो चक्षुषी न स्तः ॥ ... ... (५)

६. ( मुत्तिळादपिळ्ळैहळोम् ) सागरे सेतुं बध्वा लङ्कां समराङ्गणीकृत्य रक्षःकुलानि निश्शेषं विनाशितवन् विक्रमाढ्य ! अस्पृष्टयौवना अनुत्पन्नस्तनोद्भेदाश्च वयं बालिशास्स्मः । ईदृशीष्वस्मासु ते प्रत्यहं किमपि किमपि क्षोदिष्ठं कर्म प्रवर्तते सैकतसद्मभञ्जनात्मकलीलापदेशेन । अये ! त्वदधीतासु शृङ्गारकलासु नास्माकं परिचयगन्धोऽप्यस्ति । तद्विजहीहि वृथाऽस्माकं परिबाधनम् ॥ ... (६)

७. ( पेदनन्गरिवाहैलोडु ) अयि भगवन् अर्णवसवर्ण ! नर्मोक्तीर्बहु भाषसे त्वम् भावज्ञानां रसज्ञानां सविधे एवंविधोक्तीर्यदि भाषेथास्तर्हि परमभोग्यमेव स्यात् । लौकिकज्ञानेनापि दरिद्राणां बालिकानामस्माकं बाधनेन बत ! किं नाम ते फलम् ? । सेतुबन्धसमर्थ मुकुन्द ! तव दयिताभिश्शपामहे, मास्म शिथिलयो नस्सैकतसद्म ॥ ... ... ... ... (७)

८. ( वट्टवायूशिरुतूदैयोडु ) जाज्वल्यमानहीरराजालंकृतपाणितल ! भगवन्मुकुन्द ! लीलोपकरणभूतलघुकलशलघुशूर्प-सिकतादिसमेताभिः स्वच्छन्दविहारनिरताभिरस्माभिः कल्प्यमानानां सैकतसद्मनां शिथिलीकरणेन हन्त ! किं ते फलम् ? । हस्तस्पर्शपादघाताभ्यां हिंसां मास्म जनयः । रसनायां ( आमयादिवशात् ) तिक्तायां सत्याम् इक्षुरसखण्डेऽपि वैरस्यधीरुदेतीति ननु जानासि सागरसवर्ण कृष्ण ! ... ... ... ... ... ... (८)

९. ( मुत्तन्नवुपुहुन्दु ) पुरा कदाचित् त्रैविक्रमक्रमकृताक्रमणत्रिलोक ! अस्माकमैकान्तिकविहरणास्पदं सदनाङ्गणं प्रविश्य स्वकीयमाननं प्रदर्श्य मन्दस्मितं च विरचय्य सैकतसद्मभञ्जनेन साकम् अस्मदीयहृदयवैक्लब्यमपि खलु वितनोषि । अथ चास्मदीये वपुषि संमर्दं च हन्त ! संजनयसि । एवं सति तदेतद्वीक्षमाणाः परिसरवर्तिनो जनाः किं वा न कथयेयुः । ( अपवादमेव हि वृथा प्रख्यापयेयुः ॥ ) ...(९)

१०. ( शीदैवायमुदमुण्डाय् ) " अयि सीताधरामृतपानरसिक हरे ! अस्मद्विनिर्मितं ( खेलनात्मकं ) सैकतसद्म मास्म भञ्जय " इति कृष्णमुद्दिश्य वीथीविहारनिरताभिर्गोपालकन्यकाभिर्युक्तमतिमधुरम् तदिदम्-वेदाध्ययनानुष्ठानसंपत्सम्पन्नश्रीवैष्णवोत्तमालंकृतश्रीधन्विनव्यनगराधीशश्रीविष्णुचित्तात्मजया गोदया द्राविड्या गिराऽनुगृहीतम् । तदेतद्दिव्यगाथादशकमधीयाना भागवता अविकलैश्वर्यास्सन्तोऽथ काले दिव्यं धाम विन्देरन् ( इति फलकीर्तनेन समापितमिदं दशकम् ) ... (१०)

इति श्रीगोदासूक्ते द्वितीयदशकविवर्तस्समाप्तः ॥

## तृतीयं दशकम्—कोलियलैप्पदन्मुन्नम ॥

### — अवतारिका —

गोपीवस्त्रापहरणकथाविशेषश्चात्रतरं निरूप्यतेऽस्मिन् दशके । ( * वासो हृत्वा दिनकरसुतासन्निधौ वल्लवीनाम् लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् । सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ * इतीदं गोपालविंशतिसूक्तिरत्नमिह स्मर्तव्यम् । ) गोप्यः कृष्णवियोगतापशान्त्यै शिशिरे सलिले विगाहनं कामयमानाः प्रत्यूषे समुत्थाय यामुनं कमपि ह्रदं प्रति जग्मुः । कृष्णोऽपि तासां प्रवृत्तीस्तदातदा मद्वारकमद्वारकं चावगच्छत्यैव खलु । अधुनैवं प्रययुरिमाः स्नानार्थमिति जानन् स गृहेऽवस्थातुमशक्नुवन् निगूढमनुव्रजन् तस्यैव ह्रदस्य तीरं प्राप्य तरुमूले निलीन आसीदिव । गोप्यश्च यथासमुदचारं वसनान्याभरणानि चोद्धृत्य कूले निधाय स्नानक्रीडातत्परा आसन् । तदात्वे कृष्णस्तानि वासांसि भूषणानि च गूढं हृत्वा कूलस्थकुन्दशाखिनः शीर्षमधिरुह्य विटपे निषसाद तैस्स्वयं भूषितदिव्यगात्रः । अथ समापितस्नाना वल्लव्यः स्थानेषु वस्त्रादिकमनवेक्षमाणाः कथमिदं गतम् केन वा हृतमिति संभ्रान्तचित्ता दिक्षु विदिक्षु च दश दिशन्त्यः अन्ततो ददृशुरनोकहे नन्दनन्दनं परमानन्दसंदोहसंदायकदिव्यमङ्गलविग्रहं वासोभिर्भूषाभिश्च विलक्षणां शोभां दधानम् ।

तानि वासांसि लब्ध्वा परिधाय हि निर्गन्तव्यमाभिस्ततः । हन्त ! किं कुर्युरिमाः ! जलाशयाद्बहिरागन्तुं योग्यता हि नास्त्यासाम् । लज्जाधना हि ललनाः । जलाशये तु नानाविधा मत्स्याः खादन्तो बाधामतीव जनयन्ति ।

अतस्तत्रावस्थातुमपि न प्रभवन्त्यहह ! आपदोऽस्याः परिहरणसरणिः का स्यादिति मुह्यन्ति शोचन्ति च । प्रयामशतैरपि वा चेलानामार्जनमत्यावश्यकं ननु । कथञ्चित स एव वृक्षावस्थितो भगवान् कृष्णकिशोरः प्रार्थनीय इति निश्चिन्वन्ति स्म ।

कृपया प्रदेहि वसनानि नो हरे ! दययाऽस्मदीयवसनानि यच्छ भोः ।

करुणाकराच वितराशु नः पटान् कितव प्रदेहि कृपयाऽम्बराणि नः ॥ इति काश्चन गोप्यः ॥

चिराद्वयं जलाशये स्थिता झषैर्निपीडिताः विषादमुल्बणं हरे ! भजामहे विटाग्रिम ।

इमं ह्रदं कथं भवानुपागतो मुकुन्द भो अलं विषादनेन नः पटान् प्रदेहि माधव ॥

इत्यपरा गोपाङ्गनाः ।

जारचोरतल्लज ! स्वैरमेवमाचरन् ; बन्धुभिः क्षणेन नो दण्ड्यसे ध्रुवं हरे ॥ इति इतरा गोपिकाः ।

एवं नाम प्रसादनभीषणादितत्परा आसन् गोपालयुवतयः । कितवाग्रणीः कृष्णस्तु,

जलाशयाद्बहिस्स्थले समागतः पृथक्पृथक् । कृताञ्जलिर्जनोऽधुना लभेत वस्त्रमञ्जसा ॥ इत्यब्रवीत् ।

हन्त ! कथमिमा एवं कुर्युः । अञ्जलिबन्धस्त्ववर्जनीयोऽभूत् । तदुपायज्ञास्ता एवमूचुः " भगवन् ! मानधना हि वयं वनिताः । सर्वा वयं सखीहस्तसंवलितहस्तास्तत्रयो रचिताञ्जलयो भवेम । प्रसीद भगवन् ! प्रदेहि नो वासांसि " इति । ( अथ करुणावरुणालयस्स भगवान् कृष्णः प्रसन्नहृदयो वितताद वासांसि । ) ईदृशं क्रीडितविशेषमाचष्टे गोदादेवी मधुरललितदशकेन । तथा चैतद्दशकसारांशसंग्रहात्मकं पद्यमिदम्—

प्रत्यूषे गोपकन्याः स्वदयितविरहश्रान्तिशान्त्यै स्रवन्त्यां
कालिन्द्यां स्नातुकामा ययुरथ वसनादीनि कूले निधाय ।
सस्नुः, कृष्णस्तदात्वे कथमपि सहसाऽऽगत्य वासांसि हृत्वा
तासां शुश्राव याश्चागिर इति मधुरं प्राह गोदा तृतीये ॥

१. ( कोलियलैप्पदन्मुन्नम् ) भो भोगिभोगशयनीयशायिन् माधव ! अवगाह्य स्नानार्थं कुक्कुटकूजितादेहसः प्रागेवात्र वयमागतास्स्मः । भगवान् गभस्तिमाली च उदयशिखरिशिखरमाससाद । हन्त ! त्वया वयमतीव क्लेशिता अभूम । सत्यं शपामहे... इतःपरं न कदापि वयमागच्छेम जलाशयम् । सखीहस्तसंवलितहस्तास्सत्यो वयमञ्जलिबन्धं कुर्मः परमकृपया प्रदेहि नः परिधानम् ॥ ... (१)

२. ( इदुवेन्पुहुन्ददिङ्गन्दो ) मधुस्यन्दिनीं तुलसीस्रजमवतंसयन्महानुभाव ! आश्चर्यगुणचेष्टित ! अस्माकममृतकल्प भगवन् ! हन्त ! कथमिह प्रविष्टो भवान् ? ननु केन पथा जलाशयोऽयमधिगतो भवता ? हा हरे ! दौर्भाग्योपहता वयं बत संश्लेषाभिमुख्यं नोद्वहामः अयि विदग्धकिशोर ! विजहीहि संभ्रमम् । कालियफणिनि कलितताण्डव कृष्ण ! कुन्दशाखानिहितान्यस्मदीयानि वासांसि वितर कृपया ॥ (२)

३. ( एल्लेयीदेन्नविलमै ) हा ! धनुरुपमर्दितलङ्कैश्वर्य भगवन् ! हन्त किमिदं नाम बाल्यलौल्यम् ! यदीदं जानीयुरस्मदीया मातरस्तर्हि भृशं विमनायेरन् । नास्माकं पुनरपि गृहेषु प्रवेशं संमन्येरन् । तदेतदतीव दुश्चरितमिति न मन्यसे । कुन्दशाखिशाखासु निषण्णोऽसि हन्त यद्य यच्च कामयसे त्वं तदखिलमपि वितरेम । सर्वजनसंदर्शनयोग्यादस्मात् स्थलादन्यत्र व्रजेम । दुकूलं देहि नः कृपया ॥ ... (३)

४. ( परक्कविलित्तेङ्गम् नाक्कि ) अयि लङ्काप्रणाशक भगवन् ! बहुतरजनतावगाहनोचितेऽस्मिन् जलाशये अस्माकमश्रुधारा दुर्निरोधाः प्रसर्पन्ति हन्त पश्य । सर्वा अपि दिशः पश्यताद्भवान् स्फारेक्षणः सन् । करुणालवलेशविधुर भगवन् ! शाखामृगाग्रगण्यतां च ते संविद्महे । कुन्दविटपिविटपनिहितानि वासांसि वितर कृपया ॥ ... ... ... ... (४)

५. ( कालैक्कदुविड्डुहिन्न ) अयि सुन्दर गोपालकृष्ण ! उच्चावचा झषा इह जलाशये हन्त नः पादान् परिबाधन्ते । यदीमामस्मदीयां विपदं शृणुयुरास्माकीना भ्रातरः अथ सरभसं शूलपाणयस्सन्तोऽत्र समागत्य त्वामुत्सारयेयुः । अथ च ते खेलनं विपरीतफलकमेव हि स्यात् । माभूत्तथा नाम । कुन्दानोकहे विन्यस्तानि वासांसि विश्राणय दयया ॥ ... ... ... (५)

६. ( तडत्तविल्लृतामरैप्पोयूहै ) जात्युचितकुम्भनर्तनविचक्षण कृष्ण ! विपुलायामिह नलिन्यां कमलनालकण्टकवृन्दबाधितचरणा वयं विषभरितवृश्चिकसंदष्टा इव भृशं विषीदामः । अस्मत्स्वामिन् ! विसृज्यैवंविधधूर्तचेष्टितरुचिं वासांसि नः प्रदेहि कृपया ॥ ... ... (६)

७. ( नीरिले निन्नयार्क्किन्नोम् ) युगान्तकाले जगद्रक्षणचिन्ताजागरूक ! भगवन् ! चिराद्वयं पयसि खलु स्थित्वाऽवसीदामः । त्वं तु अपनीतिचरितानि स्वैरं वितनोषि । अस्माकमावसथानि च दवीयांसि हन्त । त्वय्येव वयं पुष्कलप्रेमशालिन्यो वर्तामहे । इमामस्मदीयां शोचनीयामवस्थितिं यद्यवेक्षेरन्भ्रातरस्तर्हि न विद्मः किं करिष्यन्तीति । कृपया प्रदेह्यस्मदीयमंशुकम् । कुन्दमहीरुहमूर्धनि स्थित्वा एवं नाम परीबाधनं च विजहीहि तावत् ॥ ... ... ... (७)

८. (मामिमार्मकलैयल्लोम) अयि नित्यजागरूक भगवन्! अत्र परिभूयमाना वयं न केवलं ते कलत्रगोष्ठीप्रविष्टा एव। किंतु उच्चावचबन्धुवर्गाश्चात्र संगतास्सन्ति। भो कोमल गोपालकृष्ण! सुदृढं ब्रूमो वयम् इदं ते कृत्यं न कल्पेत क्षेमाय। तद्धितर कुन्दशाखिशाखानिवेशितं वासः ॥ ... (८)

९. (कञ्जन्वलैवैत्तवञ्ज) ग्राः कंसस्य मायाचेष्टितानि मोघानि कृत्वा तिमिरघने निशीथे व्रजमुपागतोऽसि हन्त! कन्यकानामस्माकं मनोवेदनाप्रजननायैव तव जननी यशोदाऽपि त्वां न भीषयति! प्रत्युत सा धूर्तचेष्टितेष्वेव त्वां समेधमानकुतूहलं च कुरुते। तथा नाम सा त्वां पुष्णाति। अपि वत्सक पूतनास्तन्यपायिन्! व्रीडाविधुर कृष्ण! वासांसि नो वितर ॥ ... ... ... (९)

१०. (कन्नियरोडेङ्गल्नम्बि) अस्मदीयगोपालकृष्णस्य गोपकन्यकाभिस्सह संजातविलक्षणं खेलनमधिकृत्य, सौवर्णसौधाश्रित श्रीधन्विनव्यनगराधीश श्रीविष्णुचित्तसूर्यात्मजया गोदया सुष्टु संकीर्तितमिदं दिव्यगाथादशकं सादरमधीयाना महान्तोऽथ काले वैकुण्ठं प्रविश्य श्रियः पत्या सह नित्यानुभवभाग्यभाजस्स्युः ॥ (इति फलकीर्तनेन समापितमिदं दशकम्।) ... ... (१०)

इति श्रीगोदासूक्ते तृतीयदशकविवर्तस्समाप्तः ॥

---

## चतुर्थ दशकम्—तेळ्ळियार्पलर ॥

---

### — अवतारिका —

विरहिजनानां दैवप्रश्नविधानेन कालयापनमिति काचिदस्ति प्रक्रिया। दैवप्रश्नविधानं नाम- त्रैकालिकज्ञानयुक्तं देवताविशेषम् अथवा दैवाविष्टं व्यक्तिविशेषं संबोध्य "मदीयः पतिः क्षिप्रमागच्छेद्वा?" इत्यनुयोगकरणम्। दैवतस्य दैवाविष्टव्यक्तिविशेषस्य वा अलाभे तु, धरातले स्वयमेव सुबहूनि रेखाङ्कनविन्यसनानि कृत्वा अथ तासां रेखाणां युग्मशस्संख्याने कृते यदि एकानवशेषेण युग्ममेव समाप्नोति तर्हि पत्या सह स्वस्य युग्मभावस्सिद्ध इति मत्वा संतोषानुभवः यदि तु पूर्वोक्तसंख्याने एकमेवाव शिष्यते तर्हि "संयोगो न स्यादावयोः, एकाकितयैवावस्थानमवर्जनीयम्" इति मत्वा शोकानुभवः इति काचन पद्धतिरस्ति। इयं तु प्रक्रिया द्राविड्यां 'कूडलिलैत्तल्' इति नाम्ना व्यपदिश्यते। मनोविनोदनार्थमीदृशं व्यापारविशेषं पुरा गोप्यश्चक्रुरिति तदनकारोऽस्मिन् दशके गोदादेव्या क्रियते। (अनुकारमात्रं न; स्वानुभवरूपता चात्र सुसमृद्धेति न विस्मर्तव्यम्।) "श्रीरङ्गक्षेत्राधीशः श्रीवनाद्रिनाथः श्रीवेङ्कटाचलपतिः श्रीकृष्णपुराधिनाथः कालियदर्पहन्ता कुवलयापीडाख्यमत्तवारणमदनिवारणो यमलार्जुनभञ्जनः कंसहन्ता शिशुपालशिरश्छेत्ता द्वारकापतिर्वसुदेवसूनुर्यशोदात्मजो यद्यधुना मदन्तिकमागच्छेत्तर्हि तत्सूचनं कलय भोस्समागमपिशुनदैवत!" इति कथनेन तत्संगमकुतूहलं स्वकीयम् अतिमात्रमाविष्कृतवती गोपीजनतादात्म्यापन्नाधन्या गोदादेवीति वेदितव्यम्। तथाचैतद्दशकसारसंग्राहकं पद्यमिदम्—

> श्रीरङ्गे श्रीवनाद्रौ वृषगिरिशिखरे चोल्लसन् देवदेवः
> कैङ्कर्यं पादसेवात्मकमिह कृपया स्वार्चिकायुर्ददीयम्।
> आगच्छेद्वा कृपाढ्यो हरिरिति विमृशन्तिस्म गोप्यः पुरा, तत्
> तत्तादात्म्येन गोदा कथयति दशकेऽस्मिंश्चतुर्थेऽनुरागात् ॥

१. ( तेलियार्पलर् ) अयि भो संघटनदैवत ! प्रसन्नचित्तभक्तवर्गप्रणतपादः परमोदार, श्रीवनाद्रीश्वरो भगवान् यं देशमधिशेते तत्र ( श्रीरङ्ग धाम्नि ) पादाब्जसंवाहनकैङ्कर्यं मे यद्यनुगृह्णीयात्सः, तर्हि त्वं संगच्छस्व । ( विरहिणौ दम्पती संघटयितुं क्षमं किमपि दैवतमस्तीत्यभिमानेन "भोःसंघटनदैवत !" इति संबोधनं क्रियते । अवनारिकायां विस्तारिकायां विस्तरोऽनुसन्धेयः । 'त्वं संगच्छस्व" इति कथनम्—आनुकूल्यं प्रकाशयेत्यर्थकम् ॥ ) ... ... (१)

२. ( काट्टिल्वेङ्कडम् ) भो संघटनदैवत ! काननस्थवेङ्कटाद्रौ श्रीकृष्णपुराभिधदिव्यनगरे च सहर्षप्रकर्षं विराजमानो वामनो भगवान् क्षिप्रमत्रागत्य पाणिना मम पाणिं गृहीत्वा स्वात्मना यदि मां संश्लेषयेत्तर्हि त्वं संगच्छस्व ॥ ... ... ... ... (२)

३. ( पूमग्न्पुहल्वानवर् ) कमलासनेन वेधसा नित्यसूरिभिश्च संकीर्त्यमानकीर्तिविशेषः पुरुषोत्तमो विलक्षणफलशालिन्या देवक्याः पुत्ररत्नं शुभगुणाधिकवसुदेवात्मजश्च कृष्णो यद्यत्र समागत्य संश्लिष्येत्तर्हि त्वं संगच्छस्व । ... ... ... ... (३)

४. आयुच्चिमार्कलुम् ) भो संघटनदैवत ! वल्लवीनां वल्लवानां च भीतिमुत्पादयन् पुष्पितोत्तुङ्ग कदम्बमहीरुहादुत्प्लुत्य भाग्यशालिनः कालियफणिनःशिरसि निपत्य कलितताण्डवो नट इह यदि समागच्छेत्तर्हि त्वं संगच्छस्व ॥ ( भाग्यशालिन इत्यत्र * कालियस्य फणातां शिरस्तु मे सत्कदम्बशिखरत्वमेव वा । वष्टि जुष्टवनशैलसुन्दर ! त्वत्पदाब्जयुगमर्पितं ययोः * इत्येतत् सुन्दरबाहुस्तवश्लोकरत्नमनुस्मर्तव्यम् । ) ... ... ... ... (४)

५. ( माडमालिहैशूल् ) भो संघटनदैवत, सालङ्कारं कुवलयापीडाख्यं मत्तगजं व्यापादितवान गोपालकृष्णः प्रासादवृन्दपरिवेष्टितायामुत्तरमथुरायां मदीयवीथिकामागत्य 'गोदाग्रहं कुत्र' त्यनुयुञ्जानस्सन यदि संनिदध्यात्तर्हि त्वं संगच्छस्व ॥ ( उत्तरमथुरायां गोदादेव्याः काचिद्वीथी ( गृहम् ) कथमस्तीति शङ्का जायेत । अत्र समाधत्ते पूर्वाचार्याः— दिव्यदेशेषु सर्वेष्वपि भक्तानामगारसद्भावभावनं न हि न युज्यते । किञ्च परमभागवताग्रेसरो मालाकारो मथुरापुरकृतावसथः खलु । तद्गृहे इयमपि मालाकारविष्णुचित्ततनया भागिनी ननु । ... ... ... (५)

६. ( अत्तवन् मरुदमुरिय ) भो संघटनदैवत !, मदेकशरणभूतो यमलार्जुनभङ्गसंपादकरिंखणः कंसहन्ता मथुराधिनाथः कृष्णो यद्यत्र समागच्छेत्तर्हि त्वं संगच्छस्व ॥ ... ... (६)

७. ( आन्निान्दनशयू ) भो संघटनदैवत !, पुरा गर्हणीयकृत्यवर्गकरणनिरतं शिशुपालं यमलार्जुनम् वृषभसप्तकं बकासुरं जैत्रायुधशालिनं कंसं च पञ्चतां प्रापितवान् गोपालकृष्णो यद्यत्रागच्छेत्तर्हि त्वं संगच्छस्व ॥ ... ... ... ... (७)

८. ( आवलन्बुडैयारनम् ) भो संघटनदैवत !, भक्त्या अभिनिवेशेन च भूषितानां भक्तानां हृदयादन्यत्र विमुखः सौगन्ध्यसंभृतद्वारिकापुराधिनाथो वत्ससंचारणविहरणनिरतो गोपालो यदि संश्लिष्येत्तर्हि त्वं संगच्छस्व ॥ ... ... ... (८)

९. ( कोण्डकोलक्कुरल् ) भो संघटनदैवत !, पुरा * कौपीनं कटिसूत्रसीम्नि घटयन् मौञ्जीमभिन्यस्यन् कृत्तिं कृष्णमृगस्य वक्षसि वहन्नाषाढमंसेऽर्पयन् * इत्युक्तरीत्या परमसुन्दरदिव्यवपुः परिगृह्य

वामनरूपी सन् महाबलिमहाध्वरभूमिमुपेत्य द्यावापृथिव्यौ विक्रान्तवान् परमपुरुषो यद्यत्र समायायात्तर्हि त्वं संगच्छस्व ॥ ... ... ... (९)

१०. ( पलहुनान्मैरैयिन्पोरुलायू ) भो संघटनदेवन !, अनादिनिधनचतुर्वेदपरमतात्पर्यभूतो मदजलसुरभिवारणेन्द्रसमुज्जीवनसमर्थो मच्चित्तापहारिसौन्दर्यनिधिः वल्लवीजनहृदयावासो गोपालकृष्णो यदि अत्र समागच्छेत्तर्हि त्वं संगच्छस्व ॥ ... ... ... (११)

११. ( ऊडल्कूडल् ) प्रणयरोषवैशिष्ट्ये दूतप्रेषणादिना स्वाभिसंधिसमुद्बोधने संश्लेषे च विराद्व्यासक्तानामद्वितीययशसा विराजमानानां च वल्लवीनां संघटनदैवतप्रार्थनामधिकृत्य गोदादेव्या कथिता इमा दिव्यगाथाः कीर्तयन्तो भागवता अनघा भवितारः ॥ ( इति फलकीर्तनेन समापितमिदं दशकम् ॥ ) ... ... ... ... (११)

इति श्रीगोदासूक्ते चतुर्थदशकविवर्तस्समाप्तः ॥

---

## पञ्चमं सूक्तम्—मन्नुपेरुंपुकळ् ॥

---

### — अवतारिका —

एतत्सूक्तं कोकिलप्रार्थनात्मकं निबध्यते। गोदादेवी स्वकीयोद्याने कोकिलादिपक्षिगणानभिवर्धयति भगवद्गुणाद्युपदेशतः। तथाऽभिवर्धितेषु पक्षिष्वन्यतमं मधुरवाचं रमणीयतनुं परभृतशावं संबोध्य "यथा सरभस मत्र समागच्छेन्मन्नाथः श्रीवेङ्कटाद्रीशः श्रीरामचन्द्रो गरुडध्वजो लोकविक्रान्तचरणः श्रीधन्विनव्यनगराधीशः शङ्खचक्रपाणिः क्षीरसागरशायी शार्ङ्गधन्वा नारायणः, तथा त्वं कुरु मधुरं कूजितम्। एवं तर्हि त्वयि भृशमहं कृतज्ञा स्याम्। मया वर्ध्यमानेन शुकशावेन सह ते सख्यं च संविदध्याम्। यद्येवं मत्प्रार्थनानुसारेण न करोषि तर्हि त्वामुद्यानादुद्वासयेयम्; त्वदीयकूजितेन भगवानत्रागतश्चेत् अथ तस्मिन् यद्यदहं कुर्याम् तदवलोकनं च ते परमप्रयोजनं भविष्यति परमधार्मिकत्वं च ते सेत्स्यति" इत्यादिकमतिमधुररमणीयमुक्तवती गोदा दशकेऽस्मिन्।

अत्रेदं विवेचनीयम्। न तावद्विवेकान्धा गोदा। अपि तु परमविवेकशालिनी। ईदृशी सैषा परभृतशावकूजितेन भगवान् स्वसकाशमायास्यतीति प्रतिपत्तिं कथमिव धत्ताम्। सर्वथाऽप्यसम्भावितमेव खल्विदम्। ईदृगसम्भावितवचनराशिमयी गाथा वेदसनाभित्वेन कथमुपलाल्यते? इति। अत्रोत्तरमिदमवधेयम्। * उभाभ्यामेव पक्षाभ्यामाकाशे पक्षिणां गतिः। तथैव ज्ञानकर्मभ्यां प्राप्यते पुरुषोत्तमः॥ * इति महर्षिभिरभिहितम्। ज्ञानानुष्ठानसम्पन्नः आचार्यस्सब्रह्मचारी पुत्रशिष्यो वा भगवता सह घटयितुं शक्तः पक्षित्वेन दिव्यसूरिभिरभिधीयते। यत्र पक्षिणां दूतकृत्ये प्रेरणं दिव्यप्रबन्धेषु दृश्यते श्रीपराङ्कुशपरकालसूरिसूक्तिषु; तत्र च आचार्यादीनामेव विवक्षेति संप्रदायः। "आचार्यहृदय" तद्व्याख्यानादिषु विशदमिदम्। तथाचात्र कोकिलविहगप्रार्थनम् आचार्यादिप्रार्थनमेवावगन्तव्यं यथायोगम्। अस्मिन् दशके मायशिष्याणां विवक्षेति प्रतिपत्तुं योग्यम्। तृतीयगाथायां 'सहचरीसमेतकोकिल' इति संबोधनेन सर्वोपकारक्षमगृहस्थाश्रमप्रशस्तिस्सूचिता भवति। "नारायणं यदि न कूजसि कोकिल! त्वामुद्यानतोऽहमधुनैव विवासयेयम्" इति दशमगाथायां कथनेन आचार्यनिग्रहमपि परमभोग्यं गृह्णाति यः स एव शिष्यलक्षणपूर्तियुक्त इति द्योतितं भवति। एवमर्थविशेषा बहवः शब्दस्वारस्यगम्या वेदितव्या व्याख्यानमुखतः॥

पक्षिसामान्यनाम्ना कथनं विहाय कोकिलाख्यपक्षिविशेषकथनेन चात्र बहवोऽर्थविशेषा अवगम्यमाना भवन्ति । मनागिह व्याचक्ष्महे । ( १ ) कोकिलाः प्रायः पुन्नागवृक्षवासिनो भवन्ति । दशकेऽस्मिन् प्रथमगाथायां तत् स्पष्टमुक्तम् । श्रीरङ्गराजस्तवे-*पुन्नागतल्लजमजस्रसहस्रगीतिसेकोत्थदिव्यनिजसौरभमामनामः * इति श्लोकरत्नेन सविशेषमभिष्टुतस्य पुन्नागवृक्षवरस्य छायायां निषद्य ये बहुश्रुता अभूवन् ते तावदत्र विवक्षिताः । ( २ ) कोकिलानां परभृतत्वं प्रसिद्धम् । तथा आचार्याधीनपोषणाशिष्या इह विवक्षिताः । ( ३ ) कोकिलाः प्रथमतश्चूतकिसलयखादनेन कषायितवदनास्सन्तः, अथ पनसफलमधुररसचूषणेन तृप्ता भवन्तीति श्रीपरकालमुनीन्द्रः स्वकीयदिव्यगाथासु [ पेरियतिरुमोलि ५-३-४ ] कथयति । एवं प्रथमतः काव्यनाटकादिग्रन्थेषु सामान्यशास्त्रेषु च निष्ठया कषायितहृदया भूत्वा, अथ वेदान्तशास्त्रव्यासङ्गेन हृष्यन्तोऽधिकारिविशेषा इह विवक्षिताः । ( ४ ) * वसन्तकाले संप्राप्ते काकः काकः पिकः पिकः * इति कवयोऽपि ननु कथयन्ति । वसन्तर्तौ पिकाः विशेषतः स्वकण्ठनादं प्रदर्शयन्ति यथा, तथा समयविशेषेष्वतिमधुरगभीरवाग्विशेषप्रपञ्चनेन रसिकजनहृदयान्यावर्जयन्तो वाग्मिन इह विवक्षिताः । ( ५ ) * पिकः कूजति पञ्चमम् * इत्यभिधानात् पिककूजितं पञ्चमध्वनिरिति व्यपदिश्यते । एवं येषां वाग्विततिश्चतुर्वेदताऽप्यभ्यधिका सती "किमयं पञ्चमवेदाविर्भावविशेषः !" इत्युल्लेखयोग्या विजृम्भते तेविवक्षिता इह । एवंविधा व्यङ्ग्यार्थविशेषाः निशितमतिभिरन्वर्थाभिरुन्नेयाः ।

तथा चैतद्दशकसारांशसंग्राहकमिदं पद्यम्:—

> उद्याने वर्ध्यमानं ललितमधुरवाग्वैखरीकं मनोज्ञं
> 　पुन्नागादिद्रुमस्थं परभृतशिशुमुद्दिश्य भोः कोकिलाग्र्य ।
> मन्नाथं जारचोरं मणिनिभवपुषं माधवं कूजितैस्स्वैः
> 　अत्र द्राक् प्रापयेथा इति कथितवती पञ्चमे दिव्यगोदा ॥

१. (मन्नुपेरुम्पुकल् मादवन्) पुन्नागमाधवीप्रियंगुमुरपुन्नागादिपूर्णे विपिने कूजन् कोकिल ! यशस्विनः श्रियःपत्युः नीलमणिनिभस्य नवरत्नाञ्चितमुकुटधारिणो माधवस्यानुरागं वहाम्यहमित्येतावता हेतुना शरीरकार्श्यमनुभवामि हन्त ! किमिदं न्याय्यम् ? विद्रुमसमाधरो मदीयस्स भगवान् यथा मम परिसरमुपेयात्तथा नाम सततं तन्नामानि संकीर्त्य झटिति तमिहाह्वय ॥ ... ... (१)

२. ( वेल्लैविळिशङ्गिडङ्कैयिल् ) मधुस्यन्दि चाम्पेयकुसुमसारग्रहणतस्सानन्दं कूजन् अयि कोकिल ! धवलमुखरपाञ्चजन्यालंकृतवामपाणिस्स विमलो भगवान् स्वं रूपं हन्त ! नैव संदर्शयति । मम हृदयान्तः प्रविश्य मे मनसश्शैथिल्यमुत्पाद्य, गच्छतोऽपि प्राणान् प्रसभमवस्थाप्य मद्व्यथामवलोकयन्नास्ते सः नृत्तदर्शनहेवाकिजनवत् । हे कोकिल ! त्वमपि अव्यक्तमधुरकूजितैर्मां मावधीः ॥ ... (२)

३. (मातलितेरुमुन्बुकोल्) कुसुमविकासोल्लासिनि विलक्षणसौरभसंभृते चोपवने मधुरमधुकरगीतश्रवणतस्सानन्दं सहचर्यया सह विहरन् कोकिल ! पुरा मातलिना सारथिना सनाथं रथमधिरुह्य मायाविनं दशाननं प्रति शरवर्षं मुहुराकलय्य तच्छिरसां लवनं संकल्पितवतो महाप्रभोरिहागमनं नैवावलोके । नीलमणिनिभं मम नाथं तमिहाकारयेथाः ॥ ... ... ... (३)

४. (एन्बुरुहियिनवेल्नेडुम्) अयि परभूत ! अस्थीनि च मे वपुषि द्रुतानि । चक्षुषी च चिरादेव निद्राविदूरमे आस्ताम् । एवं नाम व्यसनार्णवान्तर्निमज्ज्य वैकुण्ठाभिधानं पोतमलभमाना दूये । प्रियजनविश्लेषजं दुःखं त्वमपि वेत्सि ननु । हिरण्मयविग्रहशालिनं गरुडध्वजं पुण्यात्मकं च तं भगवन्तमिहाकारयेथाः ... ... ... ... (४)

५. (मेन्नडैयन्नम् परन्दु) ललितगतिचतुरहंसक्रीडोल्लासि श्रीधन्विनव्यपुरीशितुः भगवतः पादाम्बुजयुगमरुक्मदिदृक्षावशात मिथो बद्धस्पर्धस्फुरितशफरद्वन्द्वललिते मम दृशौ न निद्रां स्वीकुरुतः। अयि कोकिल ! मधुरान्नेन सह दुग्धमुपभोज्य संवर्धितं मम सुन्दरकीरपोतं तव सखायं कुर्याम्, यदि त्वं त्रिविक्रमं भगवन्तमत्राह्वयेथाः ॥

[ विशेषविवरणम्—अस्यां गाथायां श्रीधन्विनव्यनगरसंकीर्तनं विराजते। तस्यां च नगर्यां ललितगतिचतुरहंसक्रीडोल्लासित्वकथनं साभिप्रायम् । स्वकीयः पिता श्रीभट्टनाथसूरिरेवात्र हंसत्वेन कीर्त्यते। * यत्सारभूतं तदुपाददीत हंसो यथा क्षीरमिवाम्बुमिश्रम् * इत्युक्तरीत्या नीरक्षीरविवेकचतुरो हंस इव भट्टनाथसूरिस्सारासारविवेककुशलः। भगवान् हंसरूपी सन् वेदानुदधरद्यथा तथा भट्टनाथसूरिरपि * गुरुमुखमनधीत्य प्राह वेदानशेषान् * इत्युपश्लोकितरीत्या राजपरिषदि वेदप्रकाशकः । हंसे गतिचातुर्यमिव भट्टनाथसूरौ अनुष्ठानचातुर्यं वेदितव्यम् । एतादृशेन सूरिवरेण श्रीधन्विनव्यपुर्यां उल्लासस्समजनीति सूचितं भवति ॥ ] ... ... ... (५)

६. (एत्तिशैयुममरर् पणिन्देत्तुम्) विकस्वरकुसुमस्तबकाञ्चितवनविततिविहरणरसिक कोकिल ! सर्वासु दिक्षु विनतैरमरैरभिष्टूयमानो भगवान् हृषीकेशो यन्मयि विमुखः, ततोऽहं मौक्तिकसमस्य स्मितस्य विद्रुमनिभस्याधरस्य पयोधरयोश्च ग्लानिमनुभवामि । हे कोकिल ! यदि त्वं मम जीवातुं परमपुरुषमाकारयेथाः तर्हि शिरसाऽभिवादनेन चिरं कृतज्ञा स्याम् ॥ ... ... (६)

७. (पोङ्गियपार्क्कडल् पळ्ळिकोळ्) अयि स्पृहणीय परभृत ! उत्तरङ्गं क्षीरार्णवमधिशयानं भगवन्तं समाश्लेष्टुकामाया मम स्तनयुग्मं कुतूहलभूम्ना विजृम्भमाणं सत् बत ! प्राणान् श्लथयति । अस्यामवस्थायां त्वं निगूढमवतिष्ठसे। किमिदं युक्तम् ? चारुसुदर्शनपाञ्चजन्यकौमोदकीभूषितहस्तं भगवन्तं यदि त्वमिहाह्वयेस्तर्हि महाधार्मिकस्स्याः ॥ ... ... (७)

८. ( शार्ङ्गम् वळैयवलिक्कुम् ) स्वादुफलभरितरसालोपवनेषु नवकिसलयखादनतत्पर परभृतशाव ! शार्ङ्गधन्वा परमचतुरो भगवान् प्रणयधारास्वपि भृशमवगाढः । आवाभ्यां मिथः कृतं रहस्यसंकेतम् आवामुभावेव विद्वः। दवीयांसं तं भगवन्तं यदि त्वमतिशीघ्रमिहाह्वयेथाः तर्हि तास्मिन् विषये मया करिष्यमाणानां कृत्यविशेषाणामवलोकनं ते परमप्रयोजनं भविष्यति ॥ ... (८)

९. ( पैङ्गिळिवण्णन् शिरीदरन् ) स्पृहणीय प्रभोज्ज्वल भृङ्गझङ्कारसङ्कुलवनराजिविहारिन् कोकिल ! सावधानमिदमाकर्णयेथाः । चारुतरशुकशावोपमेयश्रीधरसमाख्यायां वागुरायामहं बद्धाऽस्मि । शङ्खचक्राङ्कितपाणितलस्य तस्यात्र समानयनं वा, मदीयकनकमयकरवलयसमाहरणं वेत्येतद्द्वितये अन्यतरस्य करणं तवावर्जनीयम्, यद्यत्रैवोपवने तव विजिहीर्षा स्यात्। [ टिप्पणी। लोके विकल्पा हि विरुद्धकोटिद्वयावगाहिनः प्रथन्ते । अत्रत्ये विकल्पे विरुद्धकोटिद्वयमस्ति वेति विमर्शनीयम् । भगवतोऽत्र समानयनं गोदायाः कनकमयकरवलयसमाहरणं चेत्युभयमपि न विभिन्नम् । गोदायाः करवलयसमाहरणं नाम शरीरकार्श्यापनोदनमेव । तत्तु भगवतस्समानयनमन्तरा नोपपद्यत इति तदिदमुभयमविशेषमेव। तथा चात्रत्ये विकल्पे विषमकोटिद्वयं नैवेति सुवचम्। यमसविधे सावित्र्या उक्तिचातुर्यमिव इदमपि विलक्षणोक्तिचातुर्यमिति मन्तव्यम्। ] ... ... (९)

१०. ( अनुलहमळन्दानैयुहन्दु ) हे कोकिल ! पुरा त्रैविक्रमक्रमकृताक्रमणत्रिलोके भगवति कैङ्कर्यं कर्तुमहं कुतूहलिनी। स तु भगवान् मां वञ्चयति । अथ मलयपवनशिशिरक्रिरणाभ्यामुपता-

मानां व्यथामावेदयितुं नाहं प्रभवामि । सततमस्मिन्नेवोद्याने स्थित्वा मावधीर्माम् । अद्य यदि त्वं तव कूजितैर्नारायणमिह नानेष्यसि नूनमुपवनादस्मादुत्सारयेयं त्वाम् ॥ ... (१०)

११. (विण्णुरनीण्डडितादिय) त्रिक्रम्य रोदसी समाक्रान्तवन्तं भगवन्तमच्युतं कामयमानया 'भो कोकिल ! सिन्धुसवर्णं मम वल्लभं मत्साक्षात्कारयोग्यमिहाह्वय' इत्युक्तवत्या च वैदिकाग्रेसरालंकृतधन्विनव्यनगराधनाथभट्टनाथयोगिनो दुहित्रा गोदयाऽभिहिता इमाः परममधुरदिव्यगाथाः ये कीर्तयन्ति, ते श्रीमदष्टाक्षरमहामन्त्रानुसन्धानफलभागिनः स्युः ॥ (इति फलकीर्तनेन समापितमिदं दशकम् ।) ... ... ... ... (११)

इति श्रीगोदासूक्ते पञ्चमदशकविवर्तस्समाप्तः ॥

---

## षष्ठं सूक्तम्—वारणमायिरम् ॥

---

### - अवतारिका -

अधस्तनदशके कोकिलप्रार्थनापदेशेन स्वाभिनिवेशभरमसमाभ्यधिकं प्रकाशितवत्या गोदादेव्या कथंचिदात्मधारणं दित्सुः परमः पुमान् दीनबन्धुः कृष्णकिशोरो विलक्षणस्वप्नानुभवप्रदानेन समाश्वासनमकार्षीत् । पाणिग्रहणसत्राहतः प्रभृति शेषहोमावसानमङ्गलस्नानपर्यन्तां चर्यां स्वप्नतोऽनुभूतवती गोदा प्रभाते स्वसखीसविधे सर्वं तत्सुविशदमभिदधे । तदिदं निबद्धमस्मिन् दशके । असंख्येयैर्मत्तवारणैः परिवृतस्सन् नन्दसूनुर्नारायणो मदभिमुखस्समायातीति, हिरण्मयाः पूर्णकुम्भास्तत्रतत्र विन्यस्ता इति, सर्वतश्च क्रमुकफलकदम्बककदलीस्तम्भवृन्दतोरणमालिकाद्यपरिमितविविधालंकाराः कृता इति, श्वो भावी विवाहमहोत्सव इति सर्वतः प्रथने सति सर्वालंकारालंकृतवैवाहिकमण्डपसविधे गोविन्दस्समायात इति, वरपक्षीया इन्द्रादयस्सर्वेऽपि सुपर्वाणस्समुपास्थितास्सन्तो वैवाहिककार्यवर्गनिर्वाहनिरतास्सन्तीति, ननान्दा दुर्गादेवी मम मन्त्रवासस्संवेष्टनपरा भूत्वा दिव्यकुसुमधारणमप्यचीकरदिति, शिष्टाग्रेसरा वैदिकोत्तमा ब्राह्मणवरिष्ठा नानादिगन्तेभ्यस्तीर्थविशेषान् समानीय समङ्गलाशासनं संप्रोक्षन्निति, कृष्णस्य मम च प्रतिसरबन्धमङ्गलं निरवर्तताति, बह्व्यस्तरुण्यो मङ्गलदीपान् सौवर्णकलशांश्च भृत्वा समागच्छन्तीति, मथुराधनाथो मधुसूदनो भगवान् पादुकाढ्यपादारविन्दस्सन् ध्वनिविशेषमुल्लासयन्नुपैतीति, मुरजादिषु वाद्येषु घोष्यमाणेषु शङ्खनादे च समुज्जृम्भमाणे माधवो मत्पाणिमग्रहीदिति, वैदिकवरेण्येषु पुरुषसूक्तोपनिषदादिपारायणपरायणेषु माधवस्समन्त्रकमग्निकार्याणि निर्वर्त्य अथ मत्पाणिं गृह्णन् होमाग्निं प्रदक्षिणीकृतवानिति, अश्मारोहणमपि सुष्ठु संपन्नमिति, लाजहोमोऽपि यथावदनुष्ठित इति, माङ्गलिकालंकारमयीषु रथ्यासु महागजशिरसि निषद्य परिभ्रमणपूर्वकं दम्पत्योरावयोर्मङ्गलस्नपनमहोत्सवोऽपि संपन्न इति च सर्वमिदं स्वप्नानुभववृन्दमतिमधुरगाथाभिराविष्क्रियत इह ॥

तथाचैतद्दशकसारांशसंग्राहकश्लोक एष इहानुसन्धेयः—

मत्तानां वारणानामयुतमुपनयन् माधवो नन्दसूनुः<br>
नानालङ्कारचित्रं निजगृहममरैस्साकमिन्द्रादिभिश्च ।<br>
आगत्याम्नायघोषैस्सह च मुरजशंखादिनादैश्च पाणिं<br>
जग्राह स्वप्नकाले हरिरिति कथयामास षष्ठेऽत्र गोदा ॥

१. ( वारणमायिरं शूळ ) अयि सखि ! सकलशुभगुणगणभरितः श्रीमन्नारायणः वारणानां सहस्रेण परिवृतस्सन् प्रादक्षिण्येन समायातीति वाद्यघोषादिभिरवधार्य पुरतस्सौवर्णकुम्भान् निधाय कृत्स्नेऽपि नगरे तोरणस्तम्भप्रतिष्ठापनं सम्पन्नम् , तदिदमहं स्वप्नतोऽन्वभवम् ॥ ... (१)

२. ( नाळे वदुवमणम् ) गोदाया गोविन्दस्य च श्वः पाणिग्रहणमहोत्सव इति मुहूर्तसंविधाने कृते सगुच्छक्रमकनोकहप्रतिष्ठापनालंकृतवितानिकाया अधस्तात् नरहरिर्माधवो गोविन्द इत्यभिधाभिराम्नातः कोऽपि युवा प्रविष्टः; तदिदं स्वप्नतोऽन्वभूवं सखि ! । ... ... (२)

३. ( इन्दिरनुळ्ळिट्टदेवर् ) वासवप्रभृतिसुरसमुदायास्सर्वेऽपि समागत्य मां कृष्णकलत्रतयाऽभिभाषमाणा वैवाहिकसमन्त्रणानि चाकुर्वत । अथ ननान्दा दुर्गादेवी मन्त्रवाससा मामलंकृत्य पुष्पधारणं चाचीकरत : तदिदं स्वप्नतोऽन्वभूवं सखि ! ... ... ... (३)

४. (नाल्तिशैत्तीर्त्तङ्गाणन्दु) ब्राह्मणाशिष्टा भूयांसो दिशां चतुष्टयादपि पावनानि तीर्थानि समानीय संप्रोक्ष्य स्वस्तिवाचनमन्त्रांश्च उच्चैरुद्घुष्य पुष्पमालालंकृतभुजेन परमपावनेन दामोदरेण सह मां संयोज्य प्रतिसरबन्धमचीकरन्: तदिदं स्वप्नतोऽन्वभवं सखि !॥ ... ... ( ४ )

५. (कदिरोळिदीपम्) सुन्दर्यो बालवनिताः जाज्वल्यमानान् मङ्गलदीपान् हैमकलशांश्च करतलेषूपगृह्य समागच्छन्त्याभिमुख्येन । तदानीं मथुराधिनाथो वासुदेवः पादुकापरिक्रमितपादतलः सर्वतोऽपि गभीरनिनदमुत्पादयन्नुपागतः; तदिदं स्वप्नतोऽन्वभवं सखि ! ॥ ... ... (५)

६. (मत्तळं कोट्ट) अयि सखि ! मद्दुध्वनिरतिमनोहरः शङ्खध्वनिश्च परमविलक्षणः श्रुतः । अस्यामवस्थायां मधुमदनो भगवान् मौक्तिकमालालंकारभासुरवितानच्छायायामुपागत्य मम पाणितलं परिगृहीतवानहो ! तदिदं स्वप्नतोऽन्वभवम् । ... ... ... (६)

७. (वाय्नल्लार्नल्ल) अयि सखि ! वेदाध्ययनविचक्षणवैदिकाः श्रुतिसुभगवेदराशीनुच्चार्य वैदिकक्रियाकलापानुगुणमन्त्रोच्चारणपूर्वकं कुशकाशपरिस्तरणं चाकलय्य समिधो जुह्वति । तदानीं मदमुदितमातङ्गसन्निभो भगवान् मम पाणिं गृह्णन् अग्निवेदीं परिक्रामति: तदिदं स्वप्नतोऽन्वभवम् ॥ (७)

८. (इम्मैक्कुमेलेल्) अयि सखि ! वर्तमाने जन्मनीव सर्वेष्वपि जन्मसु अस्माकं शरण्यभूतो भगवान् नारायणः परमसुन्दरेण स्वकीयेन पाणितलेन मम पादं परिगृह्य अश्मारोहणमङ्गलमाचरति । तदिदं स्वप्नतोऽन्वभूवम् ॥ ... ... ... ( ८ )

९. (वरिशिलै वाण्मुहत्तु) अयि सखि! विलक्षणप्रभाविभासुरा मम सोदरास्समागत्य जातवेदसं सुष्ठु प्रज्वाल्य तत्पुरतो मामवस्थाप्य नरहरेरच्युतस्य भगवतो हस्तोपरि मद्धस्तं विन्यस्तं कृत्वा लाजहोममचीकरन् । तदिदं स्वप्नतोऽन्वभूवम् ॥ ... ... ... (९)

१०. (कुङ्कुममप्पि) अयि सखि ! घुसृणकर्दमं शिशिरपाटीरपङ्कं च मे वपुष्यभिलिप्य माधवेन सह हस्तिनि वीथीपरिभ्रमणोत्सवमारचय्य मङ्गलस्नानमथाचीकरन्; तदिदं स्वप्नतोन्वभूवम् ॥ (१०)

११. (आयनुक्काह) वैदिकोपगीतयशसो धन्विनव्यनगरीशितुर्भट्टनाथमुनेर्दुहित्रा गोदया स्वात्मनाऽनुभूतं गोपालकृष्णपाणिग्रहोत्सवगोचरं स्वप्नानुभवमधिकृत्य कीर्तितमिदं विशुद्धदिव्यद्राविडगाथादशकमधीयानास्सन्तो विलक्षणसंततिसमृद्धास्सम्मोदेरन् (इति फलकीर्तनेन समापितमिदं दशकम्)॥ (११)

इति श्रीगोदासूक्ते षष्ठदशकविवर्तस्समाप्तः ॥

## सप्तमं दशकम्—करुप्पूरं नारुमो ॥

— अवतारिका —

इतः प्राक्तने दशके गोदादेव्याः परमानन्दसंदोहमयोऽतिविलक्षणोऽनुभवो यद्यपि संपन्नः, तथाऽपि हन्त ! स्वप्नमात्रविश्रान्तस्स समभूदिति जागरणानन्तरं महतो मनःखेदस्य संभावितत्वेन तथा नाम खेदमतिशयितमापद्यमाना गोदा "हा हन्त ! दैवेनाहं सुबहु विप्रलब्धा ह्यभूवम्; स्वप्नानुभवमात्रे हि सर्वं व्यतीतम्; एतादृशे विप्रलम्भे वा विदग्धस्स भगवान्। अस्तु तावत। किमेवमेव स सर्वानपि वञ्चयति ? उत यं कमपि वा जनं पारमार्थिकानुभवप्रदानेन प्रहर्षयति ?" इति हृदि पर्यालोचयन्ती तस्य वामपाणितले नित्यनिवासनन्दथुशाली परमभाग्यसंदोहमयः पाञ्चजन्यो निरन्तरं तदीयदिव्याधरामृतास्वादनेन निर्विशतीति निध्यायन्ती तदीयमप्रतिमभाग्यपरिपाकमधिकृत्य एकतस्संप्रहृष्यन्ती अन्यतश्चाभ्यसूयन्ती भृशं तमेव शङ्खमनारतमचिन्तयत्। भावनाप्रकर्षस्तु तमिमं पाञ्चजन्यं पुरतः प्रत्यभासयत्। तथा नाम प्रतिभासमानं तं संबोध्य भो भाग्यनिधे ! भगवतो नन्दसूनोर्दिव्याधरामृतमजस्रमास्वादयसि खलु; तस्याधरस्य सौरभं तद्गतामृतस्य सौस्वादवं च कीदृशमस्ति ? कथय मे मनाक्; श्रवसाऽपि वाऽहं श्रुत्वाऽभिनन्देयम्। हा शङ्ख ! त्वं तु लवणार्णवेऽजनिष्ठाः; पञ्चजनाख्यस्य दैत्यस्य वपुष्यभ्यवर्धथाः; ईदृशोऽपि सन् भगवतः पाणितलमधिरुह्य आसुरप्रकृतीनामन्तःकरणविदारणं निनदं वितनोषि । अलभ्यलाभः खल्वयं तव। दामोदरस्य हस्ततलं निरन्तरमलंकृत्य तत्कर्णमूले रहस्यमुपदिशन्निव भासमानस्त्वं अवाङ्मनसगोचरविभवशाली ननु। त्वदीयजननभवने त्वया सह जातानि वस्तूनि सन्ति नाम सुबहूनि। तानि पदार्थतयाऽपि गणयन्तो न केऽपि सन्ति। एकाकिनस्तवैव खलु भाग्यमद्वितीयमिन्धे। जगति ते ते दवीयांसि देशान्तराणि गत्वा पुण्यतीर्थविगाहनपरिश्रममधिकमनुभवन्ति। त्वं तु तथा परिश्रमलेशमप्यननुभूय भगवत्पाणितल एव नित्यनिवासभाग्यभाजी सन् असमाभ्यधिकतीर्थविगाहनसुकृतम् अनिशमासादयसि भोः। अरविन्दमधिष्ठाय सदा मधु पिबतो मरालस्येव वासुदेवहस्तारविन्दमध्यासीनस्य तदधरामृतपानमत्तस्य च तव संपदतीव खलु विलक्षणा। तव नित्याशनं तु भगवदधरामृतम्; नित्यनिवासश्च तद्धस्तारविन्दे; ईदृशं त्वां प्रति मादृशो ललनाः कथमिव न दूयेरन् ? * एकः स्वादु न भुञ्जीत * इति नीतिं च न जानासि किमहो त्वम् ? सर्वथाप्यन्याय्यं खलु ते चरितम्। न केवलमहमेकाकिनी तदधरामृतास्वादनलोलुपा। षोडशस्त्रीसहस्राणि हि सन्ति तथा नाम। सर्वसाधारणं परमभोग्यवस्तु यदि त्वमेकाकी भुङ्क्षे, अथ कथमितरास्सुदृश्यो न प्रस्पर्धेरन् ?" इत्येवमुच्चावचभाषितैरात्मीयामसूयां च प्रख्यापयतीह गोदादेवी ॥

तथा चैतद्दशकसारांशसंग्राहकमिदं पद्यम्—

स्वाप्नीं दिव्यानुभूतिं हृदि मुहुरनुचिन्त्याथ नन्दात्मजस्य
श्रीमत्कृष्णस्य वक्त्रे रसभरमनघं सौरभं चातिभोग्यम् ।
पृच्छन्ती पाञ्चजन्यं तदनुभवकलादेशिकाग्रेसरं स्वाम्
ईर्ष्यां प्रख्यापयन्ती कथयति मधुरं सप्तमं सूक्तमार्या ॥

१. ( करुप्पूरम् नारुमा ) अयि गम्भीरधवलपाञ्चजन्य ! कुवलयापीडमत्तवारणदन्तभञ्जनविचक्षणस्य माधवस्य वाचस्सारस्यं सौरभ्यं च साभिनिवेशमहं भवन्तं पृच्छामि । कथय तावदुत्तरम्। किं तस्य प्रवालसन्निभदिव्याधरः कर्पूरसन्निभसौरभशाली ? उत कमलकुसुमसन्निभसौगन्ध्यशाली ? किमहो विलक्षणमाधुर्यशाली ? कथय तावत् ॥ ... ... ... (१)

२. ( कडलिल् पिरन्दु करुदादु ) अयि चारुपाञ्चजन्य ! त्वं खलु लवणार्णवे जनित्वा ततः पञ्च-जनाभिधानस्य दैत्यस्य वपुषि वृद्धिं प्राप्तवानसि । जन्मभूमिवृद्धिभूम्योरवस्थितावेवं स्थितायामपि त्वं भगवतः पाणितलात्मकमुत्तुङ्गस्थानमधिरुह्य वैरिव्रातहृदयभेदननिपुणघोषविजृम्भणविरतो विराजसे । महत् खलु ते भाग्यम् ॥ ... ... ... (२)

३. ( तडवरैयिन्मीदे ) अयि रमणीयमहत्तरपाञ्चजन्य ! पूर्णिमायामुदितं शारदं चन्द्रमसं तुलयन् भवान् उत्तरमधुराधिनाथवासुदेवपाणितले नित्यवासभागी विराजते । तवायं विभवो विलक्षणः ॥ .... (३)

४. ( शन्द्रिरमण्डलम् पोल् ) 'चन्द्रमण्डलमेव दामोदरस्य पाणितलमध्यान्ते' इत्युल्लेखयोग्य पाञ्चजन्य ! तत्र भगवतो हस्ते निरन्तरवासमासाद्य तस्य कर्णमूले रहस्योपदेशं कुर्वन्निव विराजसे । हन्त ! महेन्द्रोऽपि न भवति त्वत्तुल्यविभवः ॥ ... ... ... (४)

५. ( उन्नोडुडने ) भोः पाञ्चजन्य ! भवता सह जलनिधौ कृताधिवासानन्यान् पदार्थान् वस्तु-त्वेनाऽपि हन्त ! न केऽपि मन्वते; सत्यं भवानेक एव खलु सर्वस्वामिनो मधुसूदनस्य वागमृतं नित्यमुप-भुङ्क्ते; महत् खलु भाग्यमेतत्ते ॥ ... ... ... (५)

६. ( पोयूत्तीर्तमाडादे ) यमलार्जुनभञ्जनविचक्षणस्य भगवतः करतलमधिरुह्य विराजमान भोः पाञ्चजन्य ! सुदूरतो गत्वा गङ्गायमुनादिपुण्यतीर्थावगाहनश्रमावकाशमन्तरेण लोकोत्तरतीर्थभूतं पुण्डरी-काक्षस्य वागमृतरूपं दिव्यतीर्थमेव नित्यमवगाहसे ; त्वं खलु कृती ॥ ... ... (६)

७. ( शेङ्गमलनाणमल् मेल् ) सद्योविकस्वरकमलकुसुमे निषद्य मधु पिबन्तं राजहंसं स्मारयन्निव सरसिजनयनस्य नीलमणिनिभस्य वासुदेवस्य करतलमधिरुह्य शयान, भोः पाञ्चजन्य! शङ्खतल्लज ! तव खलु विभवो लोकोत्तरः ॥ ... ... ... (७)

८. ( उण्बदु शोल्लिल् ) भोः पाञ्चजन्य ! तव तु नित्याशनं त्रिविक्रमस्य भगवतो वागमृतम् । शयनस्थलं तु तस्यैव सागरसवर्णस्य भगवतः पाणितलम् । एवं नाम अनन्यसामान्यं दिव्यानुभवं नित्यम-नुविन्दन्तं त्वामधिकृत्य स्त्रीवर्गास्सर्वेऽपि महान्तमाक्रोशमाचरन्ति । ( किमिति? ) अयमस्मदीयजीवनसर्व-स्वापहारीति । एवं स्त्रीजनविषादनमन्याय्यमेव खलु तव ॥ ... .... (८)

९. ( पदिनारामायिरवर् ) अयि महत्तरैश्वर्यभरित पाञ्चजन्य ! षोडशस्त्रीसहस्रप्रतीक्ष्यमाणं माधवस्य वागमृतं हन्त ! त्वमेकाकी खल्वेवमश्नासि । कथमहो त्वया सह न प्रस्पर्धेरन्नितरे जनाः ? ... (९)

१०. ( पाञ्जशन्नियत्तै ) भगवता पद्मनाभेन सह संनिकृष्टसंबन्धशालित्वरूपभागधेयभासुरं पाञ्चजन्यमुद्दिश्य यशस्विभट्टनाथयोगीन्द्रतनयया गोदया कथितमिदं दशकं सविमर्शं ये कीर्तयन्ति, तेऽपि भगवत्सन्निकृष्टा भवितारः ( इति फलकीर्तनेन समापितमिदं दशकम् ) ॥ ... ... (१०)

इति श्रीगोदासूक्ते सप्तमदशकविवर्तनं समाप्तः ॥

## अष्टमं सूक्तम्—विण्णीमेलाप्पु ॥

( श्रीवेङ्कटाद्रीशं प्रति मेघसंदेशात्मकम् )

——: ० :——

### — अवतारिका —

गोदादेव्या भगवद्विरहव्यथा क्रमशोऽभिववृधे । विरहिजनानामरुन्तुदो वर्षाकालश्च समुपनतः । मेघास्तु विद्युद्विलसितस्तनितोपबृंहणादिसनाथा अतिकोमलदर्शना दृष्टिपथातिथीबभूवुः । पुरा संश्लिष्य अथ विश्लिष्य गतवता भगवता "वर्षासु पुनरस्मागमिष्यामि" इति यदुक्तमासीत् तदधुना स्मृतिपथमुपयातं गोदायाः । नीलमेघनिभस्सोऽपि तैर्मेघैस्सह समागतस्स्यादिति गोदा समभावयत् । अप्राक्षीच्च "भो मेघाः ! अस्मत्स्वामी च समागतः कच्चिदि"ति । ते तु न किञ्चिदुत्तरमुदैरिरन् । नापि स भगवान् ददृशे मुकुन्दः । अथ च तेषामेव तोयदानां दूततया प्रेषणं युज्यत इत्यध्यवस्यन्ती "भोः कथयत मद्दशां श्रीवेङ्कटाद्रीशसविधे" इति प्रार्थयितुमुपचक्रमे । तदिदमभिधीयते दशकेऽस्मिन् ।

अत्र च मेघापदेशेन महाभक्ताग्रेसरा एव विवक्षिता वेदितव्याः । ( १ ) मेघो यथा क्षारमपि सागरसलिलं स्वयं निपीय स्वादु वर्षति, तथा श्रुतिसागरगतानर्थान् दुरवगाहानपि स्वादिष्ठानारचय्य सर्वोपभोग्यतया प्रतिपादयन्ति महागुरवः । यथोक्तम् *स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम्* इति । (२) मेघो यथा तत्र तत्र सञ्चरन् वर्षति, तथा महान्तोऽपि क्षेत्रतीर्थयात्रापदेशेन तत्र तत्र पर्यटन्तस्सन्तस्सर्वोपजीव्यानर्थविशेषानभिवर्षन्ति ।(३) जीमूता यथा निम्नस्थलानि वृष्ट्या परिपूरयन्ति, तथा ज्ञानिनोऽपि सदुपदेशवृष्टिभिर्नीचानपि ज्ञानपरिपूर्त्या समुन्नतान् विदधति । ( ४ ) जलदस्तु सर्वदाऽपि न वर्षति; अपि तु कालविशेषेष्वेव । एवं गुरवोऽपि समयविशेषेष्वेव सदुपदेशनिष्णाता भवन्ति । ( ५ ) प्रावृट्कालेषु यदि न वर्षति पर्जन्यस्तर्हि जगति नानाविधाः पीडास्संभवन्ति । एवं समयेषु सदाचार्यसदुपदेशविरहे सति देहात्मभ्रम-स्वस्वातन्त्र्यभ्रम-अन्यशेषत्व भ्रम—स्वरक्षणे स्वान्वययोग्यताभ्रम—अबान्धवेषु बन्धुत्वभ्रम--विषयप्रावण्यादिरूपाः पीडा उत्पद्येरन् । ( ६ ) अत्यधिकं वर्षन्तोऽपि वलाहकाः कदाऽपि तृप्तिं नाधिगच्छन्ति; नापि प्रत्युपकारप्रतीक्षिणो भवन्ति । एवमाचार्या अपि अधिकाधिकमर्थविशेषोपदेशनिरता अपि सन्तो न पर्याप्तिमधिगच्छन्ति; नापि प्रत्युपकारं प्रेप्सन्ति । अनन्यप्रयोजनास्सन्त उपर्युपर्युपदेशानुकूलसमयप्रतीक्षिणस्समुत्कण्ठता एव भवन्ति । (७) तोयदाः कदाचित्कतिपयान् पयःकणान् विकीर्य विरमन्ति; कदाचन तु अलमलमित्युक्तिं जनयन्तो महावृष्टिमुत्पाद्य विस्मापयन्ति । एवं प्राज्ञपुङ्गवा अपि कदाचित्कर्णमूले मन्त्रोपदेश इति कानिचिदक्षराण्युपदिश्य विरमन्ति । अन्यदा तु श्रुतिस्मृतीतिहासपुराणोभयवेदान्तरहस्यसारार्थरत्नामृतानि उद्वेलं सुचिरमुपदिशन्तो हन्त केयं महावृष्टिरिति विस्मयविवशान् विदधति श्रोतृजनान् । (८) वलाहकैः कदाचित्कुत्रचित्सिच्यमानं सलिलं तप्तायःपिण्डे क्षिप्तं जलमिव सद्य एव विन्दत्यसत्कल्पताम् । कदाचिदन्यत्र सिच्यमानमुदकं मुक्ताफलात्मना परिणमति । एवमाचार्यैः कुत्रचिदुपदिश्यमाना अर्था अनवधानविस्मरणादिभिरसत्कल्पतामाप्नुवन्ति । अन्यत्र तु मेधाविष्वनवधि पुष्टिमनुविन्दन्ति । मुक्ताफलवत् श्रीवचनभूषण-उपदेशरत्नमालादिनामभिर्भूषणतामुपयन्ति च । (९) तोयदप्रत्तं तोयं सरित्कूपसरस्यादिषु प्रविष्टं सत् सर्वोपजीव्यं भवति । अन्यत्र प्रविष्टं तत् ग्रहीतुमप्ययोग्यं भवति । एवमभिज्ञैरधिकारिषु सत्पात्रेषु समुपदिष्टा अर्थाः * पूर्वं पूर्वेभ्यो वच एतदूचुः * इत्याम्नातरीत्या सदुपदेशपरम्परायामुपजीव्या भवन्ति । अनधिकारिषु निविष्टास्तु ते निष्प्रयोजना भवन्ति हन्त । (१०) जीमूता अनन्यगतिभिस्सस्यादिभिस्सततं प्रतीक्ष्यमाणा भवन्ति; त एव अर्कक्षुपादिषु वर्षन्तः * त्वयि वर्षति पर्जन्य ! सर्वे पल्लविता द्रुमाः । अस्मा-

क्रमकवृक्षाणां पूर्वपत्रेषु संशयः ॥ * इत्युक्तरीत्या अपायप्रदा भवन्ति । एवं सदाचार्यैरनुगृह्यमाणास्सदर्थ-राशयोऽप्यनन्यगतीनां सच्छिष्याणां सादरं प्रतीक्षणार्हाः, इतरेषां तु * गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना * इत्युक्तरीत्या प्रणाशप्रदाश्च भवन्ति। एवमेवं बहुधा निर्वाहैस्साम्यप्रकारैरिह मेघत्वेन विवक्षितास्सदाचार्या एवेति सुगमम् ।

दशकेऽस्मिन् भगवत्पादारविन्दषट्काग्रणीर्भगवान् भाष्यकारो रामानुजो यतिराज एव मेघत्वेन संबोध्यत इति प्रत्येकमस्यामपि गाथायां विन्यस्तैर्विशेषणैस्सुगमम् । तत्र क्रमशस्तत्तद्गाथासूपपादयिष्यते । एतद्दशकसारांशसंग्राहकमिदं पद्यम् :—

तत्तादृग्दिव्यभोगानधिगमजमहादुःखनिर्विण्णचित्ता
जीमूतान् पूर्णगर्भान् नयनहररुचो वीक्ष्य संबोध्य चैनान् ।
संश्लिष्येद्वेङ्कटेशो यदि कुचघुसृणक्षोदलोपं दिशन्मे
जीवेयं ब्रूत तस्मा इदमिति गदति स्माष्टमे दिव्यगोदा ॥

१. ( विण्णीलमेलाप्पु ) व्योम्नि विस्तृतवितानसोदरा भो घनाः ! स्वच्छतीर्थप्रवाहशालि-श्रीवेङ्कटाद्रिनाथो भगवानपि किं युष्माभिस्सह समानयौ ? चूचुकनिष्यन्दिनीभिरश्रुधाराभिरवसीदन्तीमिमां स्त्रियं ( माम् ।) एवं नाम व्यथयति सः ; किमिदं तस्य महिम्नोऽनुरूपम् ? तदिदं तमेव पृच्छत ॥ [ अस्यां गाथायां * व्योम्नि विस्तृतवितानसाधर्म्यं यदभिधीयते मेघे, तेन दूतत्वेनात्र विवक्षितस्य भगवद्रामानुज-मुनेरवताररहस्यमवबोध्यत । आदिशेषावतारो हि रामानुजः । स एव हि शेषः पुरा मथुरातो निशीथे घनवृष्टिकाले वसुदेवेन व्रजं नीयमानस्य कृष्णशिशोर्वितानभावमाससाद । तथा चात्रत्यो वितानशब्द आदिशेषस्यानेकस्सन् तदपरावताररूपतां यतिराजे स्फोरयतीति बोध्यम् । * तोडुत्तु मेल् वितानमाय पौवनीररावणै * इति तिरुच्चन्दविरुत्तगाथयाऽपि शेषस्य वितानशब्दवाच्यता वेदितव्या ॥ ... (१)

२. ( मामुत्तनिदिशोरियुम् ) मुक्ताफलानि च निधींश्च वर्षन्तो भोः पयोदाः ! वेङ्कटाद्रिनिवा-सिना श्यामसुन्दरेण भगवता संदृष्टा कच्चिदस्ति काऽपि वार्ता ? अन्तः प्रसृमरकामाग्निदन्दह्यमानाऽहं हन्त ! राज्या च मलयपवनेन चातिमात्रं व्यथां प्रापिताऽवसीदामि; आः किमिदमुचितं नाम ॥ [ अत्र मुक्ताफलानां निधीनां ज वर्षकत्वं यदभिहितं मेघे, तेन चाववोध्यते—भगवान् भाष्यकारो नवनिधिकल्पानि नवग्रन्थरत्नानि मौक्तिककल्पान् दिव्यापदेशसूक्तिनिकरांश्च सृजति स्मेति । यथा निधयो नव, तथा भगव-द्रामानुजदिव्यग्रन्थरत्नान्यपि नव हि ॥ ] ... ... ... (२)

३. ( ओलिवण्णम् वलैशिन्दै ) अयि दयाघना घनाः ! मम सौन्दर्यं लावण्यं वलयततिः हृदयं निद्रा चेत्येतत्सर्वमपि मम दैन्यमवेक्ष्य मां विहाय दूरतोऽपससर्प । शिशिरनिर्झरालंकृतवेङ्कटाद्रीशितुर्गोवि-न्दस्य गुणगणानुसन्धानत एवाहं प्राणधारणप्रवीणाऽस्मि ॥ [अत्र, मेघे दयाघनत्वाभिधानं भगवद्रामानुज-मुनेः परमकृपैकतानत्वं द्योतयति । रामानुजमुनेरन्ये पूर्वाचार्या ज्ञानवृत्तिप्रसन्नाचार्याः, असावेक एव केवलं कृपामात्रप्रसन्नाचार्य इति सर्वजनीनप्रसिद्धिसद्भावादस्यैवाचार्यसार्वभौमस्येह विवक्षितत्वमतितरां स्पष्टम् । श्रीमद्वरवरमुनीन्द्रैरप्युपदेशरत्नमालायाम् * ओराण् वलियाय् * इत्यनया गाथया विशदीकृत-मस्य गुरुवरस्य कृपाघनत्वम् ॥ ] ... ... ... (३)

४. ( मिन्नाहत्तेलुहिन्नमेहङ्गाल् ) भो विद्युद्भास्वरदिव्यदेहा मेघाः ! श्रीवेङ्कटाद्रिनिलयस्य निजवक्षस्थलाहतलक्ष्मीकस्य भगवतस्सविधे निवेदयत स स्वकीयेन वक्षसा मम कुचकुड्मलसंश्लेषं क्रियादिति मे समुत्कण्ठा समेधत इति । [ अत्र विद्युद्भास्वरदिव्यदेहत्वं यदभ्यधायि मेघे, तेन बहवो विशेषा इह स्फोर्यन्ते । वर्षुकवलाहकेष्वेव विद्युद्भानम्, न तु साधारणमेघेष्विति प्रसिद्धम् । सन्ततमर्थविशेषरूपदिव्यामृतप्रधानैकनिरतो यतिपतिरिति कथितं भवति । किञ्च, दिव्यवपुषि विद्युद्विलसितकथनेन भगवति रामानुजे सौदामनीसवर्णसौवर्णयज्ञसूत्रभानं कथितं भवति ! * जयति यतिपतेर्वक्षसि ब्रह्मसूत्रम् * उपवीतिनमूर्ध्वपुण्ड्रवन्तम् * दण्डत्रयोज्ज्वलकरं विमलोपवीतम् * इति हि विशिष्य स्तुवन्ति भक्ताग्रसराः । मतान्तरीययतीनां वेषादपि वैलक्षण्यमवश्यमभिधेयं हि । किञ्च, विद्युत्सन्निभकाषायाम्बरशालित्वमपि विवक्षितमिह सुवचम् । * काषायेण गृहीतपीतवसनेति देशिकोक्तिरिह ध्येया ॥ ... ... (४)

५. ( वान्कोण्डुकिलन्दॆलुन्द ) अन्तरिक्षं समाक्रम्य समुदित्वरा भो मेघाः ! श्रीवेङ्कटाद्रौ मधुस्यन्दिनः पुष्पनिकरानुपमर्द्य वृन्दशो वर्षन्तो भो मुदिराः ! दृढतरनिशितनखरैर्हिरण्यवक्षःकवाटभेदनविशारदो भगवान् स्वेनापहृतानि मदीयवलयानि यदि प्रत्यर्पयितुमिच्छति तर्हि तन्निगदत मह्यम् ॥ (शरीरकार्श्यमेव वलयापहारमिषेण कथ्यते । अपहृतवलयप्रत्यर्पणं नाम— शरीरकार्श्यापनोदनमेव । तच्च संश्लेषजन्यमिति संश्लेषस्यैवात्र विवक्षा वेदितव्या । ) अत्र, अन्तरिक्षं समाक्रम्य समुदित्वरत्वं मेघे कथ्यते । अन्तरिक्षपदमिह परमाकाशाख्यवैकुण्ठशब्दि । भगवद्रामानुजदिव्यपादारविन्दानुबन्धविधुराणां दिव्यधामप्राप्तिकथाऽप्यसंभविनीति संप्रदायः । यतीन्द्रः स्वयमेव वैकुण्ठधाम वितरितुं प्रभविष्णुरित्यनवद्यस्सिद्धान्तः । तथा च * अन्तरिक्षं समाक्रम्य समुदित्वर ! इत्युक्तिः स्वाधीनपरमपददातृत्वोक्तिपर्यवसितेत्यवसेयम्॥) (५)

६. ( शलम् कोण्डु किलन्दॆलुन्द ) जलं गृहीत्वा सरभसं समुत्थिता भो वलाहकाः ! महाबलिसकाशान्महीमण्डलमायतीकृतवता भगवता सनाथे वेङ्कटाद्रौ निषद्य वर्षन्तो भो घनाः ! कीटविशेषोपभुक्तकपित्थफलवन्माम् अन्तस्सारविधुरामाकलय्य मत्तस्सर्वस्वापहारं कृतवतो नारायणस्य सविधे कथयत मम महतीं मनोव्यथाम् ॥ [ जलग्रहणपूर्वकमुत्थितत्वं मेघे यथा प्रसिद्धं तथा भगवद्रामानुजेऽपि । काञ्चीपुर्यां शालकूपतीर्थं गृहीत्वा समुत्थितः खलु । तथा चोक्तं यतिराजसप्ततौ * वृतं येन दयासुधाम्बुनिधिना पीत्वा विशुद्धं पयः काले नः करिशैलकृष्णजलदः काङ्क्षाधिकं वर्षति * इति । किञ्चात्र, द्राविडशब्दमर्यादयाऽवलोकने सति '' छलं गृहीत्वा सरभसं समुत्थिते '' इत्यपि अनुवादो युज्यते । यादवप्रकाशसकाशे ब्रह्मविद्यामधीयाने रामानुजे वेदान्तार्थविषयका वादविवादास्तदा तदा बभूवुरुभयोः । अन्ततश्च असूयाप्रवृद्धया यादवस्य रामानुजजिघांसा समजनि । गङ्गायां निपात्य हननमपातकमित्यध्यवस्यन् प्रतस्थे सशिष्यगणोऽथ यादवः । सह प्रस्थितेष्वन्तेवासिषु रामानुजार्यगोविन्दार्यावप्यन्यतमौ । गच्छत्सु चैवं सर्वेषु विन्ध्याटवीप्रान्ते यादवस्य छलं [ कपटाभिप्रायम् ] गृहीतवान् [ ज्ञातवान् ] रामानुजः । गृहीत्वा च सद्यः प्रतिनिवृत्त इति कथा प्रथिता । सैवात्र श्लेषतस्सुष्ठु व्यञ्जिता । छलग्रहणसमनन्तरमेव जलग्रहणमपि जातं रामानुजस्येति उक्तिचारुता चात्र वर्तते ॥ ] ... ... ... (६)

७. ( शङ्गमाकडल् कडैन्दान् ) शङ्खालंकृतमहोदधिमथनपटुना भगवता सह संबन्धसम्पन्ना भोः शिशिरपयोदाः ! श्रीवेङ्कटाद्रीशितुः पुण्डरीकाक्षस्य दिव्यपादारविन्दपरिसरे दास्या मम विज्ञप्तिरेषा विज्ञाप्यनीया—यथा मम कुचतटलिप्तघुसृणपङ्कविलोपदायकं संश्लेषं यदि स सकृदपि वा कुर्यात्तदेव मे प्राणधारणं भवितेति ॥ [ अस्मिन्दिव्यप्रबन्धे प्रथमदशकीय—अष्टमगाथायाम्, चतुर्थदशकीयप्रथमगाथायां च भगवच्चरणारविन्दपरिचर्यायामेव स्वकीयामतिशायिनीमुत्कण्ठामाविष्कृतवती सेयं गोदादेवी कथमिह स्तनसंश्लेषरूपे प्राकृतभोगे प्रकाशयत्यौत्सुक्यमिति काचन शङ्का भवेदिह । अत्रोच्यते: अन्यापदेशमर्यादयैवात्र

स्तनशब्दः प्रायोजि । भोगोपकरणभूतवस्तुवाची स्तनशब्दो भगवदनुभवोपकरणभूतां भक्तिसंपदमेवाचष्टे । स्तनयोः स्थाने ज्ञानभक्ती ग्रहीतव्ये । ज्ञानभक्तियुक्तानामेव परिपूर्णभगवदनुभवयोग्यतासंभवात् । स्तनयोः घुसृणपङ्कलेपलोपकाङ्क्षणं यदिहास्ति तस्य च हृदयमेतत्—ज्ञानभक्त्योः स्वाभाविकाकारः आरोपिताकारश्चेति आकारद्वितयमस्ति तावत् । भगवदनुभवैकविषयकत्वं स्वाभाविकाकारः । विषयान्तरविषयकत्वं तु आरोपिताकारः । तथा च आरोपिताकारस्य लोपो भूयादिति काम्यतेऽत्र । लोके स्तनयोर्घुसृणपङ्कलेपनमारोपिताकार एव हि । तेन च स्वाभाविकसुषमाच्छादनं भवति खलु । तथाऽत्र माभूदिति कामना ननु युज्यते । किञ्च, रक्तवर्णघुसृणक्षोदलोपप्रार्थनं च रजोगुणलुपणप्रार्थनायां पर्यवस्यति । रजोगुणमेव यो न सहते तस्य तमोगुणान्वयासहिष्णुता कैमुतिकन्यायसिद्धा । एवं च शुद्धसात्त्विकज्ञानभक्त्यभिवर्धनमिह प्रार्थितं भवतीति न किञ्चिदवद्यम् । गाथायामस्यां महोदधिमथनपटुना सह संबन्धः पर्जन्ये कथितः । सुरेभ्यस्सुधां प्रदातुं सागरं ममन्थ भगवान् हरिः । तद्दास्यरूपसंबन्धः पर्जन्ये संगतः । * भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः * इत्याद्युपनिषदाम्नातप्रक्रियया वायुसूर्याग्नीन्द्रादीनामिव पर्जन्यस्यापि भगवदाज्ञावर्तित्वमहिम्ना तावदेव मुक्तिः । ( अथ भगवद्रामानुजविवक्षायां तु ) भूसुरेभ्यस्सकलभक्तेभ्योऽपि भोग्यां वचस्सुधां प्रदातुं * निर्मथ्य श्रुतिसागरादित्युक्तरीत्या चतुर्वेदसागरमथनं कृतवतः पर्यायश्रीपतेः श्रीपराङ्कुशमुनेरनुबन्धित्वं रामानुजमुनौ वेदितव्यम् । * श्रीमाधवाङ्घ्रिजलजद्वयनित्यसेवाप्रेमाविलाशयपराङ्कुशपादभक्तमिति हि तदभिष्टुतिः प्रथते । ] ... ... ... ... (७)

८. ( कार्हालत्तुडिन्न ) भो वेङ्कटाद्रिनिकेतना वर्षाकालसमुत्थिताः पर्जन्याः ! समराङ्गणेषु समुपस्थाय विरोधिनिरसनं वितन्वानस्य तस्य महाप्रभोर्नामानि संकीर्त्य वर्षासु अर्कपत्रवदवशीर्यमाणां मामुद्दिश्य हन्त ! चिरात्सकृदपि स्वकीयामनुग्रहमयीं करोति न खलु स महिमेति ॥ [ अत्र, पर्जन्ये वर्षाकालसमुत्थितत्वकथनेन * अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि । भगवन् भवदुर्दिने पथः स्खलितं मामवलोकयाच्युत ! * इति श्रीयामुनाचार्यफणितिप्रक्रियया नित्यं निखिलैस्स्वयमनुभूयमाने सांसारिकदुःखवर्षाकाले तत्प्रशमनाय समुदितस्स भगवान् भाष्यकार इति बोध्यते । यद्वा * देवराज दयासिन्धो देवदेव जगत्पते ! । त्वदीक्षणसुधासिन्धुवीचिविक्षेपशीकरैः । कारुण्यमारुतानीतैः शीतलैरभिषिञ्च माम् * इति श्रीकाञ्चीपूर्णमुनिना, * हस्तीश ! दुःखविषदिग्धफलानुबन्धिन्याब्रह्मकीटमपराहतसंप्रयोगे ... इति श्रीवत्साङ्कगुरुणा च प्रोक्तरीत्या प्रार्थिते भगवत्कटाक्षामृतवर्षाकाले तत्सन्धुक्षणाय समुत्पन्नोऽयं श्रीरामानुजकालमेघ इत्यपि सुवचम् ॥ ] ... ... ... ... ... (८)

९. ( मद्यानै पोलेलुन्द ) मत्तवारणवदुत्थाय दर्शनं दिशन्तो वेङ्कटाद्रिनिकेतना भो नीलजलदाः ! फणिशयनस्य भगवतो वार्ता काऽपि विद्यते कच्चित् ? सततमप्याश्रितानां शरणमिति प्रथितस्स भगवान् तां प्रथामविगणय्य कामपि बालिकां ( माम् ) यदि हिनस्ति, हा बत ! तमेनं स्त्रीनृशंसं न खलु लोकोऽभिनन्देत ॥ [ अत्र भगवद्रामानुजमुनेर्मत्तवारणत्वेन कथनमतितरामौचित्यभरितम् । ऐतिह्यं चैतदिह स्मरणीयम् । पुरा कदाचिद्भगवान् भाष्यकारस्सह शिष्यवर्गैः श्रीवेङ्कटाद्रिमधिजगाम । तदात्वे तत्र स्थिता महान्तः पादारविन्दमूले प्रणिपत्य कांश्चिदर्थविशेषानुपदेष्टुमर्थयन्त स्म । प्रार्थनां च तामुररीकृत्य गुरुवरो यतिपतिर्मन्त्ररत्नस्यार्थविशेषान् प्राधान्येनोपादिशन् मूलमन्त्रचरमश्लोकयोरप्यर्थं समगृह्णात । अवसिते चास्मिन् मधुरललितोपदेशे श्रोतृष्वन्यतमोऽनन्तार्यः [ अनन्दाऴ्वान् ] समुत्थाय " द्राविडाम्नायेषु श्रीभूतयोगिनाऽनुगृहीते द्वितीयान्तादिदिव्यप्रबन्धे * पेरुहुमदवेऴम् * इत्युपक्रमशालिनी या गाथा विराजते तस्या हार्दमाशयमद्यैव वयमवगन्तुं भाग्यमलभामहि " इति विज्ञाप्य, तस्या भूतयोगिसूक्तेरर्थं सुविशदमुपन्यास्थत् । तस्या गाथायास्संस्कृतविवर्तरूपमस्मदीयमिदम्–अवन्मदजलः करी स्वदयितां पुर-

स्कृत्य सन् द्विपर्वसहितं मृदुं मधुरं वेणुदण्डाङ्कुरम् । प्रगृह्य सन्निधस्थिते मधुनि मेलयित्वाऽथ तां प्रभोजयति यत्र वै स खलु वेङ्कटाद्रिर्हरेः ॥ इति । तत्रतत्र शैलेषु चरन्तः करिणः करिण्यां प्रेमभूम्ना (पर्वद्वयविशिष्टम्) वेणुदण्डाङ्कुरमुत्खाय तं मधुनि मिश्रयित्वा करिणीं प्राशयन्तीति वस्तुस्थितिः । स्वभावोक्तिरियम् । एवमेव श्रीवेङ्कटाद्रिवर्णनेऽत्र श्रीभूतयोगिनाऽन्वग्राहि । अन्यापदेशगाथा सेयमिति महतां महामतीनां प्रतिपत्तिः । रामानुजमुनिरेवात्र करिवरत्वेन कथ्यते । अभिमता शिष्यमण्डली करिणीत्वेनापदिश्यते । खण्डद्वयात्मकं मन्त्ररत्नं [ द्वयमन्त्रः ] पर्वद्वयसहितमृदुमधुरवेणुदण्डाङ्कुरत्वेनाभिधीयते । मूलमन्त्रश्चरमश्लोकश्च सन्निधस्थितमधुत्वेनोपवर्ण्येते । वस्तुतः श्रीमन्नारायणवदनारविन्दविनिर्गलितं मधु खलु तद्द्वितयम् । द्वयमन्त्रस्य तस्मिन्मधुनि संमिश्रणं नाम-मूलमन्त्रचरमश्लोकार्थसंवलितद्वयार्थवर्णनमेव । एवं भगवान् मधुरतरार्थवर्णनेनास्माननुग्रहीष्यतीति पुरैव प्रत्यग्दशा समीक्ष्य भूतयोगी बभाषे—इति तावदनन्तार्योपन्यासः सर्वस्वम् । एतेन च मत्तवारणत्वं भगवति रामानुजे सूपपन्नं वेदितव्यम् ॥ ] (९)

१० ( नाहत्तिनणैयानै नन्नुदलाल् ) विलक्षणललाटशालिनी, भगवदनुभवेषु सर्वप्रकारेष्वपि सेवकस्य भट्टनाथमुनेरात्मजा गोदा नागशयं वेङ्कटाद्रीशं कामयमाना मेघसन्देशविज्ञापनात्मकमिदं दशकं द्राविड्या गिरा समगिरत । तदिदं हृदि बिभ्राणा मुखे च कथयन्तो भागवता नित्यकिङ्करा भवितारो भगवतः ॥ इति फलकीर्तनेन समापितमिदं दशकम् ॥

इति श्रीगोदासूक्ते अष्टमदशकविवर्तस्समाप्तः ॥

---

## नवमं दशकम्—शिन्दुरच्चेम्पोडिप्पोल्

— अवतारिका —

अग्रतो दृष्टिगोचरतां गतान् कालमेघान् संबोध्य ' यूयं श्रीवेङ्कटाद्रीशभगवदन्तिकं प्राप्य मामिकां दशां तत्सन्निधौ विज्ञाप्य तेन सह मां घटयत भोः ! ' इति बहुधा प्रार्थयतेस्म गोदा प्राक्तनदशके । एवं नाम प्रार्थितास्ते तु मेघा अस्याः कामनामनिर्वर्त्य स्वकार्यमेव कार्यं सुष्ठु चक्रिरे । सलिलवर्षणं हि स्वकार्यं कार्यं मेघानाम् । तदेव ते सम्यगकार्षुः । स्वयः एव सुबहूनि पुष्पाणि वर्षाकालोचितानि मुखं दर्शयितुमुपचक्रमिरे । साक्षाद्भगवन्तमेव दिदृक्षमाणायास्तस्यास्तद्दर्शनं तद्दिव्यावयवस्मारकवन्यकुसुमसंदर्शनं च महत्यै वेदनायै कल्पते स्म । न केवलं कुसुमानामेव दर्शनमभूत ; वर्षासु ये ये जन्तवः इन्द्रकोपकोकिलकेकिप्रभृतय इतस्तत उद्गन्तुमर्हन्ति तेऽपि बहुश उद्गताः । तेषां दर्शनेनापि व्यथा ववृधेऽस्याः । तादृशीं व्यथामसह्यां व्याहरति सेयमस्मिन् दशके । एतद्दशकसारांशसंग्राहकमिदं पद्यम्—

> संदिष्टस्सोऽय मेघो निजसलिलभरं सर्वतश्चाभिवर्षन्
>
> नानापुष्पाणि हृद्यान्यभिनवसुषमान्युद्गमय्य प्रयातः ।
>
> तेषां वीक्षामसह्यां भृशमभिदधती श्रीवनाद्रीशभोग्यं
>
> स्वाद्वन्नं चार्पयन्ती निजमुखवचसा लक्ष्मणार्यस्वसाऽभूत् ॥

१. ( शिन्दुरच्चेम्पोडिप्पोल् ) वनाद्रिमान्तेषु कृत्स्नेष्वपि हन्त ! मद्वल्लभाधरसंस्मारका इन्द्रकोपा रक्तसिन्दूरचूर्णवत् हन्त ! समुत्थितास्सर्वतः मत्तमराश्च बाधन्ते । पुरा मन्दराद्रिं मन्थानमाकलय्य अतिमधुरामृतं स्वीकृतवता सुन्दरबाहुना भगवता संपादितं मायाजालमिदमतिलङ्घ्य कथमहं जीविष्यामि

भो । (गाथायामस्यामुत्तरार्धस्य हार्दभावं श्रीवत्साङ्कमिश्रो गुरुवरः सुन्दरबाहुस्तवे * उदधिगमन्दराद्रिमथिमन्थनलब्धपयोमधुररसेन्दिराह्वसुन्दरदोःपरिघम् * इत्यनया सूक्त्या विशदीकृतवान् । तदिदमत्रानुसन्धेयम् ; अस्मदीयतद्व्याख्यया सह । समुद्रमथनतः स्वीकृतमतिमधुरामृतम्— इन्दिरैव ॥ ... (१)

२. ( पोर्क्कोळिरुपोरुम ) वप्रक्रीडापरिणतगजप्रेक्षणीयस्य वनाद्रेः परमरमणीयेषु सानुषु प्रफुल्लानि यूथिकाकुसुमानि हन्त ! संदर्शयन्ति मद्वल्लभस्य वनाद्रिनाथस्य शुचिस्मितम् । किंच वन्यलताविशेषाश्च कोरककुसुमादिकं संदर्शयन्तो हन्त ! कृष्णस्य हसितं संस्मारयन्ति । तदिदमवलोक्य नाहमात्मानं धारयितुं प्रभवामि । अन्यानि च वन्यकुसुमानि ' किमहो गोदे ! अस्मानवलोक्यापि किं त्वं जीविष्यसि ' इति परिहसन्तीव । हन्त ! अयि प्राणसखि ! मदीयस्पृहाविषयभूतया तदीयभुजमालिकया संपाद्यमानं परिभवं कस्य सकाशे कथयेयम् । ) भगवतो भुजमालिकायाः प्रप्सयैव खलु एतावदनर्थजातमहमनुभवामीत्युक्तं भवति । ) ... ... ... ... ... (२)

३. ( करुविळैयोण्मलर्काळ् ) भोः काकणकुसुमानि ! अतसीकुसुमानि च ! मदीयानुरागलक्ष्यभूतस्य श्रीमाधवस्य दिव्यमङ्गलविग्रहच्छायां संदर्शयथ यूयम् । आः कथमहं जीवेयम् ? कथयत । अन्यमपि कमप्यनर्थं निशमयत । श्रीमहालक्ष्मीविहारस्थलायितदिव्यबाहुर्भगवान् वनाद्रिनाथः सुन्दरबाहुः मम गृहान्तः प्रसभं प्रविश्य मत्करवलयापहरणं यदकुरुत तत्किमहो न्याय्यम् ? [ टिप्पणी— भगवान् स्वयमेवागत्य संश्लिष्य विश्लिष्टो हन्तेति कथनमेव चरमवाक्यपरमतात्पर्यम् । करवलयापहरणकथनं स्वशरीरकार्श्याभिधाने पर्यवस्यति । तेन च विश्लेषो व्यञ्जितो भवति ॥ ... ... (३)

४. (पैम्पोळिल् वाऴ् कुयिल्काळ् मयिल्काळ्) उद्यानवननिवासिनो भोः कोकिलाः ! केकिनः ! काकणप्रसवाः कलाफलानि ! सुरभिरमणीयान्यतसीकुसुमानि च ! भोः, पञ्चमहापातकिनः खलु यूयम् । रमणीयकाननाद्रिमधिवसतो भगवतस्सावर्ण्यं किमर्थमहो युष्माकं समघटत ? ( मम वधार्थमेव ननु ? ) [कोकिलाः केकिनः काकणप्रसवाः कलाफलानि अतसीकुसुमानि च भगवतो दिव्यमङ्गलविग्रहस्मारणमुखेन स्वात्मनो मारणं कुर्वन्तीति हृदि निधाय तेषां पञ्चानां वस्तूनां पञ्चमहापातकित्वेन कथनमत्र वेदितव्यम् । ] ... ... ... ... ... (४)

५. ( तुङ्गमलर् प्पोळिल्शूऴ् ) उच्चैः प्रफुल्लकुसुमालंकृतोद्यानपरिवृतवनगिरिमधितस्थुषः पुण्डरीकाक्षस्य नीलमेघनिभस्य भगवतो दिव्यमङ्गलविग्रहसवर्णा भोः कुसुमनिषण्णमधुपव्राताः ! भो स्पृहणीयतटाकाः ! भोस्तटाकस्थनळिनकुसुमानि ! युष्मासु यमकिंकरताधियं वहन्त्या मम किमपि शरणं प्रदर्शयत । [ गाथायामस्यां निर्दिष्टानां वस्तूनामुद्दीपकत्वातिशयो वेद्यः । ] ॥ ... (५)

६. ( नारुनरुम्पोळिल् ) श्लोकरूपो विवर्तः—

सुगंधिवनसन्तति प्रचुरकाननाद्रिप्रभोः कटाहशतसंभृतं सुनवनीतमत्यादरात् ।
समार्पिपमथो तथा मधुरशर्करान्नं गिरा श्रियः पतिरुपेत्य ते किमुररीकरिष्यत्युभे ॥ (६)

७. ( इन्रु वन्दित्तनैयुम् ) श्लोकः—

सुगंधिमलयानिले वनगिरौ मुदा तस्थिवान् मुकुन्द उपगम्य मे हृदयमद्य संभूषयन् ।
मयार्पितमिदं द्वयं यदि निषेवते तर्हि तत वितीर्य च सहस्रशः परिचरेयमात्यन्तिकम् ॥ (७)

[ टिप्पणी—षष्ठसप्तमगाथाद्वितयेन श्रीवनाद्रीशस्य सुन्दरबाहोर्भगवतो भोग्यं भाण्डशतकभरितनवनीतशर्करान्नरूपं स्वादु भोज्यं वाचा समर्प्य तत्स्वीकारप्रार्थना क्रियते । अत्यधिकवेदनानुभवप्रकाशनप्रकरणेऽस्मिन् स्वादु भोज्य कथनप्रसक्तिः कास्विदिति शङ्का संभविनी । अत्रेदमवधेयम् । असह्यवेदनासंभवसमयेषु द्वयाख्यमन्त्ररत्नानुसंधानं महतामाचाररूढम् । तेन कथंचिद्वेदनायाः परिहारो भवेदिति । गोदा च तथा मन्त्ररत्नमनुसंदधे । तत्र च उत्तरखण्डं पुनः पुनरावर्तयामास । कैंकर्यप्रार्थनाप्रकाशनं हि उत्तरखण्डकृत्यम् । अधुना कायिकं कैंकर्यं किमपि कर्तुमक्षमा सैषा वाचिककैङ्कर्ये निष्णाता सती स्वादुभोज्यसमर्पणकुतूहलं वाचा न्यवेदयदिति । ] ... ... ... ... (६--७)

८. ( कार्कॆयल्कुन्दिरुन्दु ) शितिवर्णटिट्टिभगणाः प्रत्यूषे समुत्थाय वनाद्रिनाथस्य द्वारकापुराधीशस्य वटदलशायिनस्सर्वेश्वरस्य वार्ता उद्गृणन्ति । एवं नाम आश्रितजनव्यामुग्धस्य तस्य शुभागमनसूचनपूर्वकम् अव्यक्तमधुरभाषितभाषणमेतैः क्रियमाणम् अपि नाम यथार्थं भविता ? ... ... (८

९. ( कोङ्गलरुम् पोळिल् ) विकस्वरसुरभिमहीरुहाढ्यारामपरिवृते श्रीवनाद्रौ रौद्रवृक्षोद्भवैर्हिरण्मयपुष्पसंचयैस्समं हन्त ! अहमपि मोघजन्मा भवति । स्पृहणीयदिव्याधरपुटाध्मातपाञ्चजन्यध्वनिः शार्ङ्गज्यानिनदश्च कदा नु मम सन्निकृष्टौ भवितारौ ?

[ टिप्पणी—भाषायां "कोन्रै" इति व्यवह्रियमाणो भूरुहो रौद्रवृक्ष इत्युच्यतेऽत्र । रुद्रपूजार्हकुसुमस्रष्टा ह्ययमनोकहः । श्रीवनाद्रौ एषा वृक्षजातिरस्ति वृन्दशः । एतत्कुसुमानि नित्यं तत्र विशेषतस्समुद्भवन्ति । रुद्रादिदेवतान्तराराधनैकयोग्यानीमा न पुष्पाणि देवतान्तरभक्तैरेव खल्वाद्रियेरन् । देवतान्तरभक्ता राजसास्तामसाश्च तत्र नैव गच्छन्ति । श्रीमन्नारायणैकभक्तास्सात्त्विका एव तत्र समागच्छन्ति । तादृशाः परमैकान्तिनस्तानि कुसुमानि न चक्षुषाऽपि वीक्षन्ते । अतश्च तत्रत्यानि कुसुमानि सर्वथा निरर्थकजन्मान्येव भवन्ति । तथैव स्वस्य जन्मापि भगवदनुभवयोग्यताविधुरं सत् व्यर्थमेव भवतीत्यवसादः प्रकाश्यतेऽत्र गोदादेव्या । पाञ्चजन्यध्वनेः शार्ङ्गज्यानिनदस्यच शुश्रूषाप्रकाशनं यदत्र क्रियते तत्र चैतद्वेदितव्यम् । पुरा रुक्मिणीदेव्यास्सीतादेव्याश्च यत् ध्वनिद्वितयमाप्यायनमकार्षीत्तदेव ध्वनिद्वितयमनयाऽपि गोदादेव्या कांक्ष्यते । रुक्मिणीदेव्याशिशुपालेन सह पाणिग्रहणनिर्वर्तनं यदा निर्धारितमासीत्तदा सा देवी कृष्णभगवत्संनिधिं प्रति ब्राह्मणं कमपि प्रेषितवती । सोऽपि न प्रत्यावृत्तः । कृष्णभगवानपि न सन्निहितः । शिशुपालस्तु पाणिं ग्रहीतुं त्वरते । रुक्मिण्याः प्राणास्तु निर्गमनसज्जा एव सन्ति । तस्यामवस्थायां सरभसमागच्छन् भगवान् वासुदेवो दूरादेव ब्रह्मानन्दसंदोहसन्दायकं शङ्खध्मानं वितेने । तन्निनदश्रवणेन सा देवी परमानन्दकन्दलितस्वान्ता समजनि ॥ अशोकवनिकामधिवसन्तीं वैदेहीं प्रलोभयितुकामो दशाननो विद्युज्जिह्वसहायस्सन् असिधाराविलूनं मायारामशिरः प्रदर्श्य तां अतिमात्रं विषादयमास ; तस्यामवस्थायां भगवान् रामचन्द्रो लङ्काद्वारसन्निहितस्सन् स्वकीयशार्ङ्गज्यानिनदमतिमात्रगर्भीरमधुरमुदभावयत; तदाकर्णनेन सीतादेवी सा निरुपमनन्दथुसिन्धुमग्नमानसा संवृत्ता । एवं नाम दिव्यमहिषीद्वितयप्रीणन निनदद्वितयं गोदादेवी स्वयं शुश्रूषते । ] ... ... .... ... (९)

१०. ( शन्दोडु कारहिलुम् शुमन्दु ) चन्दनकाष्ठान्यगुरुकाष्ठानि च समूलं प्रवहन्त्या कूलंकषप्रवाहसंभृतया नूपुरापगया परिवृतं वनाद्रिमधितिष्ठन्तं भगवन्तं सुन्दरबाहुमधिकृत्य मुखरभ्रमरकुन्तलशालिन्या गोदया संकीर्तितमिदं द्राविडदिव्यगाथादशकमधीयानास्सन्तःसर्वेश्वरपादभाजस्स्युरिति फलकीर्तनेन समापितमिदं दशकम् ॥ ... ... ... ... (१०)

इति श्रीगोदासूक्ते नवमदशकविवर्तस्समाप्तः ॥

## दशमं सूक्तम्—कार्क्कोडल् पूक्काळ् ॥

---

— अवतारिका —

पूर्वदशके यो निर्वेदस्समजनि गोदायाः स दशकेऽस्मिन्नप्यनुवर्तते, भृशमभिवर्धते च । पुरा दृष्टाश्च संदिष्टाश्च ये मेघास्ते घनघनवृष्टिमुत्पाद्य स्वकालोचितानि पुष्पाण्यतिशयेन विकसितान्यकार्षुः । तेषां मध्ये श्रीकृष्णदिव्यमङ्गलविग्रहसच्छायानि अतसीप्रभृतीनि कुसुमानि सान्द्राण्यभूवन् । तदवलोकनं कृष्णविरह-व्यथाया अतिमात्रमुद्दीपकमभूत । तानि च दर्शंदर्शमतितरामुद्विजते गोदा कृष्णविग्रहसौन्दर्यसंस्मरणेन । हन्त! किं कुर्यादेषा? उच्चैराक्रन्दितुमारेभे! हा हा वन्यकुसुमानि! मां मारयितुं युष्मान् प्रेरितवानर्णवतर्णकः कुत्र वर्तते? हा बत! युष्माभिः क्रियमाणामनीतिमधिकृत्य कुत्र पुनरहमाक्रोशेयम्! न शक्नोमि चाहं स्वकीयं मनो विनेतुम् । अयि भो नृत्यन्तश्शिखिगणाः! युष्माकं पादमूलेषु प्रणिपतामि । कृपया युष्मदीयानि नर्तनानि विरमयत । मद्भर्तुः स्मारणेन हि मां मारयथ यूयम् । अयि भोः गायन्तः कोकिलाः! कर्णकठोरमिदं वः कूजितं किं नाम? विरम्यतामस्माकूजितात । श्रीवेङ्कटाद्रीशो भगवान् अत्र कृपया समागत्य यदि मां संजीवयेत तर्हि सद्यो युष्मानहमेव समाहूय वः कूजितानि शृणुयाम् । इत्येवमुक्तिततिभिरात्मीयामार्तिपूर्तिमाविष्करोति गोदा दशकेऽस्मिन् ।

तथा चैतद्दशकसारांशसंग्रहश्लोक एषः—

> वर्षाकालप्रफुल्लान्यतिशयितरुचीन्यद्भुतानि प्रसूना-
> न्यालोक्योद्विग्नचित्ता हरितनुसुषमां संस्मरन्ती रटन्ती ।
> दृष्ट्वा नृत्ताभिरामानपि च शिखिगणान् कोकिलानां च नादं
> श्रुत्वाऽसह्यार्तिभुग्ना कलितविलपना बोभवीत्यत्र गोदा ॥

१. (कार्क्कोडल् पूक्काळ्) अयि भो मेचकमसृणवन्यकुसुमानि! सिन्धुसवर्णस्स कृष्ण एव खलु युष्मान् मुद्रसन्नद्धतासमुत्पादनपूर्वकं मद्वधाय प्रजिघाय । आः! स धातुको भगवान् कुत्रास्ते? युष्माभिरतितरामवमर्दिताऽहं हन्त कस्य सकाशमुपेत्य इमामापदमावेदयेयम्? अस्यामप्यवस्थायां तदीय-तुलसीस्रजि स्पृहया तदेकाभिमुखं हृदयं खलु पापिन्यहं बिभर्मि ॥ ... ... (१)

२. (मेल् तोन्ऱिप्पूक्काळ्) अयि ऊर्ध्वाभिमुखविकस्वरवन्यकुसुमानि! उपरितनसर्वलोकाति-शायिदिव्यधामनिकेतनस्य वेदैकसमधिगम्यस्य परमपुरुषस्य दक्षिणहस्तविराजमानहेतिराजवत् हन्त! मां किमिति तपथ? एवं नाम संतापसमुत्पादनमपहाय कच्चिन्मां नित्यकिङ्करगोष्ठीनिविष्टां कलयध्वे? (२)

३. (कोवै मणाट्टि) अयि देवि! बिम्बलतिके! त्वदीयैरभिरूपैः फलैः भगवतः कृष्णस्य दिव्याधरसुषमास्मारणमुखेन मम हिंसनं हन्त किमिति कलयसे? विरम तावदेवंविधाद्वधात । बिम्बाधरसुन्दरं भगवन्तं स्मर्तुमहं भृशं बिभेमि । पापिन्या मम जन्मना शेषशयनो भगवानपि निजतल्पभूत-शेषवत् हन्त! द्विरसनो जातः । तस्य चेयं दशा न सर्वत्र; निर्लज्जाया ममैव विषये ॥ ... (३)

४. ( मुल्लैप्पिराट्टि ) अयि गम्भीरस्वभावे देवि यूथिकालतिके! भगवतो वासुदेवस्य मन्दस्मितं स्मारयता तव विकासेन मा स्म विषादयो माम्। त्वामहं शरणं प्रपद्ये प्रार्थनाया अस्याः फलेग्रहित्वाय। स्वैरचारिण्याश्शूर्पणखाया अङ्गभङ्गमाकलितवतो भगवतो रामचन्द्रस्य व चनं यद्यपि वितथं भवतु ; मम यदस्ति विष्णुचित्तमुनीन्द्रपुत्रीत्वं, तदपि किं वितथं भवेत? [ इदमत्र हृदयम्- * मित्रभावेन संप्राप्तं न त्यजेयं कथंचन * इत्यादि भगवद्वाक्यवैतथ्ये सत्यपि आचार्यसंबन्धस्य वैतथ्यं न खलु संभविष्णु। *सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम्। न संशयोऽस्ति मद्भक्तपरिचर्यारतात्मनाम् ॥ * इति ह्याहुः। * द्यौः पतेत पृथिवी शीर्येत हिमवान शकलीभवेत। शुष्येत्तोयनिधिः कृष्णे! न मे मोघं वचो भवेत् ॥ * इत्युक्तवतो भगवतो वचनादपि आचार्यसंबन्धस्य विश्वसनीयता व्यञ्जिता भवति ॥ ] ... (४)

५. ( पाडुम् कुयिल्काळ् ) अयि भोः गायन्तः कोकिलाः! कर्णकठोरध्वनिकलनात्मकं हन्त! किमेतद्गानम्? श्रीवेङ्कटाद्रिनिलयो भगवान् यदि मय्यनुग्रहाभिमुखो भविता, तदा यूयमत्र समागत्य कामं गायत। गरुडध्वजस्स भगवानत्रागत्य परमकृपया यदि मां संश्लिष्येत्तर्हि अहमेव युष्मानाहूय वो गानमाकर्णयेयम् ॥ ... ... ... ... ... (५)

६. ( कणमामयिल्काळ् ) अयि भो मयूरगणाः! श्रीकृष्णभगवद्दिव्यमङ्गलविग्रहसधर्मवपुः प्रदर्श्य नृत्यतां युष्माकं चरणेषु निपतामि ममारुन्तुदमिदं वो नर्तनं परिहर्तव्यमिति। फणिपुङ्गवशयनं सततमधिशयानो भगवान् श्रीरङ्गनाथो हन्त! ईदृशीमवस्थितिं मे समुत्पादितवान् ॥ [ आदिशेषात्सकल-विधान्यपि कैङ्कर्याणि स्वीकुर्वन् भगवान् यतो हि मामत्यन्तमुपैक्षत तत एवाहं नृत्तनिरतान् युष्मान् वीक्षितुमप्यशक्ता सती वः पादेषु पतित्वा एवं नाम प्रार्थये- इत्युक्तं भवति। ] ... ... (६)

७. ( नडमाडित्तोहै विरिक्किन्र ) बर्हाणि विकास्य चारुनटनं कुर्वन्तो हे मयूराः! युष्माकमिदं ललितं नटनमवलोकयितुं प्रधानेन साधनेन विकलाऽस्म्यहम्। [ आन्ध्यमनुभवामीति यावत। ] घटनर्तन-विचक्षणो भगवान् वासुदेवः स्वैरचेष्टितान्याकलय्य सर्वस्वापहारमकरोद्धत! अस्यामवस्थायां मम पुरतो नटनेन मत्प्राणहरणं न खलु न्याय्यं वः ॥ ... ... ... ... (७)

८. ( मळैये मळैये ) आः पर्जन्य पर्जन्य! बहिष्टान्मृत्तिकालेपनमारचय्य अन्तस्स्थितं मधूच्छिष्टं द्रवीकृत्य यथा बहिर्निस्सारयन्ति, तथा मां संश्लिष्य मदन्तस्सारभूतमात्मानं द्रवयन् श्रीवेङ्कटाद्रिनाथ-स्सुन्दरमूर्तिर्भगवान् यथा मयि नित्यसंश्लिष्टस्स्यात् तथा विधाय [ आवयोर्निरन्तरसंश्लेषमुत्पाद्य ] अथा-भिवर्ष तावत ॥ [ इदमत्र हृदयम्— लोके कांस्यप्रतिमादिनिर्माणनिरताः आदौ प्रतिमासमानाकारां मृदं निर्माय तदुपरि मधूच्छिष्टावरणं कृत्वा पुनश्च तदुपरि मृत्तिकालेपं विरचय्य कुत्रचित् द्वारं विधाय ततो बहिर्निर्गमयन्ति अन्तस्स्थितं मधूच्छिष्टम्। एवं नाम करोति भगवान वेङ्कटाद्रीश इत्यभिहितमत्र। बहि-र्मृदमभिलिप्य अन्तस्स्थमधूच्छिष्टनिस्सारणवत सोऽपि भगवान् वपुरुपरि संश्लिष्य अन्तस्सारमप-सारयितुं शक्तः। स यदि नित्यसंश्लिष्टस्स्यात तर्हि ममैतादृशी दुर्दशा न स्यान्नाम पर्जन्य! त्वमावयो-रविच्छिन्नसंश्लेषं संघटय्य पश्चात् स्वैरं वर्ष तावत। तदा न मे भवेदुद्दीपनमिति ॥ ] ... (८)

९. ( कडले कडले उन्नैक्कडैन्दु ) भो पारावार पारावार! भगवान् स्वकीयतल्पभूतं त्वां मन्दराद्रिणा मथित्वा कलुषीकृत्य त्वदन्तस्सारभूतममृतमपहृतवान् खलु। तथैव मदन्तस्सारमात्मान-मप्यपजह्रे तस्य सकाशे विज्ञापयितुं मामकीनं व्यथासर्वस्वं तदीयतल्पभूतशेषसविधे निवेदयेथाः। [ समुद्रघोषं कर्णमूलपतितं निशम्य तमर्णवं संबोध्य कथयति गोदा। भगवतस्सागरस्य च सन्निहितसंबन्ध-

मद्भावानमेव संबन्धं पुरस्कृत्य वक्ति–मदीयां दशां शेषशायिने भगवते निवेदयेति । तव च मम च केनचित्प्रकारेण साधर्म्यमप्यस्ति खलु । स भगवान् पुरा मथनव्याजेन यथा त्वामन्तस्सारविरहितमाततान, तथा मामपि संश्लेषमिषेण आत्तसारामतानीत । अनेन चांशेन मम साधर्म्यमासेदुषा त्वया मम वयस्येन एतद्विज्ञापनात्मक उपकारोऽवश्यं कर्तव्य इति प्रार्थ्यते ॥] ... ... (९)

१०. (नलॖवेन् तोऴि) अयि भो मदीयप्राणसखि ! भोगिभोगशयनीयशायी भगवान् सर्वस्मात्परो निरवधिकैश्वर्यसंपन्नः सर्वाभ्यधिकः परमपुरुषः । वयं तु क्षुल्लका मर्त्यजनाः । हन्त ! किं वयं करवामहे ? सर्वाधिकस्य तस्य भगवतः क्षुद्राणामस्माकं च कथमिव साङ्गत्यं घटेत ? [इति वैयाकुल्यं सत्यां मनस्समाहितिरीदृशी भवितुमर्हति । कथमिति चेत्] मदाचार्यो धन्विनव्यनगराधिनाथो विष्णुचित्तसूरिः सर्वथा स्वस्य विधेयभूतं तं भगवन्तं स्वस्य सुकरैस्सदुपायैर्यदि समाहूय स्वसन्निकृष्टं कुर्यात्, तदा वयं तं सुखेन सेवेमहि । [टिप्पणि–अनया गाथया एतदुक्तं भवति–आचार्यद्वारैव भगवान् लभ्येत, न प्रकारान्तरैरिति । प्रतिदशकं चरमगाथायां फलकीर्तनं भवति । तथा दशकेऽस्मिन् नैवाभूत । एतद्दशकाध्यायिनां सताम् आचार्यद्वारा भगवत्प्राप्तिरेव फलमिति व्यञ्जितं भवतीति वेदितव्यम् ॥] ... (१०)

इति श्रीगोदासूक्ते दशमदशकविवरणं समाप्तः ॥

---

## एकादशं सूक्तम्—तामुहक्कुम् ॥

---

### — अवतारिका —

दशकेऽस्मिन् गोदादेवी स्वसदृशीष्वन्यासु दयितासु भूदेवीजानकीरुक्मिण्यादिषु भगवता कलितान् अनुग्रहातिशयान् अनुसंदधाना तथैव मामप्यनुग्रहीतुमर्हस्स भगवान् शेषशायी सर्वजगत्पतिः रङ्गनाथश्श्रीमान् हन्त ! कथं तु मां निगृह्णातीति रोदितीव । मम भर्ता तु * अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन * रामो द्विर्नाभिभाषते * न मे मोघं वचो भवेत् * इत्याद्युक्तरीत्या सत्यसन्ध एव । तथाऽपि द्विजिह्वेन भुजङ्गेन तस्य नित्यसहवासस्त्वात * संसर्गजा दोषगुणा भवन्ति * इति न्यायेन तद्गतमेव द्विजिह्वत्वं स्वयमपि बत ! प्राप्तवानिवेति कथयतीव । अथवा, आदिशेषो हि चेतनेष्वग्रगण्यः । स तु घटककृत्यमेव कर्तुं क्षमः । तेन सह नित्यं वसन्नपि भगवान् हन्त ! मामुपेक्षत इति विस्मयप्रकाशनाभिप्रायो वा स्यात् । हिरण्याक्षनाम्ना दैत्येन नीतां भूमिदेवीं समुद्धर्तुं वाराहमपि वपुरास्थाय दुर्घटानि कृत्यानि कृतवान् । जानकीविश्लिष्टाभूदिति * अनिद्रस्सततं रामः * न मांसं राघवो भुङ्क्ते न चापि मधु सेवते * नैव दंशान् न मशकान् न कीटान् न सरीसृपान् । राघवोऽपनयेद्गात्रात् त्वद्गतेनान्तरात्मना ॥ * इत्याद्युक्तरीत्या भृशं विह्वलश्च विक्लबश्च व्यामुग्धश्चासीत् सः । शिशुपालेन सह कृतविवाहनिश्चयामत्यन्तमवसीदन्तीं रुक्मिणीं स्वयं परिग्रहीतुं दविष्ठादपि देशान्तरात्सरभसमाधावतिस्म सः । एवमेवं तासु तासु ललनासु प्रेमप्रकर्षपिशुनमतिमानुषचेष्टितवर्गं कृतवान् स एष भगवान् तादृशीष्वन्यतमायां मयि भृशमुदासीन इति हन्त कथमिदं सह्यतां दुःखमिति विलपति ।

तथा चैतद्दशकसारांशसंग्राहकश्लोक एषः—

हाहा श्रीरङ्गनाथः फणिवरशयनस्सर्वलोकैकशास्ता
भूदेवीं भूमिपुत्रीं निजहृदयसमाकर्षिणीं रुक्मिणीं च ।

संश्लेष्टुं सर्वथैव प्रकटितविविधाश्चर्यचर्यस्स कामी
मामेवं धिक्करोतीत्युपचितरुदिता बोभवीत्यत्र गोदा ॥

१. (तामुहक्कुम् तम् कैयिल्) अयि भो भूषणभूषिता ललनाः! विषाग्निवमनचणवदनफणिपतिशयनस्स भगवान् रङ्गनाथो हा हन्त! मम मुखावलोकनमपि न कुरुते। [तेन शरीरकार्श्यमनुभवन्ती साऽहं प्रच्युतकरवलया भवामि।] मयाऽऽद्रियमाणो मदीयः करवलयः किं ननु तेनाद्रियमाणस्य तदीयहस्तस्थितस्य पाञ्चजन्यस्य तुलनां नार्हति? तदीयपाञ्चजन्यो यथा कदाऽपि तदीयहस्तान्न च्यवते, तथा मदीयकरवलयेनापि मदीयहस्तादप्रच्युतेन भवितव्यं न किमु? इति युष्माभिस्स भगवान् प्रष्टव्य इत्युक्तं भवति। ... ... ... ... (१)

२. (एळिलुडैयवम्मनैमीर्) अयि भोः सौन्दर्यशालिन्यो मातरः! मम परमभोग्यदिव्यामृतसधर्मा श्रीरङ्गनाथः दिव्यालकसुन्दरः दिव्याधरसुन्दरः दिव्यनयनसुन्दरः दिव्यनाभिसमुद्भूतदिव्यारविन्दसुन्दरश्च स तावदस्मत्स्वामी भगवान् मम करवलयं नित्यमपाययुक्तमेव वितेने। [कदाचिदपि संश्लेषसुखमप्रयच्छन् नित्यविश्लिष्ट एव सन् विषादयति हन्तेति भावः॥] ... ... (२)

३. (पोङ्गोदम् शूळ्न्द) सागरमेखलामिमां महीं दिव्यं धाम च साधु निर्वहन् भगवान् दिव्याज्ञामण्णिज्ञदण्डतस्स श्रीरङ्गनाथः मदीयकरवलयापहरणेन किं ननु संपन्नो भविता? [विश्लेषेण मम व्यथासमुत्पादनं तस्य नैव शोभनमित्युक्तं भवति। श्रीरङ्गक्षेत्रे श्रीरङ्गनाथभगवत्परिसरे सदा विलसन् सौवर्णदण्डविशेषः दिव्याज्ञादण्डपदेन पूर्वाचार्यैर्व्यपदिश्यते। "शेङ्गोल्" इति भाषानाम।] (३)

४. (मच्चणिमाडमदिळरङ्गर्) रमणीयप्रासादप्राकारादिपरिवृतश्रीरङ्गदिव्यधामा स भगवान् देवाधिदेवः पुरा वामनो भूत्वा भूमिभिक्षामकार्षीत्। यदि सा भिक्षा सावशेषा स्यात् यदि च स मदीयकरवलयकाङ्क्षी स्यात् किमहो मदीयवीथिकायां न सञ्चरेत्? [पुरा महाबलिसकाशात् भूमिं जिघृक्षन् स भगवान् न खलु बलात्कारेण गृहीतवान् अपि तु भिक्षाचर्ययैव। तथा मत्सविधादपि करवलयग्रहणकुतूहली स बलात्कारेण न ग्रहीतुमर्हति। भिक्षित्वा कामं गृह्णातु। यदि भिक्षितुमिच्छति तर्हि महाबलियज्ञवाटे यथा मनोहरसंचरणं कृतवान् तथा मम पुरतोऽपि अभिगमसञ्चरणं करोतु नाम इत्युक्तं भवति। तदीयगतिविभ्रमदिदृक्षा सूचिता भवति।] ... ... ... (४)

५. (पोल्लाक्कुरळुरुवाय्) विलक्षणवामनरूपमास्थाय उदकधाराग्रहणपूर्वकं सकलानि भुवनानि स्वायत्तीकृतवान् सज्जनततिसमलंकृतश्रीरङ्गक्षेत्रवासरसिको नागेशयस्स भगवान् हा बत! अकिंचनाया मम वपुरपि ह्यपहर्तुमुत्कण्ठित इवालक्ष्यते॥ ... ... ... (५)

६. (कैप्पोरुळ्कळ् मुन्नमे) सस्यभूमिषु स्वैरं प्रवहन्त्या सह्यजया सरिता परिवृते श्रीरङ्गनामनि धामनि विराजमानः सर्ववस्तुनिकरान्तरात्मा सर्वस्यापि जनस्य दुर्लभः चतुर्वेदस्थितशब्दराशिपरमतात्पर्यभूतश्च स भगवान् प्रागेव मदीयानि बाह्यवस्तूनि (करवलयादीनि) अपजहार। संप्रति तु शरीरमप्यपहरति हन्त! ... ... ... ... (६)

७. (उण्णादुरङ्गादु) सुदृढप्राकारपरिवृतश्रीरङ्गदिव्यधामा जगत्पतिर्भगवान् सीतासमाख्यललनावपुषि कामुकस्सन् अशनेन निद्रया च रहितो जलनिधौ सेतुबन्धनात्मकमतिमानुषकार्यं च विद

चयन् स्वकीयमतिमात्रं व्यामोहं प्राचीकशदिति प्रसिद्धं खलु। तन्महाव्यामोहशालितां निजां विस्मृत्य सोऽधुना स्वकीयं परत्वमेव विचिन्तयन्नवलिप्यमान इव विमुखतां प्रकाशयति मयि ॥ ... (७)

८. (पाशितृट्टिक्किडन्द) पुरा प्रलयार्णवे चिरं निमज्जनेन विक्लान्तिं गतया भूदेव्याः कृते सलिलधारासमाकुलमलीमसदेहविशिष्टनिरपत्रपवराहरूपसंशिष्टदिव्यमङ्गलविग्रहेण भूत्वा देवदेवेन श्रीरङ्गनाथेन गीतम् * अहं स्मरामि मद्भक्तं नयामि परमां गतिम् * इत्यादि चरमश्लोकवाक्यं मम मनसि सुदृढप्रतिष्ठं हि विराजते ॥ ... ... ... ... (८)

९. (कण्णालम् कोडित्तु) पाणिग्रहणोत्सवमन्नाहं सर्वं सुष्ठु संविधाय रुक्मिणीपाणिग्रहाय दृढव्यवसायशालिनं स्थितं शिशुपालं हततेजसमाकाशावलोकननिरतं चाकलय्य तां रुक्मिणीं स्वपाणिना गृहीतवता खजिनवल्लभेन भगवता सादरमुररीकृतस्य दिव्यदेशस्य नाम श्रीरङ्गमिति खलु॥ [तत्रैव स्वस्यापि जिगमिषा सूचिता भवति ॥] ... ... ... (९)

१०. (शेम्मैयुडैयतिरुवरङ्गर्) आर्जवगुणनिधिना श्रीरङ्गनाथेन पुरा विभवावतारकाले पार्थं प्रपन्नमुद्दिश्य परमकृपयाऽनुगृहीतं सत्यार्थसंपन्नं चरमश्लोकं मदाचार्यो विष्णुचित्तसूरिः श्रुत्वा निर्भरो हि वर्तते। [तत्पदपद्माश्रितायाः ममापि तदधीनं नैर्भर्यमनपायम्।] "ये मयि प्रियास्तेऽहमपि प्रियः" इति स्वेनैव कथितं वाक्यं स्वात्मन्येव यदि मिथ्या भवति, अथ तस्य परमपुरुषस्य शास्ता को हि नाम [अतिमात्रदुःखत एव फलकीर्तनगाथानिबन्धनमजहादिह गोदेति ध्येयम ॥] ... (१०)

इति श्रीगोदासूक्ते एकादशदशकविवर्तस्समाप्तः ॥

## द्वादशं सूक्तम्—मत्तिरुन्दीर्हुंक्करियलाहा ॥

### — अवतारिका —

अस्मिन् दशके मथुरापुरीप्रभृति द्वारकापुरीपर्यन्तं श्रीकृष्णकिशोरविहरणस्थलानि सर्वाणि प्रोच्य तत्रतत्र गत्वा भगवन्तमनुभोक्तुं कामयमाना स्वयमेव च गन्तुमशक्नुवन्ती गोदादेवी स्वबान्धवानुद्दिश्य कथयति तत्रतत्र नेतुमात्मानम्। (१) * एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः। नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् * इति श्रुत्वा संप्रति मथुरामधिवसति मधुसूदन इति मत्वा तत्र स्वात्मनः प्रापणं प्रार्थयतेस्म प्रथमगाथया। (२) मथुरायामवतीर्णोऽपि स भगवान् * अकृतसेतुमनाकलितप्लवां जननसिन्धुदृढप्लवमुद्वहन्। रविसुतामतिलंघ्य रमापतिः सपदि घोषसमीपमुपानयत॥ * (यादवाभ्युदये) * यमुनां चातिगम्भीरां नानावर्तझषाकुलाम्। वसुदेवो वहन् कृष्णं जानुमात्रोदको ययौ ॥ * इत्याद्युक्तरीत्या व्रजं प्रापितोऽभूदित्याकर्ण्य तत्र मां नयतेत्याचचक्षे द्वितीयगाथया। (३) * श्रुतिमपरे स्मृतिमपरे भारतमपरे भजन्तु भवभीताः। अहमिह नन्दं वन्दे यस्यालिन्दे परं ब्रह्म ॥ * इत्युपश्लोकितरीत्या धन्यजन्मनो नन्दगोपस्य सदनाङ्गणमधिवसति स दामोदर इति निशम्य तत्र मां नयतेत्याह तृतीयगाथया। (४) नन्दगोपगेहाङ्गणे विहरणं विहाय * धीरसमीरे यमुनातीरे वसति वने वनमाली। गोपीपीनपयोधरमर्दननिर्दयकरयुगशाली ॥ * (गीतगोविन्दे) इत्युक्तरीत्या यमुनारोधसि विहर्तुं गत इति श्रुत्वा तत्र मां नयतेत्यवादीच्चतुर्थगाथया। (५) यमुनायाः कस्मिंश्चन ह्रदेऽवस्थाय गरलवमनादिना विविधां पीडामुत्पा-

दयन्तं कालियं भुजगं दमयितुं गत्वा तत्र कदम्बमहीरुहात्तच्छिरसि निपत्य विचित्रं नृत्तं वितनोतीति विज्ञाय तत्र मां नयतेत्यब्रवीत्पञ्चमगाथया। (६) यमुनातीरात्कृष्णप्रेषितानां क्षुधितानां गोपकुमाराणां प्रार्थनया प्रहृष्टा महर्षिपत्न्यो भक्ष्यभोज्यलेह्यचोष्यादिपरमान्नवर्गपरिपूर्णपात्रहस्तास्सत्यः कृष्णबलरामान्तिकमागत्य समाराधयन्तीति निशम्य, भक्तविलोचनमिति प्रथमानं तादृशं स्थलं स्वात्मानं नेतुं प्रार्थयत षष्ठगाथया। (७) अथ प्रलम्बासुरजिघांसया भाण्डीरवटस्थलीं प्रयातेन बलरामेण अग्रजेन सह कृष्णोऽपि प्रययाविति विदित्वा तत्र स्वात्मानं नेतुमयाचत सप्तमगाथया। अथ क्षुधितकुपितसुरपतिसमुत्पादितमहावृष्टिपीडितगागोपबृन्दपरित्राणाय गोवर्धनाद्रिसमुद्धरणाकृतये प्रवणः प्रभुरित्यवगत्य तत्पर्वतप्रान्तं स्वात्मानं नेतुमर्थयतेस्म अष्टमगाथया। (९) अथ च कालयवनभीत इव कृष्णो मथुरापुरीतोऽन्यत्र गत्वा द्वारकापुरीं प्रतिष्ठाप्य तामधिवसतीत्याकर्ण्य तत्र मां नयतेति याचतेस्म नवमगाथया। (अथ च दशमी गाथा फलकीर्तनपरा।) एवंनाम नवसु स्थलविशेषेषु स्वकीयमद्वितीयमतिमात्रमभिनिवेशमाविष्करोति दशकेनानेन गोदादेवी॥

तथा चैतद्दशकसारार्थसंग्राहकं पद्यमेतदत्रानुसन्धेयम्॥

उत्सृज्याहीन्द्रशय्यां हरिरिह मथुरामेत्य चाभीरपल्लीं
नन्दस्यागारमागादथ च विषधरं हन्तुमैत्सूर्यकन्याम्।
पश्चाद्भक्तावलोकं वटतरुमथ गोवर्धनं द्वारकां चे-
त्याकर्ण्यैतत्प्रदेशाननुभवितुमहो कामनां वक्ति गोदा॥

१. (मत्तिरुन्दीर्हदक्कु अरियलाहा) मत्प्रातिकूल्येऽवस्थिता भो जननीप्रभृतयो बन्धुजनाः! युष्माकं मनीषया अत्यन्तमगोचरं माधवविषयकं प्रेमसम्पद्भरं वहन्त्यै मह्यं यद्यूयं कथयथ, यच्चाहं युष्मभ्यं प्रतिवच्मि; तत्सर्वं सत्यं मूकबधिरसंवादमात्रम्। (सर्वथा च निरर्थकम्।) वस्तुतः किमधुना कर्तव्यमिति चेत्, साक्षाज्जनयित्रीं देवकीं विहाय व्रजमुपेत्य यशोदाभिधाया मातुरगारे अभिवृद्धस्य मल्लयुद्धविचक्षणस्य च भगवतो गोपालकृष्णस्य जन्मभूमिं मथुरापुरीं मां प्रापयत॥ (टिप्पणी—सिद्धोपायनिष्ठानां प्रपन्नानां नैर्भर्येणावस्थानमेव स्वरूपप्राप्तम्; त्वरातिशयो न वोढव्यः—इत्येवमध्यवसायो जननीप्रभृतीनाम्। प्राप्यवस्तुवैलक्षण्ये मनसि प्रतिभाते सति सत्वरमनुबुभूषा कथं न जायेत? स्वभोगसिद्धये यथाशक्ति त्वरितव्यमेवेति व्यवसायो रुचिविवशाया दुहितुः। अत एव "मत्प्रातिकूल्येऽवस्थिता भो जननीप्रभृतयो बन्धुजनाः!" इति संबोधनमिह सम्पन्नं वेदितव्यम्।) ... ... (१)

२. (नाणियिनियोर् करुममिल्लै) इतः परमपि लज्जापरिपालनेन न किमपि फलं सेत्स्यति। यतो हि मदीयां स्थितिं मात्सर्यशालिनश्चत्वारोऽपि जना जानन्तिस्म। अविलम्बेन कामपि चिकित्सां कृत्वा मामिकां पुरातनीं सुषमां पुनरावाहयितुं यदि कामयध्वे, यदि च मां सत्यं रक्षितुं स्पृहयध्वे, तर्हि मां गोपालवाटिकामेव प्रापयत। तत्र लोकविक्रान्तचरणो भगवान् यदि दृश्येत, तदा मे रुजा शान्तिमृच्छेत्॥ (टिप्पणी। "मात्सर्यशालिनश्चत्वारोऽपि जना" इति यदुच्यतेऽत्र तस्यायमभिप्रायः—उपायान्तरत्वेन प्रसिद्धेषु कर्मयोगज्ञानयोगभक्तियोगेषु निष्णातास्त्रयः, अथ प्रपन्नवर्गान्तर्भावे सत्यपि स्वगतस्वीकारनिष्ठ एकः—इत्येते चत्वारोऽधिकारिणः पारमैकान्त्यसीमाभूमिमधितिष्ठतां शुद्धप्रपन्नानां प्रतिकूला इति वेदितव्यम्॥ ... ... ... ... (२)

३. (तन्दैयुम् तायुमुत्तारुम् निर्क्क) "पितरि मातरि बन्धुवर्गे च विराजमाने सेयं सर्वामप्यवधीर्य हन्त! स्वैरिणी बभूवे"ति एवंविधोऽपवादो यदि भुवि विजृम्भेत अथ तत्प्रशमनं सर्वथा दुष्करं

स्यात् । तादृशापवादस्यावकाशलेशमप्यप्रदाय युष्माभिर्यत्कर्तव्यं तत् क्षिप्रं कर्तव्यम् । (अपवादप्रसक्तिः काऽस्विदिति चेत्; ) आश्चर्यगुणचेष्टितः कृष्णस्सन्निहितस्सन् मानसमाक्षात्कारगोचरं हि करोति स्वकीयं दिव्यं वपुः । ततश्च मे संभ्रमोऽप्यवश्यं भविता । तदधुना किं कर्तव्यमिति चेत्; दुर्विनीतधूर्तचेष्टितकरण-विचक्षणं कुमारकं प्रसूतवतो नन्दगोपस्य भवनालिन्दं मां प्रापयत निशीथे । एतदेव कर्तव्यं वः ॥ (३)

४. (अङ्गैतलत्तिडैयाळिकोण्डान्) सुन्दरकरतलललामभूतहेतिराजशालिनो भगवतो गोपाल-कृष्णस्य वदनारविन्दादन्यद्वस्तु नैव वीक्षिषीयेति कञ्चुकधारणच्छलेनात्मानं पिधाय क्षुद्रजनावलोकने सति जुगुप्सां विभ्राणमिदं मदीयं कुचयुग्ममवेक्षध्वम् ! पुनरपि वच्मि स्तनयुगमिदं गोविन्दादन्यं नैव कामयते । तस्मामितः प्रस्थाप्य यमुनासरित्कूलं प्रापयत ॥ ... ... ... (४)

५. (आर्कुमन्नोयिदरियलाहादु) भो जनन्यः ! हन्त मदीयोऽयं विलक्षणो व्याधिर्विपुलज्ञान-शालिनामपि धियस्सत्यमगोचरः । किमेवंविधोऽयं दारुणो व्याधिरिति माभूदवसादो वः । सिन्धुसवर्ण-गोपालकृष्णकरस्पर्शमात्रेण शाम्येदयं व्याधिरिति विशंकुरुत । अमोघोऽयमभ्युपायः । तदद्य किं कर्तव्य-मिति चेत्; कूलस्थितकदम्बमहीरुहात् कालियफणाफणामण्डले निपत्य तत्र समराङ्गणाधियमारचय्य चित्रं ताण्डवमाकलितवतो गोपालकृष्णस्यावसथभूतं यामुनं ह्रदं प्रापयत माम् ॥ ... (५)

६. (कार्त्तण्मुहिलुम् करुविळैयुम्) शिशिरो वर्षुकवलाहकः वन्यनालकुसुमविशेषः, अतसी-कुसुमम्, अम्भोजसूनं च मम पुरत उपस्थाय (भगवद्दिव्यविग्रहदिव्यावयवसंस्मारणपूर्वकं) गोपाल-कृष्णान्तिकमुपसर्पितुं मामाकर्षन्ति । तदधुना किं कर्तव्यमिति चेत्: गोचारणश्रान्त्या खेदं प्राप्य क्षुद्-बाधां चाधिगत्य ओदनभोजनावसरस्सोऽयमिति मत्वा महर्षिपत्नीनामागमनं प्रतीक्षमाणेन कृष्णेन स्वकीयकटाक्षधारागोचरीकृतं भक्तविलोचनाभिधानं स्थलं मां प्रापयत ॥ [टिप्पणी—वृन्दावनप्रान्ते भक्तविलोचनमिति पुण्यस्थलं प्रथितम् । श्रीभागवतदशमस्कन्धे त्रयोविंशाध्याये तदेतत् स्थलमधिकृत्य प्रोक्तमस्ति । कदाचित् कृष्णो बलभद्रश्च गोपालैस्सह यमुनासरित्तटे भृशं श्रान्ताविव क्वचन निषण्णा-वास्ताम् । तदात्वे गोपालडिम्भास्सर्वेऽपि कृष्णबलभद्रयोस्सन्निधे स्वकीयक्षुद्बाधातिशयं विज्ञापयामासुः । तदा कृष्णेनोक्तम्—नातिदूरे आङ्गिरसाख्यमध्वरविशेषमनुतिष्ठतां महर्षीणामन्तिकमुपेत्य याचध्वमिति । ते च बालकास्सहसा तत्र गत्वा रामरामानुजयोर्नाम प्रोच्य अन्नमयाचन्त । ते तु महर्षयः स्वकार्यैकनिरता उपैक्षन्त । अथ विषण्णा व्रीडिताश्च बालकाः कृष्णान्तिकमागत्य सनिर्वेदं सदिदं न्यवेदयन् । तदा कृष्णः प्राह सस्मितमेवम्—महर्षिपत्नीनां सविधमुपेत्य साग्रजस्य मम अत्रावस्थितिमावेद्य याचध्वमन्नमिति । अथ तथैव याचिता ऋषिपत्न्यः कृष्णनामश्रवणमात्रेण परमानन्दकन्दलितस्वान्ताः पुलकाङ्कितदेहाश्च सत्यः सद्यो भक्ष्यभोज्यलेह्यचोष्यवर्गसम्भरणपूर्वकं गुरूणां प्रतिरोधमप्यवधीर्य परमभक्तिभूम्ना रामरामा-नुजयोरन्तिकमुपेत्य सानन्दं समार्पिपन्नन्नवर्गमिति । ता मुनिललना एवं प्रत्यहमपाहरन् । यस्यां वेलायां ता आहरन्ति तस्यां वेलायां कृष्णस्तद्दिशाभिमुखस्तिष्ठति । भक्तम् (अन्नम्) विलोकयन्नास्तेति हेतुना तत् स्थलं भक्तविलोचनमिति प्रथमाप्नुत । इति ज्ञायतेऽनया गाथया ॥] ... ... (६)

७. (वण्णन्तिरुवुम् मनं कुळैवुम्) मम वपुस्सुषमाया विपर्यासः, मनसो वैक्लव्यम्, व्रीडाया विनाशः, आनने वैवर्ण्यम्, अभ्यवहारे वैमुख्यम्, अन्तःकरणे दौर्बल्यम् इत्येतत्सर्वमपि सिन्धु-सवर्णस्य गोपालकृष्णस्य तुलसीस्रजो मम शिरसि विन्यासमात्रेण शान्तिमृच्छेत् । यदि तां तुलसीस्रज-मिहानेतुं न शक्नुथ यूयं तर्हि प्रलम्बवधविचक्षणबलदेवसनाथं पाण्डवटाह्वयं दिव्यदेशं मां प्रापयत ॥ [पाण्डवटस्य भाण्डीरमित्यपि व्यपदेशः प्रथत इति वदन्ति ॥] ... ... ... (७)

८. ( कत्तिनम् मेय्क्कलम् मेय्क्कप्पेत्तान ) ( भगवति रामचन्द्रे तावदभिनिवेशः कामं तव युज्येत; गवां पृष्ठतो गत्वरे जघन्यजातीये स्तेने च कितवेऽनुरागो नोपपद्यते इति केचन जना केलिवाचमवदन्निव; तान्प्रति चाहतरमभिदधाति गोदा।) मम नाथो गोपालकृष्णो गोगणसञ्चारणैकव्यग्रो विरेजे; कांतारप्रांतवासिजनसजातीयश्चाभूत; नवनीतस्तेयेन गृहीतस्सन्नुलूखलबन्धं च प्रापितोऽभूत। हा हन्त! परमसौलभ्यकाष्ठाभूता इमाश्चर्या भोः पापिनः! युष्माकं गर्हणागोचरतां खलु गताः। स्तुत्ये भगवति दूषणोक्तीरवकीर्य मदीयधिक्कारपात्रतां किमिति प्राप्नुथ। माभूदेवम्। किन्तु गोवृन्दसमुज्जीवनाय वर्षबाधानिवारणाय च छत्रीकृत्य भगवता धृतं गोवर्धनाद्रिं मां प्रापयत॥ ... ... (८)

९. ( कूट्टिलिरुन्दुकिळियेप्पोदुम् ) मयाऽभिवर्धितः शुकशावः कुलाये स्थित्वा गोविन्द गोविन्देत्यविरतं कूजति हन्त। यद्यहं तस्मै भोज्यमप्रदाय क्लेशं जनयेयं तदा त्रिविक्रमभगवन्नित्युच्चैराक्रोशति। एवं नाम यदृच्छया भगवन्नामश्रवणेऽपि भृशमवसीदन्तीं मां प्रति संप्रति किं कर्तव्यमिति चेत्। उत्तुङ्गसौधमण्डलाश्रितं द्वारकाक्षेत्रं मां प्रापयत। अन्यथा तु जगति वृथाऽपवादवचः प्रथेत; युष्मदीयं यशश्च क्षीयेत। शिरसोऽवनतिश्च वो भवेत॥ ( मम स्वच्छन्दचारित्वं भवेदित्युक्तं भवति। ) ... (९)

१०. ( मन्नुमदुरैतोडक्कमाह ) अलकभरसुन्दरीसौवर्णसौधाश्रितश्रीधन्विनव्यपुराधीशश्रीविष्णुचित्तात्मजा गोदा मथुराप्रभृतिद्वारकापर्यन्तस्थलविशेषाणां नामान्यभिधाय तत्र तत्र स्वात्मानं प्रापयितुं प्रार्थयमाना याभिर्दिव्यगाथाभिर्निजमभ्यलसायं प्राचीकशत ता इमा दिव्यसूक्तीः कीर्तयतां सतां दिव्यं धामैव धाम स्यात॥ ( इति फलश्रुत्या समापितमिदं दशकम्। ) ... ... (१०)

इति श्रीगोदासूक्ते द्वादशदशकविवर्तस्समाप्तः॥

---

## त्रयोदशं सूक्तम् – कण्णनेन्नुम करुन्दैवम्॥

---

### — अवतारिका —

अधस्तनदशके मथुरादिद्वारकापर्यन्तदिव्यस्थलेषु स्वस्य प्रापणं प्रार्थयामास गोदा। एवं प्रार्थिता बान्धवा अमन्यन्त– "कृष्णस्तु भगवान् बहुतिथादेव कालात्पूर्वमवतारकृत्यानि परिसमाप्य निजं दिव्यं धाम जगाहे; इदानीं मथुरायां व्रजे यमुनातटे द्वारकायां वा हन्त! किमस्ति? तत्र प्रापणेन किं वा प्रयोजनमस्या भविष्यति? एतादृशवस्तुतत्त्वप्रकटने कृते सति तु अस्या अवसादो भूयो भूयोऽप्यभिवर्धेत; परं न पुनर्मनागपि हीयेत। अतश्च सेयं [ गोदा ] येन केनापि प्रकारान्तरेणैव समाश्वासनीया" इति। मत्वा चैवम् "अयि गोदे! तथैव कामं करिष्यामः; इदानीं तु वर्षाकालः खलु; अधुना तत्र प्रयाणं दुश्शकम्; मनागिव सहस्व विलम्बं मुग्धे! परस्तान्नेष्यामः। संप्रति तु तदीयगुणगणानुसन्धानेनैव कथंचित्सानन्दमेव कालं क्षिप" इति च अन्यदन्यच्च प्राहुः। ततश्च प्रोज्जृम्भमाणविरहव्यथा गोदा "यदि मामद्यैव कृष्णसकाशं नेतुं न शक्नुथ यूयं तर्हि तदुपभुक्तवस्तुषु यत्किमपि वा सद्यस्समानीय दत्वा मां समाश्वासयत" इति प्रार्थयते दशकेनानेन। कृष्णस्य कटितटभूषायितं वसनमानीय तेन संवीज्य मनापं हरत। माधवस्य तुलसीस्रजमानीय विक्षिपत मम कबर्याम्। दामोदरस्य वनमालामानीय निक्षिपत वक्षसि। अपर्याप्तामृतस्य मुकुन्दस्य वागमृतमाहृत्य पाययित्वा मम श्रान्तिं शमयत। गोधूलिधूसरितकोमलकेशवेशस्य केशवस्य मुरलीद्वारतो निर्गदमृतमानीय मम मुखं तेन मार्जयत। मधुसूदनस्य पादाब्जन्यासधन्यस्थलस्थितं पांसुमाहृत्य क्षिपत मद्वपुषि। ईदृशैः कार्यैरविलम्बेन मां प्रहर्षयत– इत्युच्यते दशकेऽस्मिन्। तथा चैतद्दशकसारांशसङ्ग्राहकमिदं पद्यमिहानुसन्धेयम्—

स्त्रीदुःखाज्ञस्य शौरेः कटितटवसनं मालिकां वैजयन्तीं
वक्त्राम्भोजामृतौघं सुमधुरमुरलीद्वारनिर्यत्सुधां च ।
पादाब्जन्यासधन्यस्थलजमपि रजो दिव्यमादाय मह्यं
दत्त्वा मां मोदयध्वं द्रुतमिति कथयत्यत्र सूक्ते तु गोदा ॥

१. (कण्णनेन्नुम् करुन्दॆय्वम्) श्रीकृष्णाभिधानपरदैवतसन्दर्शनैकसन्धानकुतूहलां मामुद्दिश्य भो मातरः ! यूयं वैरिजनसाधर्म्यमास्थाय क्षते क्षारमिव कटुवाग्विसर्गं कलयध्वे । नैतद्युक्तं मनागपि । तर्हि किं कर्तव्यमिति चेत्, स्त्रीजनदुःखानभिज्ञस्य महाप्रभोः कृष्णस्य कटितटे विराजमानं पीताम्बरमाहृत्य तेन मां वीजत यथा हि मे ग्लानिरुपशममियात् ॥ ... ... ... (१)

२. (पालालिलैयिल् तुयिलकोण्ड) अतिमृदुलवटदलमधिशयितवता परमपुरुषेण प्रसभं वशंवदीकृतां मां प्रति अत्यन्तदारुणवचोविसर्गं मास्म कुरुत स्वच्छन्दम् । तर्हि किं कर्तव्यमिति चेत्; गोपजात्युचितयष्टिग्रहणपूर्वकं गास्संचारितवतो घटनर्तनदक्षिणस्य श्रीकुम्भघोणक्षेत्रमधिशयानस्य च मुकुन्दस्य शिशिरसुभगतुलसीस्रजमानीय मम कुन्तलेषु विधत्त [टिप्पणी-घटनर्तनं नाम भुजयोरुभयोरपि घटवृन्दं निधाय शिरसि च तथा विन्यस्य पाणितलाभ्यां घटद्वयं परिगृह्य क्रियमाणं ताण्डवम् । एतादृशे नर्तने भुजगतानां शीर्षगतानां च घटानां मनागपि चलनमन्तरेण पाणितलद्वयस्थितघटयोः पर्यायेण विनिमय एव सामर्थ्यविशेषः । एवंविधनर्तनप्रावीण्यं कृष्णे दिव्यसूरिभिरसकृदनुसन्धीयते ॥ (२)

३. (कञ्जैक्कायुन्दकरुविलि) चापसधर्मभ्रूलताशालिनः कंसद्विषः कटाक्षवीक्षणाख्यनिशितशरताडितां निर्दग्धकृत्स्नहृदयां दशाविपर्यासतो भृशमवसीदन्तीं मां प्रति अभयगिरमप्यननुगृह्णन् स भगवान् स्ववक्षःस्थलविधृतां वनमालां विप्रलम्भविरहेण यदि वितरेत्तर्हि तामानीय मम वक्षसि प्रक्षिपत शश्वत् ॥ ... ... ... ... ... (३)

४. (आरेयुलहत्तलुवार्) कृत्स्नामपि व्रजभूमिमात्मसात्कृत्वा स्वैरमुपभुञ्जानेन कालर्षभेण कृष्णेनातिमात्रं व्यथितां सर्वथा च विह्वलां मां जगतीह को वा जन आश्वासयितुमलम् । यदि यूयमाश्वासयितुमिच्छथ तर्हि अपर्याप्तामृतस्य गोपालकृष्णस्य दिव्यवक्त्रस्रुतममृतबिन्दुमानीय झटिति मां पाययित्वा वीतश्रमां कुरुत ॥ ... ... ... ... ... (४)

५. (अळिलुम् तोळिलुमुरुक्काट्टान्) चिरं विलापेऽपि मुहुः प्रणामेऽपि निजं दिव्यगात्रमप्रदर्शयन् अभयवाचमप्यप्रयच्छन् स कोपि महानुभावो मानसानुभवैकयोग्यतयाऽत्र समागत्य गाढपरिरम्भणमाकलय्य पुरतः पृष्ठतश्च विचरन् नापसर्पति । प्रत्यक्षानुभवविरहेण दूये । ततश्चैतत्कर्तव्यं युष्माभिः—बर्हिबर्हातपत्रच्छायायां गवां पृष्ठतो मुरलीगानेन सह समागन्तुस्सर्वेश्वरस्य वंशनालरन्ध्रोदञ्चदमृतबिन्दुमाहृत्य तेन मम मुखं मार्जयत सुशिशिरम् ॥ ... ... ... (५)

६. (नडैयोन्निलावुलकत्तु) स्वत एव वीतनीतिके जगतीह नन्दगोपात्मजनाम्ना परमदारुणेन प्रभुवरेण भृशमर्दिता साऽहं मनागपि चलितुं न प्रभवामि । अतश्च, तत्कितवपादन्यासधन्यात स्थलविशेषात् तत्पादावमर्दजनितं पांसुमाहृत्य स्थिरतरप्राणप्रतिष्ठं मम वपुषि रूषयत ॥ [टिप्पणी—नन्दगोपात्मजकृतां स्वोपेक्षारूपामनीतिमनुसंदधाना गोदा रोषवशादाचष्टे "स्वत एव वीतनीतिके जगतीह" इति ।] ... ... ... ... ... (६)

७. (वेत्तिक्करुलक्कोट्टियान्तन्) जैत्रगरुडध्वजस्य दिव्याज्ञामतिलङ्घयितुमशक्ते जगतीह सा जननी यशोदा तं गोपालकृष्णं हा हन्त निम्बानीकदम्ममेव अभ्यवर्धयत । अस्तु नाम तत । तदेकव्रतं मत्कुचयुग्मं तस्यैव गोपकुमारस्य रमणीयपृथुभुजयुग्मेन सह यथा अद्वैतमवाप्नुयात्तथा सुदृढघटितं कुरुत तदैकान्त्यदोषशान्तये ॥ [टिप्पणी—"गरुडध्वजस्य दिव्याज्ञामतिलंघयितुमशक्ते जगतीह" इति कथनं किमभिप्रायकमिति चेत् ; इह जगति मम यो योऽनर्थो भवति स सर्वोऽपि भगवदाज्ञानुसारी खलु भवेत् ; सर्वमपि सह्यमेव ननु : आक्रन्दनेन किं फलं सेत्स्यति ? इति स्वात्मन्येव समाश्वसनं व्यज्यत इति ध्येयम् । अथ च ; "तदैकान्त्यदोषशान्तये" इत्युक्तस्य भावः- लोके ललनानां कुचा भगवदैकान्त्यमवहन्तः स्वैरचारिणो भवन्ति । तेषां न किमपि दुःखं जायते, प्रत्युत सदा सुखित्वमेव दृश्यते । मम कुचयोस्तु सदा दुःखित्वमेव दृश्यते : किमत्र कारणमिति विमर्शे कृते कुचयुग्मस्यास्य सापराधत्वमेवात्र हेतुरित्यु-न्नीयते । कोऽयमपराध इति पर्यालोचनायां कृष्णादन्यं कमपि न वीक्षेयेति यदैकान्त्यव्रतमालम्बितं तदेवा-पराध इति वक्तव्यं भवति । लोके ह्यपराधिनां जनानां कारागारादिषु बन्धनं भवति । तथा सापराधस्य मत्कुचयुग्मस्यापि बन्धनमेव शिक्षा भवतु । कुत्र बन्धनमस्य युक्तमिति चेत् : तस्यैव कितवस्य पृथुभुज-युग्मे इति चमत्कारातिशयशालि चारुतरमिदं वचः ॥] ... ... ... (७)

८. (उल्लुयुरहिनेवेने) द्रवीभूतविह्वलचित्तवृत्तयां मामधिकृत्य 'किं प्राणिति वा ? उत पञ्चतां गता ? ' इत्यनुयोगमप्यकुर्वन्तं सर्वस्वापहारिणं कितवं गोवृन्दवर्धनं मुकुन्दं यदि कदाचिदहं पश्येयम्, तर्हि सर्वथाऽपि विफलजन्मशालि मदीयं कुचयुग्मं समूलमुत्पाद्य तस्य वक्षसि प्रसभं क्षिप्त्वा कथञ्चिदहं वीतशोका भवेयम् ॥ [उन्मीलितस्य स्तनस्य तस्य वक्षसि क्षेपणं किमर्थमिति चेत् ; स्त्रीजन-दुःखानभिज्ञस्य तस्योरसि इमौ कुचौ स्यातां यदि तदा गोदादेव्या दुःखमीदृशमिति स जानीयादित्यभि-प्राय इव ।] ... ... ... ... (८)

९. (कोम्ममुलेहाळिद्दतीर) मदीयकुचकुड्मलवेदनाविहतये गोविन्दस्य भगवत इहैव-जन्मनि सेवामकृत्वा देशान्तरे कालान्तरे यत्किञ्चित्करणं हा बत ! किमर्थम् ? यदि मां स स्वकीये सुभगे वक्षसि संयोजयितुमिच्छति कामं तथा भवतु । यदि न, मम साक्षात्कारगोचरो भूत्वा 'गोदे ! त्वमुपेक्षि-तैव मया' इति यदि तथ्यं कथयेत् तदुत्तमोत्तमम् ॥ [यथाकथञ्चित्तस्य कृष्णकिशोरस्य साक्षात्कार लिप्सया एवं कथ्यत इति वेदितव्यम् ।] ... ... ... ... (९)

१०. (अल्लल्विळैत्तपेरुमाने) आर्तिहर इति नाम्नः स्थाने आर्तिकर इति नाम बिभ्रतं महानुभावं गोकुलरत्नदीपं गोपालकृष्णमुद्दिश्य- श्रीधन्विनव्यनगराधीशश्रीविष्णुचित्तात्मजया धनुर्जैत्र-भूलतया गोदया साभिनिवेशं सकुतूहलमुदीरिता इमा गाथा ये प्रशंसन्ति ते दुःखाब्धिदूरगा भवितारः ॥ [इति फलकीर्तनेन समापितमिदं दशकम् ॥] ... ... ... ... (१०)

इति श्रीगोदासूक्ते त्रयोदशदशकविवर्तस्समाप्तः ॥

## अथ चतुर्दशं दशकम्—पट्टिमेयन्दोकारेरु ॥

### — अवतारिका —

परमकारुणिको भगवान् भक्ताभीष्टप्रपूरकः खलु । भक्तानां स्वानुभवाय तीव्रमार्तिभरमभिवर्ध्य अथ परिपूर्णस्वानुभवं प्रयच्छति स इति हि प्रसिद्धिः । तथैव भृशमभिवृद्धार्तिभराय गोदादेव्याः परमेण प्रेम्णा स्वात्मसंदर्शनरूपं दिव्यानुभवमनुजग्राह स वृन्दावनधामा कृष्णकिशोरः । तादृशमत्यद्भुतानुग्रहं

विलक्षणसंवादापदेशेन प्रथयति गोदादेवी चरमदशकेनानेन । इयमेकैव गोदादेवी उभयोस्सख्योर्भूमिकां परिगृह्य एकस्यास्सख्या वाचा ‘ कृष्णकिशोरोऽत्र किमु दृष्टः ’ इति प्रश्नप्रकटनम् , अथान्यस्यास्सख्या गिरा दृष्ट ‘ एव स वृन्दावने ’ इति प्रत्युत्तरप्रकटनं च कलयन्ती भगवतो नन्दनन्दनस्य स्वात्मना सुष्ठु संदृष्टतामाविष्कृत्य सानन्दं समापयति स्वकीयमिमं दिव्यप्रबन्धम् । दशकेऽस्मिन् प्रतिगाथं च पूर्वार्धं प्रश्नप्रतिपादकम् । उत्तरार्धमुत्तरप्रतिपादकम् । मत्प्राणनाथो बलरामसहचरो जारचोरशिरोमणिर्मम विश्लेषदुःखसमुत्पादकः कोऽपि कितवः प्रान्तेऽस्मिन् यत्र कुत्रापि विचरन् कच्चिदवलोकित इति प्रश्नप्रकारः । आः ! अयमेव स दृष्टो वृन्दावने विहरन् वत्सैस्सह गास्संचारयन् धेनुकवत्सकपित्थकेशिप्रमुखानासुरप्रकृतीन् प्राणैर्वियोजयन् नटदिट्टतल्लजो नन्दनन्दनो नीलजीमूतसङ्काशो वैनतेयपक्षवितानच्छायायामटन् करिकलभनिभः पीताम्बरधरो नार्थीप्रपूरकदिव्यगात्रसुषमः श्रीकृष्ण इति प्रत्युत्तरदानप्रकारः । अनया च प्रश्नोत्तरप्रणालिकया स्वानुभवानन्दभूमा संप्रकाश्यते गोदादेव्या दशकेऽस्मिन्निति विभाव्यम् । तथा चैतद्दशकसारांशसंग्राहकं पद्यमिदमत्रानुसन्धेयम् ॥

मत्प्राणेशो मुकुन्दो मुसलिसहचरस्तस्करो जारडिम्भो
मह्यं विश्लेषदुःखमद इह कितवः कोऽपि कच्चिन्नु दृष्टः ? ।
दृष्टो दृष्टोऽद्य वृन्दावनभुवि विहरन् चारयन् गास्सवत्साः
निघ्नन् दैत्यांश्च कोऽपीत्यनुभवमतुलं वक्ति गोदाऽन्त्यसूक्ते ॥

१. ( पट्टिमेय्न्दोरकारेरु ) कच्चिदिह दृष्टो युष्माभिः कश्चन कालर्षभः, यः खलु बन्धमन्तरेण यथेच्छं विचरन् बलभद्रानुज इति स्वात्मानं प्रथयन् सन्तोषवशादुच्चावचान् कोलाहलान् विरचयन्नत्रैव प्रान्ते विहरन् वर्तते । ( इति प्रश्नः ; अथ प्रत्युत्तरम् । ) आम् , दृष्ट एव स तावदस्माभिर्वृन्दावने—यः खल्वभिमतान् गोगणान् सानन्दं सञ्चार्य पानीयं च पाययित्वा तैस्सहैव सदा विहरति । [ टिप्पणी— “ बलभद्रानुज इति स्वात्मानं प्रथयन् ” इत्यस्य भावः—यत्र कुत्रचन गेहे कृष्णो नवनीतचौर्यादिनिमित्तं प्रविशति चेत्; कस्त्वं बालेति तत्रत्यैः पृष्टस्सन् बलानुज इति प्रतिवक्तीति प्रसिद्धिः । व्रजे बलभद्रस्य अतिमात्रसाधुत्वेन प्रसिद्धत्वात तदीयोऽयमनुजोऽपि साधुरेव स्यादिति ते विभावयन्त्विति कृष्णस्य मतिरिव । ] ... ... ... ... (१)

२. ( अनुङ्गवेन्नैप्पिरिवुशेय्दु ) कच्चिदिह दृष्टो युष्माभिः यः खलु विश्लेषेण मां भृशमवसाद्य स्वैरं गोपीबृन्दमुपभुञ्जानो गव्यगन्धी कालर्षभसमो गोविन्दनामा विहरतीह । ( उत्तरम् । ) आम् , दृष्ट एव स तावदस्माभिर्वृन्दावने– यः खलु विद्युता विलसन् बलाहक इव वनमालाविराजमानो वयस्यगणैस्सह विहरन्नास्ते ॥ ... ... ... ... (२)

३. ( मालायुप्पिरन्दनम्बियै ) कच्चिदिह दृष्टो युष्माभिः यः खलु मूर्तो व्यामोह इव जातः परेषामपि व्यामोहमेव जनयन् असङ्गतान्यनृतभाषणानि व्याहरन्निह विचरति । ( उत्तरम् । ) आम् , दृष्टस्स बृन्दावने—उपरि प्रसृमरमातपं वारयितुं वैनतेयपक्षतिरूपवितानच्छायायां व्रजति यः [ टिप्पणी– “ असङ्गतान्यनृतभाषणानि व्याहरन् ” इत्यत्र “ नवनीतभाण्डविवरे हस्तं किमर्थं न्यधाः । मातः कश्चन वत्सकं मृगयितुम् ” इत्यादिकमनुसन्धेयम् । ] ... ... ... (३)

४. ( कार्त्तण्कमलक्कण्णेन्नुम् ) कच्चिदिह दृष्टो युष्माभिः यः खलु, कालमेघे कमलकुसुममुद्भूतमिवेत्युल्लेखार्हस्वकीयनयनाभिधानवागुरायां मां निपात्य समाकृष्यात्र विहरति । ( उत्तरम् । ) आम्, दृष्ट एव स बृन्दावने— यो मौक्तिकवारवाणावृतस्सन् कश्चन कलभो विहरति किमु! इत्युल्लेखयोग्यतया स्वदाश्रितदिव्यगात्रो विहरति ॥ ... ... ... (४)

५. ( मादवनेन्नप्पणियिनै ) कच्चिदिह दृष्टो युष्माभिः श्रियःपतिः नीलमणिवन्मम परमभोग्यो जालविनिर्मुक्तदिव्यवराहवदत्यन्तमवलिप्तः स्वात्मानं मनागपि मह्यमप्रयच्छन्निह विहरति यः । ( उत्तरम् । ) आम्, दृष्ट एव बृन्दावने—जङ्घावलम्बिपीताम्बराश्रितदिव्यगात्रो मेचकमुदिरशावकनिभो वीथीपूरकस्सन् विलक्षणयात्रोत्सवमिहानुभवति यः ॥ ... ... ... ... (५)

६. ( तरुममरियाक्कुरुम्बनै ) कच्चिदिह दृष्टो युष्माभिः अनभिज्ञातानृशंस्यो धूर्तः स्वकरतलविधृतशार्ङ्गसमभ्रूलतः प्रियजनविमुख इह विचरति यः । ( उत्तरम् । ) आम्, दृष्टोऽस्माभिरिह बृन्दावने—मनोहरनीलदिव्यगात्रः कोकनदसमानन उदयाद्रिशिखरोदञ्चद्गभस्तिमालीव विराजते यः ॥ (६)

७. ( पोरुत्तमुडैयनम्बियै ) कच्चिदिह दृष्टो युष्माभिः यः खलु परमसाधुः वपुषीव मनस्यपि मेचको मदीयमनोरथवैदेशिकः कालमेघनिभः । ( उत्तरम् । ) आम्, दृष्ट एव बृन्दावने— स्पृहणीयनक्षत्रवृन्दभरित आकाश इव वयस्यवृन्दसमेतो यात्रोत्सवमनुबोभवीति यः ॥ ... ... (७)

८. ( वेळियशङ्गोन्रुडैयानै ) कच्चिदिह दृष्टो युष्माभिः, धवलश्रीपाञ्चजन्याढ्यः पीताम्बरधरः परमकृपाभिरामः श्रियःपतिश्चक्रपाणिर्यः पर्यटति । ( उत्तरम् । ) आम्, दृष्ट एव बृन्दावने, 'किं भ्रमरा एव परितो वलन्ते!' इत्युल्लेखयोग्यं यथा तथा सुरभिरमणीयकुन्तलान् अंसावलम्बिनो बिभ्राणो विहरति यः ॥ ... ... ... ... (८)

९. ( नाट्टैप्पडैयेन्नयन्मुदलातन्द ) कच्चिदिह दृष्टो युष्माभिः, विश्वप्रपञ्चप्रजननाय विरिञ्चमादौ स्वनाभीनलिने समुत्पाद्य लीलाविभूतिप्रपञ्चेन विहरति विमलः । ( उत्तरम् । ) आम्, दृष्ट एव बृन्दावने, धेनुकासुरदुष्टहस्तिबकासुरप्रभृतिदुर्जन्तुमारणाय विपिनमवगाह्य मृगयोत्सवमनुभूय समायाति यः ॥ ... ... ... ... (९)

१०. ( परुन्दाळ्कळिट्रुक्कुरुळ्शेय्द ) गजेन्द्ररक्षणदीक्षाजुषः परमपुरुषस्य दर्शनं पृथिव्यां बृन्दावने सम्पन्नं प्रकाशितवत्या विष्णुचित्तात्मजया गोदया कीर्तितामिमां दिव्यसूक्तिमालां दिव्यौषधधिया ये हृदि बिभ्रति ते महिमशालिपादारविन्दपरमेश्वरचरणारविन्दपरिसरावस्थितिमनारतमाप्नुयुः ॥ इति फलकीर्तनेन समापितमिदं दशकम् ॥ ... ... ... ... (१०)

इत्थं ह्यत्यद्भुतानामनुभववचसामाकरं भक्तिसम्पत्संवृद्धौ हेतुभूतं रसघनमतुलं प्राह दिव्यप्रबन्धम् ।
श्रीगोदा द्राविडोक्त्या, तमिममनुवदन् वादिभीकृत्कुलीनः काञ्चीस्थोऽण्णङ्गरार्यः कविरमरगिरा
धन्यजन्मा समिन्धे ॥

इति श्रीकांची प्रतिवादिभयङ्कराण्णङ्गराचार्यकृतिषु श्री गोदासूक्तविवर्तः समाप्तः ।

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ॥

श्रीमच्छठकोपयतिराजवरवरमुनिभ्यो नमः ।

## श्रीमदण्णङ्गराचार्य विरचितः

श्रीकुलशेखरदिव्यसूरिप्रणीत-पेरुमाळ्तिरुमोळिनामक-श्रीकुलशेखरसूक्त-संस्कृतविवर्तः ॥

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् । यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

[ लक्ष्मीनाथसमारम्भामित्यादि ... श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ॥ ]

श्रीकुलशेखरसूक्तदिव्यप्रबन्धस्य मुखपद्ये द्वे ; तयोरादिमं पद्यम्— ◎ इन्नमुदमूट्टुहेनिङ्गवा. *

( विवर्तः । ) अयि मनोहरशुकशाव ! त्वां परमभोग्यममृतं प्राशयामि समायाह्यत्र ; श्रीरङ्गक्षेत्रकीर्तन-निरतः शुभगुणशाली महानुभावः सुभुजनमनोहरः केरलदेशाधिराजोऽस्मदीयः कुलशेखरसूरिः—इत्येव कीर्तय त्वम् ॥ [ विवरणम् ;—श्रीरामभक्तः कुलशेखरसूरिः श्रीरामचन्द्रदिव्यनामानि कथयितुं शुकशावं शिक्षयित्वा अथ तन्मुखात्तानि नामानि श्रुत्वा प्रहृष्यति स्मेति प्रसिद्धिः ; एवं श्रीकुलशेखरसूरिभक्ताग्रेसरः कोऽपि महान् कुलशेखरसूरिवरस्य तस्य दिव्यनाम शुकशावमुखाच्छुश्रूषमाणः कमपि कीरपोतमाह्वयति समयाह्यत्रेति । किमर्थमाह्वानमितिचेत् अमृतप्राशनार्थम् इत्याह । श्रीकुलशेखरसूरिनामशिक्षणमेव अमृत-प्राशनमिति स्पष्टीकृतमभूत । सच्छिष्यः शुकाशावत्वेनापदिश्यते । हे सच्छिष्य ! त्वं यदि श्रीकुलशेखर-दिव्यसूरिनाम कीर्तयेस्तुभ्यं तदीयदिव्यसूक्तिसुधां वितरेयमित्यपि कथितं भवति ॥ ] ... *

अथ द्वितीयं मुखपद्यम्— * आरमुकेड * ( विवर्तः । ) भगवतो नवरत्नमालिकाम् अमात्या मुषित्वा भागवतेषु चौर्यापराधमारोपयामासुर्यदा तदा भागवतभक्तिभूम्ना ' भागवता नैव चोरयेयुः ' इति कथयन् दन्दशूकघटे पाणिं प्रसारितवान्— शत्रुजनप्रतापनप्रवीणः कोल्लिनामकनगराधीशो धानुष्काग्रे-सरोऽभिषिक्तक्षत्रियसार्वभौमः श्रीकुलशेखरसूरिः ॥ [ स एष सूरिर्जयतु विजयतामिति शेषपूरणम् ॥ पद्येऽस्मिन् प्रतिपादितं चरित्रम् अनुपदमेव प्रकाश्यमाने श्रीकुलशेखरसूरिप्रभावे विशदं भविष्यतीति नात्र विस्तरः ॥ ] ... ... ... ... *

— इति मुखपद्य ( तनियन् ) विवृतिस्समाप्ता ॥ —

## अथ श्रीकुलशेखरसूरिवैभवम् ॥

कुम्भे मासि पुनर्वसुनक्षत्रे भुवि कृतावतारस्य । श्रीकुलशेखरसूरेर्वैभवमतिहृद्यमभिदधाम्यधुना ॥

चेरमण्डले कुक्कुटकोडनाम्न्यां राजधान्यां साम्राज्यमधिवहन् दृढव्रतो नाम [क्षत्रियः] भूपतिश्चिरादनपत्यतादुःस्वदूनमानसः श्रीमन्नारायणाराधनविशेषैर्व्यपगतविषादो भविष्यसीति महात्मभिरुदीरितस्तथैव भगवन्तमच्युतमिन्दिरापतिममन्दैराराधनैराराधयन् तत्फलतया विलक्षणदिव्यतेजसं कमपि तनूजं स्वकीयप्रधानमहिषीप्रसूतमलभत तिरुवञ्जिक्कळनाम्नि क्षेत्रवरे । ततश्चामन्दानन्दसंदोहकन्दलितस्वान्त एष सार्वभौमः—सोऽयं दिव्यशिशुर्नः कुले कीर्तिमप्रतिमामभिवर्धयिष्यतीत्यनेकहेतुभिरध्यवस्यन् नाम्ना कुलशेखरं चक्रे स्वमपत्यम् ।

कुलशेखरोऽयं शुक्लपक्षेन्दुवन्नित्यमभिवर्धमानः काले काले चौलोपनयनादिसंस्कारसंपन्नः साङ्गोपाङ्गान् वेदानधीत्य स्वजात्युपयुक्तानि नीतिशास्त्राणि रथगजतुरगादितन्त्राणि च निस्संशयविपर्ययमभ्यस्य सर्वोत्तुङ्गां चातुरीमुपलेभे नचिरादेव । अभिवीक्ष्य च तादृशमनुपमं चातुर्यमनवधि नन्दथुमन्तर्बिभ्राणो महाराजोऽमुमभ्यषिञ्चद्यौवराज्ये ।

अथ च दिग्विजयाय प्रस्थितश्चतुरङ्गबलान्वितः कुलशेखरभूपतिः चोलपाण्ड्यादिप्रभुवरान् विजित्य तन्मण्डलानि स्वायत्तान्याकलय्य चेरचोलपाण्ड्यप्रभुवर इत्याद्यनेकबिरुदावलीभूषितः सर्वत्र प्रसृमरभूरियशाः प्रचकाशे । तदनु दृढव्रतश्च सम्राट् "वार्धके मुनिवृत्तीनाम्" इत्युक्तरीत्या तापसवृत्तिमाश्रयितुमिच्छन् आत्मजन्मानमेनं मकुटाभिषेकमहोत्सवेनाभिनन्द्य सकलभुवनभारमस्यैव मूर्ध्नि प्रतिष्ठाप्य तपोवनमशिश्रियद्यथासमुदाचारम् ।

गुणानामाकरो महान् कुलशेखरभूपतिश्च पितृपादशासनमवतंसयन् अणुमात्रमप्यप्रस्खलितनीतिवर्त्मा अपरोऽयं रामचन्द्र इत्यशेषैरभिनन्द्यमानस्सुष्ठु प्रजाः परिपालयन् काले च गृहमेधी सन् अपरामिव नीलाम् इलां नाम पुत्रीं दृढव्रतं नाम पुत्रं च प्रसूय सकलविधसंपत्समुदयसमृद्धिभासुरस्संतोषसीम्नि समतिष्ठत । एवमनवधिमैहिकैश्वर्यमनुभवतोऽस्य मानसमामुष्मिके श्रेयसि समसृज्यत । ततश्च श्रुतिस्मृतीतिहासपुराणादिप्रवीणविपश्चिदपश्चिमसततसहवाससुरभिमानसो लौकिकीषु क्रियासु विरक्तिमश्नुवानो भगवतो नारायणस्य लक्ष्मीपतेर्निर्हेतुकविषयीकारपात्रभूतः स एक एव परं तत्त्वमिति द्रढीयांसमध्यवसायमनवरतमभिवर्धयन् भगवतो विभवावतारेषु रामावतारे भृशमनुरक्तः अर्चावतारेषु च श्रीरङ्गनाथे निष्प्रतिद्वन्द्वभक्तिभासुरः श्रीरामायणपठनपाठनैकपरायणः श्रीवैष्णवाराधनसमुत्सुकतानिधिरतिथिसत्कारविश्रुतकीर्तिरसमाभ्यधिकस्समैन्ध । स्वगृहाराधने भगवतो रामचन्द्रस्य राजगोपालस्य च दिव्यमङ्गलविग्रहौ परमसुन्दरौ सर्वाभरणभूषितौ समाराधयन् नित्यनैमित्तिकोत्सवादींश्च तयोर्विशेषतो निर्वर्तयन् स्वात्मीयां भगवद्भागवतभक्तिसंपदमन्यादृशीं प्राचीकशत् ।

श्रीरामायणदिव्यार्थान् स्वयमेव बोद्धुं बोधयितुं च कुशलोऽप्यसौ कुलशेखरः प्रवचनपरायणानां मुखतस्तच्छ्रवणमेव परमभोग्यं मन्वानः पण्डितमेकं परमभागवतं प्रत्यहमात्मीयमावसथमानाय्य तन्मुखाच्छ्रीरामकथामृतमास्वादयन् कालं चिक्षेप । अतियति चैवं काले, आरण्यकाण्डप्रवचनानेहसि * चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ * (२४—२३.) इत्यादिश्लोकार्थप्रवचनं विपुलतया प्रवर्तयति पण्डिते, कथां तां कालान्तरे देशान्तरे च प्रचलितामपि तदात्वे तत्रैव प्रचलन्तीं मन्यमानो भक्तिभूमभूमिर्भूपतिः "हा हन्त ! एतादृश्यां महीयस्यां भगवत आपदि चतुरङ्गबलसमन्विता वयं किं नु तूष्णीकास्स्थातुमर्हामः ; भगवद्विषये किंचित्काररहितानां धिग्धिग्जीवितम् ; न वयं निन्द्यजन्मानो भवेम ; अधुनैव वयं स्वकीयसेनासमूहसनाथाः पञ्चवटीप्रान्तं गत्वा असहायस्य

दाशरथेर्यथाशक्ति साहाय्यमाचर्य विजयश्रियं पश्येम " इत्युद्घुष्यन् सेनासन्नाहमादिशन् कोलाहलमुच्चावचं कलयन्नुदस्थात । एवमस्थाने समुज्जृम्भमाणमिमं संभ्रममदर्शनीयं संपश्यन् चिन्तीयमाणश्चेतास्तदुपायविदग्रणीस्स पौराणिकश्चातुर्यभूम्ना सद्य एव * तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् । बभूव हृष्टा वैदेही भर्तारं परिषस्वजे * इति तत्रैव विजयघट्टं वाचयित्वा असहायशूरस्यानपायसाहसस्य रक्षोबलक्षपणविचक्षणस्य रामभद्रस्य विजयश्रियं विशेषत उपन्यस्य अकाण्डकोलाहलमशीशमदवनीपतेः । ततःप्रभृति स पौराणिको यत्रयत्र रामचन्द्रस्य विजयप्रथा विशेषतो वर्णिता श्रीरामायणे, तत्रैव स्वकीयमुपन्यासप्रागल्भ्यं प्रपञ्चयन्, यत्रयत्र क्लेशवार्ताप्रसक्तयस्तत्र झटित्येन व्रजंश्च सन् जागरूक एवासीत्कथाप्रवचने ।

स पौराणिकः कदाचित्कार्यान्तरवैयग्र्येण ग्रामान्तरं गच्छन् श्रीरामायणप्रवचनाय स्वमात्मजं प्रणिधाय प्रभुवरस्यान्तिकम् । स च राज्ञः प्रकृतिमनवगच्छन् तस्मिन्दिने वक्तव्यतया समुपनतां सीतापहारकथां विषादमयीं विशेषतो विस्तृण्वन्नुपन्यास्थदहह । तदाकर्णनसमक्षण एव क्षितिपतिराग्रहस्य परां काष्ठां प्राप्नुवन् परितप्यमानमानसस्सहसा समुत्थाय ' सोऽहमधुनैव झटिति गत्वा उल्लंघ्य सिन्धोस्सलिलं सलीलम् अखिलजगन्मातरमस्मन्मातरमानीय मम पितू रामचन्द्रस्य पादयोस्समर्पयेयम् ' इत्याक्रन्दन् आयुधानि च बिभ्राणस्सेनाश्च सन्नाहयन् लङ्काभिमुखं प्रयातुं प्रतस्थे । प्रयाणवेगं च तं प्रेक्षमाणाः क्षितिजुषा दिविषदश्च आः ! कीदृगत्र पर्यवसानं भविष्यतीति पर्याकुला अवर्तन्त । पार्थिवस्तु पद्भ्यामेव तरेयं पयोनिधिमपीति समुद्घुष्यन् अवतीर्य चार्णवे कण्ठदघ्ने पयसि यावदगमत्तावदेवैतदीयभक्तिभरभाजनं रामचन्द्रो भगवान् प्रवृत्तिमस्य प्रतिरोद्धुमुपायान्तरमप्रतिपद्यमानः स्वयमेव सीतां पाणिना गृह्णन् सह च सौमित्रिणा पुरतस्समागत्य दिव्यदिव्यं दर्शनं दिशन् स्वकीयविक्रमातिशयं रक्षोगणक्षपणवैदग्ध्यं वैदेहीसमानयनं च समुद्गृणन् ' आगच्छ महाप्रभो ! गच्छेम पुरीम् ' इति तं सपरिवारं प्रत्यावर्तयन् प्रापयंश्च पुरीमन्तर्हितोऽभूत । तदिदमासीत्प्रभोस्संसारसागरसमुत्तारणसंसूचनमिव । एवमेवमवनीपतेरस्य भगवत्कथास्वभिनिवेश उच्चावचो वाचामभूमिरवर्तत ।

पौराणिकानामेव मुखात् श्रीरङ्गक्षेत्रमाहात्म्यमप्रमेयमाकर्णयन्नसौ चक्रवर्ती * कदाऽहं कावेरीतटपरिसरे रङ्गनगरे शयानं भोगीन्द्रे शतमखमणिश्यामलरुचिम् । उपासीनः क्रोशन् मधुमथन नारायण हरे मुरारे गोविन्देत्यनिशमपनेष्यामि दिवसान् ॥ * इत्युक्तप्रक्रियया स्वकीयामाशामतिमात्रं वर्धयन् परिजनपरिच्छदपरिवृतः प्रस्थातुं च समैहत । अमात्यास्तु ' यद्यसौ श्रीरङ्गक्षेत्रमधिगच्छेत्तर्हि तत्रैव नित्यनिवासं कामयेत; पुनरत्रागमनं मनसाऽपि न ध्यायेत् ' इति प्रतियन्तः प्रतिरोधोपायचिन्तापरास्सन्तः कांश्चन परमभागवतात् श्रीवैष्णवानातिथ्याय समुपस्थितान् कृत्वा पुरतोऽवस्थापयामासुः । " षष्टिवर्षसहस्रान्तं विष्णोराराधनात्फलम् । सकृद्वैष्णवपूजायाः फलेन न समं भवेत " इत्यमुं शास्त्रार्थमतिदृढमवधारयतोऽस्य धरणीपतेस्तदा श्रीवैष्णवाराधनकुतूहलातिशयसमृद्ध्या श्रीरङ्गयात्राकौतुकमबाध्यत । भूयसी च प्रवृत्तिर्भागवताराधने विजजृम्भे । एवं नाम यदा श्रीरङ्गयात्रोद्यमोऽस्य भवति तदा तदा सचिवैरेतादृश एव सदुपायस्संविधीयमान आसीत् । अतश्च श्रीवैष्णवाराधनप्रवृत्तिरेव नित्यशो वर्धमाना रङ्गयात्राप्रवृत्तिस्तु वाङ्मात्रेण वर्तमाना चासीत । अत एवायमुपश्लोक्यतेऽद्यापि * घुष्यते यस्य नगरे रङ्गयात्रा दिने दिने । तमहं शिरसा वन्दे राजानं कुलशेखरम् * इति ।

यदसौ भूमिपतिर्भागवताराधनप्रेमभूमानमनुपधिमनवधिमाविरकार्षीत्तदभिववृधे तत्र सर्वतो भागवतसमाजः । राजगृहं सर्वत्राप्यविशङ्कमतर्कितं च गतागतजुष आसन्ननेके भागवताः । तेषु च प्रीतिः प्रभोः पप्रथे वचसो वैदेशिकः । स्थित्यामस्यामतिमात्रमसूयामबिभरुरमात्याः । अचिन्तयंश्च कथमपि भूभृतो भागवतेष्वमीषु विद्वेषं जुगुप्सां वा मंक्षु जनयेमेति ।

श्रीराम-नवमीमहोत्सवस्संनिदधे । तदर्थमपरिमितान्यलङ्करणानि सर्वतस्समपद्यन्त । राजभवने रामचन्द्रमूर्तेरन्येषां च दिव्यमङ्गलविग्रहाणां दिव्याभिषेकनिर्वर्तनार्थं विग्रहतो दिव्याभरणान्युद्घाटितान्यभुवन् । विपुलवेदघोषवाद्यघोषसनाथं सुमहता समारोहेण समपादयन्नभिषेकमाराधकमहाभागाः । तदात्वे सर्वेषु च राजाधिराजप्रभृतिषु भगवत्सेवासमासक्तचित्तेषु सत्सु, भूषणबृन्देष्वन्यतमामनर्घां नवरत्नमालाममात्या अपहृत्य न्यगूहन् । अथ च भगवन्मूर्तीनां भूषणालङ्कारे प्राप्ते तां दिव्यभूषामनवेक्षमाणा आराधका अतिमात्रभयविषादविह्वला विनिवेदयन्तिस्म धरणीपतेः पुरः । सम्राट् च सचिवान् समाहूय भूषणमलिम्लुचो भवद्भिरविलम्बेन विमृश्यानेतव्य इति शास्तिस्म । अचकथन्नमात्यास्तदा 'महाप्रभो भगो ! श्रीवैष्णवा भागवता इति च सततमितस्ततः स्वैरमटन्तो मिथ्याभक्ता अमी एव मुषितभगवद्भूषणा भवितुमर्हन्ति ; नेतरेषामेतावती धृष्टता कदाऽपि भवेन्नाम ; तानन्तरेण नान्यत्र गता दिव्यभूषेति सत्यं शपामहे ; त एव प्रसभमवस्कन्दनीयाः ; तथा सति द्रुतमेव लभ्येत दिव्यभूषणं तत' इति । एवं कथनेन राज्ञो भागवतेषु वैमनस्यमुत्पादयितुमेव किल सचिवैर्भूषणमपजह्रे ।

अतिसाहसिकैर्जाल्मैरमात्यैरभिहितामिदं कर्णारुन्तुदं वचो विनिशम्य विश्वंभराधिपतिः हा हन्त हन्त कष्टं कष्टमिति सद्यः कर्णौ पिधाय हरिभक्तसाधुजनसद्गुणशीलादिसम्यगवबोधसौरभोल्लासिमनस्कतया पारमार्थिकभक्तेषु तेषु मनागपि मनोविकृतिमनुद्वहन् मृषाभाषिषु मंत्रिष्वेव महत्तरममर्षोद्वेगमावहन् "वैष्णवशिखामणयो न कदाऽपि मनसापि पातकमीदृशं कल्पयेयुः ; सत्यं सत्यमिदम्, तदेतदनवद्यं प्रमापयितुमद्भुतं च किमपि कर्म करवाणि पश्यत" इति संगिरमाणस्सपदि कुम्भमेकमन्तर्निहितदन्दशूकमानाय्य तदेव वाक्यं पुनरुच्चारयन् प्रासारयत्पाणिं कुम्भस्य कुक्षौ । पुनः पुनरवादीच्चैवं 'त्रिकरणशुद्धा एते श्रीवैष्णवा यदि भगवद्भूषां मुषितवन्तस्स्युः तर्हि दशतु कामं दन्दशूको मम शयम् ; प्राणैश्च मां वियोजयतु सद्यः' इति । सत्यबद्धस्सर्पः कथं नु दशेत् ? परं प्राचीकशत्प्रभुवरस्य सूनृतवादितां भागवतानां चाऽऽमेयं प्रभावम् ।

तदात्वे सचिवाः स्वकीयामसमीक्ष्यकारितामनुशयाना अतीव चकिताश्च महाप्रभोः पादपद्मयोः प्रणिपत्य साञ्जलिबन्धं सविनयं स्वकीयं दौरात्म्यमभ्युपगच्छन्तः क्षमां च प्रार्थयमाना उद्गीर्णबाष्पाम्बुनयनाश्चता अतिष्ठन् । क्षमाधनो महाप्रभुश्च "मनसा वाचा कर्मणा च नेतःपरं भागवतेषु द्रोहं वोढुमर्हथ यूयम् ; सर्वथा सर्वविधपरिचर्यास्तदीयपादपद्मेषु प्रयुज्य समुज्जीवत ; तत्पादसलिलपानमेव परमं प्रायश्चित्तमिदानींतनस्य पातकस्य" इत्यभिधाय पाययित्वा च तत्पादतीर्थं तानपि समुदजीवयत ।

अथ च महीपतिरनेकावद्यभाजनराज्यशासनधुरं वोढुमनिच्छन् निजमात्मजमभिषिच्य राज्ये, इलां नाम दुहितरं च श्रीरङ्गनाथभगवदेकपरिणयकामिनीं तथैव निर्वृत्तमनोरथां विरचय्य, स्वयं च भगवद्भागवताराधननिरतस्तत्रैव श्रीरङ्गधाम्नि कतिचन हायनान् यापयामास । अथान्यत्र च श्रीवेङ्कटाद्रिश्रीमदयोध्यादिदिव्यदेशेषु पर्यट्य तत्रतत्र भगवतो मङ्गलमाशास्य स्वानुभवपरीवाहरूपतया "पेरुमाळ् तिरुमोळि" इति प्रथमानां द्राविडाम्नायमयीं कृतिं च भवभयभेषजात्मिकामनुगृह्य सप्तषष्टितमे वयसि दिव्यं धाम जगाहे ।

स एव दिव्यसूरिः स्वकीये दिव्यप्रबन्धे श्रीवेङ्कटाद्रिविषयके दशके "श्रीमद्वेङ्कटशैलनाथ ! भवतो दिव्यालयप्राङ्गणे सोपानत्वमुपेत्य सोऽहमनिशं पश्यानि वक्त्रं तव" इति स्वकीयामाशंसामाविरकार्षीदिति हेतुना अद्यापि सर्वेष्वपि दिव्यदेशेषु मुखमण्टपस्थं पृथु सोपानं कुलशेखरसोपाननाम्ना संप्रदायरसिकैर्व्यपदिश्यत इति वेदितव्यम् ॥

इत्थं श्रीकुलशेखरसूरिवरस्य प्रभावमनिहवम् । ये ध्यायन्ति वदन्ति प्रलिखन्ति त एव धन्यजन्मानः ॥

इति श्रीकुलशेखरसूरिवैभवं समाप्तम् ॥

---

॥ श्रीः ॥

श्रीकुलशेखरदिव्यसूरिचरणावेव शरणम् ॥

श्रीकाञ्चीप्रतिवादिभयङ्कर-अण्णङ्गराचार्यकृतिषु द्राविडाम्नायदिव्यप्रबन्धविवर्ते

प्रथमसहस्रे पञ्चमो दिव्यप्रबन्धः पेरुमाळ्तिरुमोळि—श्रीकुलशेखरसूक्तप्रबन्धः ॥

अवतरणिका ॥ पेरुमाळ्तिरुमोळीति द्राविडवाणी श्रीकुलशेखरसूक्तमित्यर्थं बिभर्ति । श्रीकुलशेखरसूरेः * पेरुमाळिति साम्प्रदायिको व्यवहारः । भगवन्तं रामचन्द्रं दाशरथिं संप्रदायवृद्धा महान्तः पेरुमाळित्येव व्यपदिशन्ति द्राविडभाषायाम् । श्रीरामचन्द्रस्य दिव्यावतारनक्षत्रे ( पुनर्वसुभे ) अवतीर्णोऽयं दिव्यसूरिरिति, तमेव रामचन्द्रमाराध्यदैवतं स्वीकृतवानिति च हेतुना तमिमं पेरुमाळित्येव व्यवजह्रुस्तदात्वे । अत एवादसीयो दिव्यप्रबन्धः पेरुमाळ्तिरुमोळीति पप्रथे । द्राविडवेदव्यासपदमलङ्कुर्वाणेन श्रीमन्नाथमुनिना सहस्रचतुष्टयात्मना विभक्तेषु दिव्यप्रबन्धेषु प्रथमसहस्रे पञ्चमप्रबन्धतया निवेशितोऽयं दिव्यप्रबन्धः शब्दतोऽर्थतश्च परमभोग्यः । अत्र च दश दशकानि विलसन्ति । गाथास्तु पञ्चोत्तरशतसंख्याः प्रथमदशके श्रीरङ्गनाथस्य भगवतः सेवाविषयामुच्चावचप्रक्रियाभिरुदघाटयत । द्वितीये दशके श्रीरङ्गनाथभगवद्भक्तजनतानां वैभवं वाचामभूमिमवदत । तृतीये, भगवति श्रीरङ्गनाथे स्वकीयमुन्मादातिशयं प्राकृतजनसहवासविमुखतां च व्याचख्यौ । चतुर्थे, श्रीवेङ्कटाद्रौ नित्यवासकुतूहलेन तत्र नानाविधानि जन्मानि मनोरथपदे न्यधत्त । पञ्चमे, केरळमण्डलस्थ "तिरुवित्तुवक्कोडु" नामकदिव्यदेशाधीशस्य भगवतस्सविधे स्वकीयमनन्यगतित्वम् अनेकोदाहरणप्रपञ्चनमुखेन प्राचीकशत । षष्ठं सप्तमं च दशकं कृष्णावतारचेष्टितानुभवप्रचुरं निबबन्ध ; तत्र षष्ठदशके, प्रणयरोषविवशगोपिकावर्ष्मणा बभाषे । सप्तमे, कृष्णचेष्टिताद्यनुभवभाग्यहीनाया देवक्या वाचा प्रलापविलापानत्याश्चर्यशैल्या प्रबबन्ध । अष्टमे, श्रीरामचन्द्रशिशुं डोलातल्पमधिशाय्य गीतवत्याः कौसल्याया वाचा दाशरथिदिव्यगुणानन्वभवत ; तिरुक्कण्णपुरदिव्यदेशभगवदनुभवं चात्र चकार । नवमे, कैकेयीवाग्वागुराबन्धबलेन रामचन्द्रं वनं प्रति प्रस्थापितवतो दशरथस्य महत्तरशोकपरीवाहभूताः प्रलापा निबद्धाः । अथ दशमे चित्रकूटदिव्यदेशस्थभगवदनुभवः कृत्स्नरामायणकथानुसन्धानमुखेन व्यरचि । एवं नाम परमविलक्षणान् दशविधाननुभवान् प्रकाशयद्भिर्दशभिर्दशकैर्विभूषितोऽयं दिव्यप्रबन्धो भक्तजनभाग्यपरिपाकात्मा रसघनस्समिन्धे ॥

---

## श्रीकुलशेखरसूक्ते—प्रथमं दशकम्—इरुळिरिय ॥

१. ( इरुळिरियच्चुडर्मणिहळिमैक्कुम ) श्रीरङ्गनामनि महति धामनि ध्वान्तनिरासकज्वालावलीविभासुरमणिगणोद्भासिसहस्रफणामण्डलमण्डितज्योतिःपुञ्जमयानन्तसंज्ञ-सितसमुत्तुङ्गफणिपतिशयनमधिशयानम् सुप्रसन्नपयोभरितसह्यजावीचिमालापरिचरितचरणकमलम् नीलमणिनिभम् सुकुमारदिव्यविग्रहं श्रीरङ्गनाथं संसेव्य मम दृशौ कदा नु प्रहृष्येताम् ? ॥ [ वि. श्रीरङ्गे उभयकावेरीमध्ये शेषतल्पमधिशयानं भगवन्तं सेवितुमेधमानं स्वोत्कण्ठातिशयं प्रकाशितवान् । ❀ कदाऽहं कावेरीतटपरिसरे रङ्गनगरे शयानं भोगीन्द्रे शतमखमणिश्यामलरुचिम्—इत्यादिश्रीपराशरभट्टार्यसूक्तिरिमां गाथामनुसृत्यावतीर्णा ॥ ] ... ... ... ... १

२. ( वायोरीरैञ्जूरुतुदङ्गळान्दं ) सौगन्ध्यसंभृते ( अथवा ) प्राकारात्मकरक्षापरिकर्मिते श्रीरङ्गधामनि सहस्रनामस्तुतिभरितसहस्रवक्त्राढ्ये धवलदिव्यविग्रहे अपायशङ्कया स्वेनोद्वान्तस्य विषाग्नेर्ज्वालाविततिमुपरिष्टाद्वितानभावं प्रापयत्युरगराजे शयानम् अतसीगुच्छसच्छायम् आश्चर्यगुणचेष्टितं महान्तं भगवन्तं कदाऽहं स्तवानि वाचस्साफल्याय आमोदस्तम्भमवलम्ब्य तिष्ठन् ॥ [ वि. श्रीरङ्गेशयपरिसरे सौवर्णकवचावृतमामोदस्तम्भद्वयमवभासते । तिरुमणत्तूणिति भाषानाम । भगवद्दिव्यमङ्गलविग्रहगतसौगन्ध्यसर्वस्वमेव स्तम्भात्मना परिणतमिति तन्नामव्यपदेशः । " स्तम्भपार्श्वे तिष्ठन् " इत्यनभिधाय ❀ स्तम्भमवलम्ब्य तिष्ठन्निति यदुक्तमत्र तस्य हृदयं श्रीपराशरभट्टार्य आविष्करोति श्रीरङ्गराजस्तवे ❀ शेषशयलोचनामृतनदीरयाकुलितलोलमानानाम् । आलम्बमिवामोदस्तम्भद्वयमन्तरङ्गमभियामः ॥ ❀ इत्यनेन पद्यरत्नेन । श्रीरङ्गनाथदिव्यनयनद्वंद्वात् कटाक्षामृतनदीप्रवाहे भूरितरे प्रसर्पति सति तेन व्याकुलितानां लोलमानानां च भक्तानां सोऽयमामोदस्तम्भ एव नूनमालम्बो भवतीति हृदयम् ॥ ] २

३. ( एम्माण्विनयन्नान्गुनाविनालुम् ) भृशमतिशयितप्रभावे चतुर्मुखे स्वकीयाभिश्चतसृभिरपि जिह्वाभिरुच्चैस्स्तुवति सति, चतुर्भिरपि मुखैर्वेदानुद्गृणाने सति, अष्टाभिरपि नयनैस्सादरमासेवमाने सति श्रीरङ्गधाम्नि शेषतल्पे कमलसनाथनाभीपुटं प्रकाश्य शयानस्य स्वामिनः पादद्वंद्वपरिसरे प्रसूनमालिकाः प्रक्षिप्य तत्रत्यैः किङ्करैस्साकं कदा नु परिचरेयम् ॥ [ वि. श्रीरङ्गराजस्तवोत्तरशतके ❀ सगर्भ्यासविशालया निजधिया जानन्ननन्तेशयं भारत्या सहधर्मचाररतया स्वाधीनसंकीर्तनः । कल्पानेव बहून् कमण्डलुगलद्गङ्गाप्लुतोऽपूजयत् ब्रह्मा त्वां मुखलोचनाञ्जलिपुटैः पद्मैरिवावर्जितैः ॥ ❀ इत्ययं श्लोकः प्राय इमामेव गाथामनुवदतीति वेदितव्यम् ॥ ] ... ... ... (३)

४. ( माविनैवाय् पिळन्दुहन्द मालै ) कंसप्रेरिततुरगरूपकेशिदैत्यहननेन प्रहृष्टम्, जलधिसवर्णम् अस्मादृशामपि सुलभतया कृष्णरूपेणावतीर्णम् पुरा गोवर्धनाद्रिं छत्रतयोद्धृत्य कलितगोरक्षणम् गोपालपुंगवं नित्यसूरिनाथम् परममधुरद्राविडाम्नायस्तुत्यम् संस्कृतवेदप्रतिपाद्यम् मुक्तप्रायविरक्तजनाध्युषिते श्रीरङ्गक्षेत्रे शेषशय्यामधिशयानं च स्वामिनमुच्चैरभिष्टूय पुष्पमालिकास्समर्प्य कदा पुनरञ्जलिबन्धेनाभ्यर्चयेयम् ॥ ... ... ... ... (४)

५. ( इणैयिल्लाविन्निशै याळ्केळुमि ) परमानन्दतुन्दिलतुम्बुरुनारदाभ्यां परममधुरस्वनवीणागानप्रवर्तनपूर्वकमभिवन्दितमभिष्टुतम् निजनाभीकमलसंभवद्रुहिणकर्तृकेण नमस्करणेन वेदवाक्तिकथनेन च निरन्तरमासेव्यमानम् मणिमयप्रासादसम्पदाढ्यप्राकारपरिवृतश्रीरङ्गमन्दिरे फणिनमधिशयानं च मणिवर्णं परमपुरुषं कदा नु चक्षुषा वीक्ष्य मूर्ध्ना प्रणमेयम् ? ॥ ... ... (५)

६. ( अळिमलर्मेलयनरानिन्दिरनोडु ) कमलासनगौरीपतिशचीपतिभिस्सह अन्यैरप्यमरैर्वृन्दशस्सेव्यमानस्य, रम्भाप्रभृतिभिरमरयोषिज्जनैः सुप्रसन्नमतिभिर्महर्षिभिश्च समन्तादहमहमिकया पुष्पसमर्पणपूर्वकं निषेव्यमाणस्य, मधुस्यन्दिपुष्पसंभृतमहोद्यानपरिवृते श्रीरङ्गधामनि उरगराजमधिशयानस्य च जलधिसवर्णस्य श्रीरङ्गनाथस्य नयनारविन्दं मुखचन्द्रं च कदा नु संसेव्य द्रवीभूतहृदयो भवेयम् ॥ (६)

७. ( मरन्तिहल्लुमनमोळित्तु वञ्जमात्ति ) मानसकलमषाण्यपोह्य वञ्चनाचारं व्युदस्य दुरवगत्वराणीन्द्रियाणि निगृह्य दुःखोदर्काणि दुरितानि च समूलमुन्मूल्य पञ्चकालपरायणप्रथां प्राप्य प्राचीनसदाचारपद्धतिबद्धादरा ये महान्तः तेषां परमधार्मिकाणां श्रीवैष्णवानां परमप्राप्यभूतम् कवेरकन्यापरिवृते

श्रीरङ्गधामनि भोगिभोगशय्यामधिशयानं परमसुन्दरमाश्चर्यशीलं श्रीरङ्गिणं कदा नु संसेव्य समुद्गीर्णबाष्पाम्बुनयनो वर्तेय ॥ [वि. पञ्चकालपरायणा इति वैदिककर्मनियतानुष्ठानशीलाः सदाचारसम्पन्ना महान्तः प्रशस्यन्ते । दिवसभागान् प्रातस्सङ्गवमध्याह्नापराह्णसायाह्नभेदेन पञ्चधा विभज्य, सूर्योदयात्प्रभृति घटिकाषट्कम् क्रमश एकैकस्य कालस्यावधित्वेन परिकल्प्य, प्रातःकाले अभिगमनम् सङ्गवकाले उपादानम्, मध्याह्नकाले इज्याम्, अपराह्णकाले स्वाध्यायम्, सायाह्नकाले योगं च येऽनुतिष्ठन्ति महात्मानो भगवच्छास्त्रोक्तप्रक्रियया ते पञ्चकालपरायणाः प्रोच्यन्ते । प्राथमिकघटिकाषट्कात्मके प्रातःकाले स्नानसन्ध्यावन्दनादीनि नित्यकर्माणि परिसमाप्य स्वाराध्यदैवतस्य सन्निधौ प्रदक्षिणनमस्क्रियास्तुत्यादिकरणम् अभिगमनाभिलप्यम । अथ भगवदाराधनोपयोगिशुद्धसलिलचन्दनपुष्पधूपदीपादिसंभरणपूर्वकं भोग्यभोगोपकरणादिनानावस्तुसन्नाहनम् द्वितीयघटिकाषट्कात्मके सङ्गवकाले सम्पाद्यमुपादानपदसंशब्दितम् । अथ च माध्याह्निकानुष्ठानानि परिसमाप्य भगवदाराधनं च निर्वर्त्य भगन्निवेदितस्य सोपस्करस्यान्नवर्गस्य बन्धुमित्रातिथिभिस्साकं स्वीकरणम् तृतीयघटिकाषट्कात्मके मध्याह्नकाले संपाद्यमिज्यानुष्ठानम् । अथ च श्रुतीतिहासपुराणपाञ्चरात्रदिव्यप्रबन्धतद्व्याख्यानादिरूपाणामाध्यात्मिकप्रबन्धानामध्ययनमध्यापनं च चतुर्थघटिकाषट्कात्मके अपराह्णकाले संपाद्यं स्वाध्यायपदोदितमाचरणम् । अथ सायंसन्ध्यावन्दनादि यथायथमनुष्ठाय भुक्तिं च परिसमाप्य विविक्तदेशे सुसुखं स्थित्वा पञ्चेन्द्रियपराक्रमनिग्रहपूर्वकं मनोवृत्तिं परमात्मन्येव प्रतिष्ठाप्य भगवद्गुणानुसन्धानेन श्रीवैकुण्ठगद्यकीर्तनेन च सह शयनम् पञ्चमघटिकाषट्कात्मके सायाह्नकाले संपाद्यं योगपदाभिलप्यमनुष्ठानम् । एवंरीत्या नियतमनुष्ठाने ये जागरूकास्सन्ति तेषां योगक्षेमनिर्वहणे भगवान् श्रीरङ्गनाथः स्वयं धुरन्धरो भवतीति गाथयाऽनया कथितं भवति ॥ ]... (७)

८. (कोलार्न्द नेडुञ्शार्ङ्गम् कूनर्च्चङ्गम्) सायकनिवहपरिकर्मितं श्रीशार्ङ्गसमाख्यं धनुः, पाञ्चजन्याभिधानः शङ्खः, सुदर्शनाख्यश्चक्रराजः, कौमोदकीसमाख्या गदा, नन्दकाख्यः खड्गवर इत्युक्तायां पञ्चायुध्याम्, वायुवेगशालिनि जयशीले गरुत्मति पक्षिराजे, अन्येषु चाखिलेषु भक्तवर्गेषु समन्ताद्रक्षणाभिमुखेषु सत्सु—मीनततिविहृतिभरितैर्महत्तरैः केदारैरारामैश्च परिवृते श्रीरङ्गे दिव्यधाम्नि शेषशय्यामधिशयानं सर्वोत्तुङ्गं श्रीरङ्गनाथं महापापी सोऽहं कदा नु संसेव्य परमानन्दसान्द्रसंश्लेषसुखं च विन्देय ॥ [वि. श्रीवैकुण्ठस्तवे * त्वां सेवितं जलजचक्रगदासिशार्ङ्गैस्तार्क्ष्येण सैन्यपतिनाऽनुचरैस्तथाऽन्यैः । देव्या श्रिया सह वसन्तमनन्तभोगे भुञ्जीय साञ्जलिरसङ्कुचिताक्षिपक्ष्मा ॥ * इति श्रीकूरनाथगुरूक्तं पद्यरत्नम्, * नाथनिद्रोचितोन्निद्रतामेक्षणां सञ्चरन्तीं स्तुमस्तां च पञ्चायुधीम् * इति श्रीरङ्गराजस्तवे भट्टपादोक्तं चात्रानुसन्धेयम् । ] ... ... ... (८)

९. (तूराद्मनक्कादल् तोण्डर्तङ्गल् कुळाम् कुळुमि) सन्ततानुभवेऽपि मनागपि तृप्तिमविन्दताम् उत्तरोत्तरमुज्जृम्भमाणौत्सुक्यानां परमभक्तानां परिषदि निषद्य भगवतो दिव्यकीर्तीर्भूयसीस्संकीर्त्य पुष्कलेन हर्षप्रकर्षेण सह बाष्पधारावृष्टिमक्षिद्वंद्वादवकीर्य द्रवीभूतेन हृदा सह स्तुत्वा, सततमम्भोधिघोषसनाभिनानावाद्यघोषमुखरे श्रीरङ्गक्षेत्रे फणिपतिशयनमधिशयानं परुषहेतिराजपाणिमस्मत्स्वामिनं कदा नु संसेव्य ससंभ्रमनृत्तं च कृत्वा स्वात्मानं विस्मृत्य भूतले लुठेयम् ॥ [वि. * गायन्ति केचित्प्रल-

पन्ति केचित् नृत्यन्ति केचित्प्रणमन्ति केचित्। पतन्ति केचिद्विलुठन्ति केचित्क्रन्दन्ति केचित्प्ररुदन्ति केचित ॥ * इत्युक्तास्संभ्रमप्रक्रियाः परमभक्तानां संभविन्य इति ध्येयम् ।] ... ... (९)

१०. (वन्पेरुवानहमुरयवमररुय्य) स्वर्गलोकसमुज्जीवनार्थममराणामुज्जीवनार्थम् भूलोकसंजीवनार्थम् भूनिलयसकलमनुजसमुज्जीवनार्थम् दुःखोदर्कपापराशिप्रध्वंसनार्थम् दुःखासंभिन्नसुखसन्ततिसमभिवृद्ध्यर्थम् आनन्दसान्द्रभक्तवर्गसंजीवनार्थं च सप्रेमभरं दक्षिणदिशाभिमुखं शयानस्य श्रीरङ्गिणो मन्दिरप्राङ्गणे परमभक्तश्रीवैष्णवानामानन्दैकनिरूपणीयां महतीं गोष्ठीमासेव्य कदा नु सोऽहमपि तेष्वन्यतमस्सन् तस्यामेव गोष्ठ्यां वर्तेय ॥ [वि. * भुवो भूत्यै भूभुजां भूसुराणां दिवो गुप्त्यै श्रेयसे देवतानाम् । श्रियै राज्ञां चोलवंशोद्भवानां श्रीमद्रङ्गं सह्यजामाजगाम ॥ * इति पौराणिकश्लोकरत्नमनुसृत्य गाथाया अस्याः पूर्वार्धमवतीर्णमिति संदर्शयन्ति गुरुचरणाः ॥] ... .... (१०)

११. (तिडर्विळङ्ग करैप्पोन्नि नडुवुपाट्टु) सैकतपरिवृततीरप्रान्तविभासुरकावेरीमध्यदेशे श्रीरङ्गनामनि धामनि फणिपरिवृढशय्यामधिशयानस्य जलधिडिम्भडम्भस्पृशो नीलतनोः परमेश्वरस्य रङ्गनाथस्य सेवाहेवाकं प्रकाशयता साम्राज्यलक्षणलक्षितेन परमोदारेण दक्षिणमधुरापुरीनाथेन श्रीकुलशेखरसूरिणा कथितं सर्वलक्षणसम्पन्नं परमभोग्यद्राविडभाषामयमिदं गाथादशकमधीयानास्सन्तः कल्याणगुणगणाकरस्य श्रीमतो नारायणस्य पादच्छायायां विराजेरन्निति फलकीर्तनेन समापितमिदं दशकम् ॥ ११

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यमिहानुसन्धेयम्—

श्लो० ॥ श्रीरङ्गे दिव्यधामन्यजगिरिशसहस्राक्षमुख्यैरमर्त्यैः
योगीन्द्रैर्नारदाद्यैरपि च कृतनुतिं भोगिभोगे शयानम् ।
साकं भक्तैरनन्यैः परिचरितुमहो ! हा कदा भाग्यभाक् स्याम
इत्येवं स्वस्य कामानतिविपुलतया ख्यापयन् सूरिरीड्यः ॥

इति श्रीकुलशेखरसूक्ते प्रथमं दशकमवसितम् ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## २. श्रीकुलशेखरसूक्ते—द्वितीयं दशकम्—तेट्टरुन्तिरल् ॥

अवतारिका ॥ अधस्तनदशके बह्वीषु गाथासु भागवतानामपि प्रशंसा कृता भगवदनुभवमध्ये । भगवद्विषयावगाहनादपि भागवतविषयेऽवगाहनं हि वरीयः । भागवतप्रावण्यं यदा विवर्धते तदैव भगवत्प्रावण्यं संसिद्धिमुपैति । पारमार्थिकं भगवत्प्रावण्यं भागवतप्रावण्यातिशयसमुत्पादनाय कल्पते ह्यवश्यम् । अत एव भगवान् कुलशेखरसूरिरस्मिन् दशके स्वकीयं भगवद्भक्तजनप्रावण्यातिशयं बहुभिः प्रकारैः प्रख्यापयति । भागवतगोष्ठीदर्शनमेव चक्षुषोः साफल्यावहम् , भागवतपादारविन्दपरागनिषेवणं गङ्गास्नानादप्यतिरिच्यते, भगवद्भक्तभक्तेषु उन्माद एव मम वास्तविकी स्थितिः—इत्यादि कथयन् सूरिवरोऽसौ दशकमिदमतिविलक्षणप्रक्रियया निबध्नाति । गीतायाम् * ज्ञानी त्वात्मैव मे मतम् * इति भगवानपि गायतिस्म । भागवतान् स्वस्यापि धारकान् नियामकान् शेषिभूतांश्च खलु मन्यते भगवान् ; अन्यथा तु ज्ञानिषु भागवतेष्वात्मत्वव्यपदेशो न हि घटेत । ज्ञानी आत्मा चेत भगवान् तच्छरीरं हि भवति । * यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम् तच्छेषतैकस्वरूपम् तत्तस्य शरीरम् * इति खलु शरीरलक्षणमामनन्ति भाष्यकाराः । एतादृशशरीरलक्षणसंपन्नत्वं खलु भगवान् स्वस्मिन्नभ्युपैति । एवं भगवतोऽप्यात्मभूतेषु भागवतेषु प्रावण्यं भगवत्प्रावण्यादप्यतिशयितमित्यत्र कस्संदेहः । तथानामातिशयितं तद्भक्तप्रावण्यं दशकेऽस्मिन् प्रतिपाद्यत इति हेतुना दशकमिदं पूर्वाचार्याणामत्यन्तादरपात्रं वेदितव्यम् ॥

१. ( तेट्टरुन्तिरल्तेनिनै ) स्वप्रयत्नेन लिप्समानानामत्यन्तं दुर्लभम् , स्वानुभवोपयोगिबलसम्पत्प्रदातारम् मधुवत्परमभोग्यम् लक्ष्मीसनाथम् अम्लानवनमालाविभूषितवक्षसं च श्रीरङ्गशायिनं स्तुत्वा मोहविवशमानसा ये नृत्यन्तो भगवन्नामानि क्रन्दन्तश्च ज्ञानविपाकरूपमज्ञानमासादयन्ति, तथाविधानां पारमार्थिकभागवतानां गोष्ठ्या अवलोकनभाग्यं यदि लभेमहि तदेव हि सत्यं चक्षुषोः फलम् ॥ [ वि. स्वप्रयत्नेन लिप्समानानामत्यन्तदुर्लभमित्यत्र * समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं भक्तजनैर दुर्लभम् * इत्येषा श्रीकूरनाथगुरुवरदिव्यसूक्तिरनुसन्धेया । * नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् * इत्युपनिषच्च ।। " स्वानुभवोपयोगिबलसम्पत्प्रदातारम् " इत्यत्र * य आत्मदा बलदाः * इति श्रुतिर्विभाव्या । भगवान् हि स्वानुभवमिव स्वानुभवार्थबलाढ्यतामपि वितरतीति वेदपुरुषो वैदिकाश्च प्राहुः । अल्पिष्ठप्राकृतविषयोपभोगं प्रत्येव यदि बलाढ्यताया आवश्यकता स्यादथ किमु वक्तव्यं गरिष्ठपरमपुरुषभोगं प्रति विलक्षणबलाढ्यत्वमावश्यकमित्यत्र । तादृशमपि बलं स एव स्वयमनुगृह्णाति स्वात्मानमिवेति वेदितव्यम् ॥ [ वनमाला ] * आपादपद्मं या माला वनमालेति सा मता * इत्याहुः ॥ ] ... ... ... (१)

२. ( तोडुलामलर्मङ्गैतोळिणै ) भगवतः सरसिजनिलयासंश्लेषवैदग्ध्यम् , सुग्रीवप्रत्यायनाय तेजिष्ठसायकप्रयोगतस्सप्तसालभेदनम् गोगणसञ्चारणमित्यादिकमनुचिन्त्य प्रेमवैवश्येन नृत्यतां गायताम् भगवन् भो रङ्गनाथेति क्रोशतां च भक्तानां पादाब्जरेणुषु विगाहनं यदि सिध्यति तर्हि गङ्गावगाहनकुतूहलमपि विफलम् ॥ ... ... ... ... (२)

३. ( एरडर्त्तदुमेनमाय् निलम्कीण्डदुम् ) नीलादेवीपरिणयार्थं सप्तवृषभौद्धत्यसमुत्सादनम् , दिव्यवराहरूपमास्थाय कृतं भूमीसमुद्धरणम्, दाशरथिरूपमास्थाय कृतं वैरिव्रातावलेपविलोपनम्, त्रिवि-

क्रमरूपमास्थाय कृतं भूमण्डलसमाक्रमणं च सानन्दं संकीर्त्य कवेरकन्याप्रवाहनिर्विशेषं प्रवाहितया नयनाम्बुधारया श्रीरङ्गमन्दिरप्राङ्गणं पङ्किलं विदधतां परमभागवतानां पादाब्जलग्नं जम्बालमहं तिलकपदे विन्यस्येयम् ॥ ... ... ... ... ... (३)

४. (तोयूत्ततण्डयिवेंण्णेय् पालुडनुण्डलुम्) सज्जीकृतं दधि नवनीतं दुग्धं च युगपदुपभुज्य तदवलोकनतः कुपितया यशोदया प्रापितदामबन्धस्य (पुरा कृष्णतयाऽवतीर्णस्य) अस्मत्स्वामिनो रङ्गनाथस्य दासानाम् उच्चैर्मुहुर्नारायणेति क्रन्दतां प्रणमतां स्तुवताम् अत एव प्रहृष्यतां च परमभक्तानां दिव्यचरणानेव मम मानसमभिष्टौति ॥ ... ... ... (४)

५. (पोय्शिलैक्कुरलेत्तेरुत्तमिरुत्तु) असुरावेशभरित-दारुणध्वनिकराल-सप्तवृषभौद्धत्यनिरसनेन नीलादेवीं परिगृहीतवन्तम् कालियनागमर्दननिर्दयम् तेजिष्ठसुदृढमहाप्राकारपरिवृतश्रीरङ्गदिव्यक्षेत्राधिनाथं सधनुष्ककालमेघोपमेयं च भगवन्तं परमपुरुषं स्वहृदये बिभ्राणान् अत एव सदा पुलकाञ्चितवपुषश्च भागवतानेव ध्यात्वा मम मनो हर्षप्रकर्षविवशं बोभवीति ॥ ... ... (५)

६. (आदियन्दमनन्दमर्पुदमान) निखिलजगन्निदानस्य संवर्तसमयेऽपि जाग्रतः त्रिविधपरिच्छेदरहितत्वेनानन्तव्यपदेशभाजः अत्यद्भुतस्य देवाधिदेवस्य रङ्गनाथस्य पादाब्जमवतंसयितुं स्पृहया दरिद्रान् पापिनोऽपि समुज्जीवयितुं तीर्थाटनापदेशेन सर्वत्र सञ्चरताम् स्वानुष्ठानमुखेन निरवद्यसन्मार्गसंदर्शनसमर्थानाम् अस्मत्स्वामिनि श्रीरङ्गनाथे परमभक्तिनिघ्नानां भागवतानामेव विषये मम मानसं सर्वेष्वपि जन्मसु स्पृहयालु भवेत ॥ [वि. "सर्वेष्वपि जन्मसु" इत्यनया वचनव्यक्त्या, परमभागवतपादारविन्दप्रावण्यं यदि घटेत तर्हि भूयोभूयो जननमपि वरम् इत्ययमर्थः स्फोर्यते । भागवतप्रेमविधुराणां जन्म हेयमिति च सूचितं भवति ॥] ... ... ... ... (६)

. (कारिनम्पुरै मेनिनर्कदिर्) जीमूतनिवहसदृशदिव्यगात्रम् दिव्यलावण्यनिधिम् मौक्तिकोपमेयमन्दस्मिताञ्चितदिव्याधरम् मुक्ताहारविभूषितदिव्यवक्षस्स्थलम् विलक्षणतेजःपुञ्जमयं श्रीरङ्गनाथ सततमनुभोक्तुकामानाम् अत एव सन्ततस्रवदश्रुपूराणां परमभक्तानां पादद्वन्द्व एव मे मनः प्रेमशालि विलसति ॥ ... ... ... .. (७)

८. (मालैयुत्त कडल्किडन्दवन्) उत्तरङ्गकलशोदधिशायिनम् मधुपानार्थनिषण्णमधुपावलीभुज्यमानतुलसीस्रगलङ्कृतविशालविमलवक्षसं पुण्डरीकाक्षं श्रीरङ्गनाथं कामयमानानां व्यामोहातिशयेन नृत्यताम् गायतां दिव्यदेशेषु पर्यटतामुन्मत्तकल्पानां भक्तानां विलक्षणश्रियं विचिन्त्य मे मानसं व्यामुग्धमिव हंहो ॥ ... .. ... ... (८)

९. (मोय्त्तुकण्पनिशोर मेय्कल्शिलिर्प्प) सन्ततप्रवाहया नयनाश्रुधारया रोमाञ्चित तनुश्रिया विह्वलविक्लबदशया महत्तरकोलाहलात्मकनर्तनकीर्तनादिनिरताः अस्मत्स्वामिनि श्रीरङ्गनाथे किङ्करवृत्त्या विभासुरास्सन्तो ये नाम तस्मिन्नेव भगवति विराजन्त्युन्मत्ता इव, न ते उन्मत्ताः, तदितरे सर्वेऽपि सत्यमुन्मत्ताः ॥ ... ... ... ... (९)

१०. (अल्लिमामलर्मङ्गैनादन्) सरसिजवासिनीसहायस्य श्रीरङ्गनाथस्य पारमार्थिकभक्ता ये, तेषां चरमपर्वदास्ये निष्णातेन सम्राजा श्रीकुलशेखरसूरिणा प्रोक्तमिदं परमभोग्यं गाथाबृन्दमधीयानास्सन्तो दासदासा भवितारः— इति फलकीर्तनेन समापितमिदं दशकम् ॥ ... ... (१०)

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यमिहानुसन्धेयम्—

श्लो ॥ लक्ष्मीसंश्लिष्टवक्षस्स्थलमुरगशयं रङ्गनाथं प्रपन्नाः
ये भक्ता आर्द्रचित्ता स्सततहरिकथाकीर्तनैकान्तवक्त्राः ।
तद्वृन्दालोकनं तत्पदकमलपरागावतंसित्वमेव
स्यान्मे, नान्यः पुमर्थो वसति मम हृदीत्यूचिवान् सूरिरीड्यः ॥

इति श्रीकुलशेखरसूक्ते द्वितीयं दशकमवसितम् ॥

—— x ——

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ३. श्रीकुलशेखरसूक्ते—तृतीयं दशकम्—मेय्यिल्वाऴ्क्कैयै ॥

अवतारिका ॥ भगवत्प्रावण्यं प्रथमदशके विशदीकृतम् । अथ द्वितीयदशके ततोऽप्यतिशयितं भागवतप्रावण्यमाविष्कृतम् । अभागवतेषु मुमुक्षुत्वगन्धविरहितेषु केवल बुभुक्षुषु यथा वर्तितव्यमस्मादृशैः प्रपन्नैः सोऽयं प्रकारः स्वनिष्ठाप्रख्यापनमुखेन ज्ञाप्यते दशकेऽस्मिन् ॥ * वरं हुतवहज्वालापञ्जरान्तर्व्यव स्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसम् * इति ह्याहुर्महामतयः; हुतवहज्वालामध्ये स्थितिः कथ-ञ्चित् सह्या भवेन्नाम; भगवच्चिन्ताविमुखजनसहवासस्तु सर्वथा सुदुस्सहो भवति पारमार्थिकभक्तानाम् । भक्ताग्रणीर्विभीषणो निजाग्रजं दशाननमुपदेशशतैर्विनेतुकामस्सन्नपि फललेशमपि नापश्यत; * त्वां तु धिक्कुलपांसनम् * इति तेन विगर्हितश्चाभूत; सद्य एव ' भगवद्भक्तिविकलो भागवतप्रेमदरिद्रश्च स एष पापी सहवासयोग्योऽपि न ' इति निर्धार्य, * उत्पपात गदापाणिश्चतुर्भिस्सह राक्षसैः । एषा हि वैखरी पारमार्थिकभक्तानाम् । तामेव वैखरीं प्रकाशयति दशकमिदम् । देहात्माभिमानदूषितैस्सह न संवसेयम्, स्त्रीलोलुपानां परिसरेऽपि न वर्तेय, मदनकदनविवशानां सविधेऽपि न गच्छेयम्, अशनाच्छादनगवेषणैक-सक्तैस्सह न युज्येय, सत्पथवैमुख्येन दुरध्वाध्वन्यान्नोपसर्पेयम्; किं बहुना? सर्वथा मद्विसजातीयैस्सह न संवसेयम् इति स्वकीयं दुर्जनसंवासवैमुख्यमतिविपुलं प्रकाशयति श्रीकुलशेखरसूरिः ॥

१. (मेय्यिल्वाऴ्क्कैयै) क्षणभङ्गुरजीवितमेव पारमार्थिकजीवितत्वेन गृह्णता प्राकृतनिवहेन सह न संवसेयम् । स्वामिन् श्रीरङ्गनाथेति भगवन्नामान्येव सततमावर्तयन् वर्ते । मयि वत्सले भगवत्ये-वाहं व्यामुग्धोऽभूवम् ॥ ... ... ... (१)

२. (नूलिनेरिडैयार्तिरत्तेनिर्कुम्) कृशोदरीषु वनितास्वेव सक्तैः प्राकृतैस्सह नाहं युज्येय; श्रीरङ्गधामन्नित्युच्चैराक्रोशन् नृत्यंश्चाहं मयि व्यामुग्धे भगवति व्यामुह्यामि बत ॥ ... (२)

३. (मारनार्वरिवेञ्जिलैक्कु) इक्षुधन्वनो मारस्य दारुणधनुष एव ये किङ्करास्तादृशैः प्राकृ-तैस्सह न संमिलेयम्; हारस्फुरदुरसोऽनन्तस्य नारायणस्य नरकान्तकस्य रङ्गनाथस्य विषये ग्रह-मुग्धमत्तः ॥ .... ... ... ... (३)

४. (उण्डियेउडैये उहन्दोडुम्) अशनमाच्छादनं चैव कामयमानानां तदर्थमितस्ततो धावतां च प्राकृतानां निवहे नाहं संगतस्स्याम्; भगवति परमेष्ठिनि पूतनास्तन्यपायिनि श्रीरङ्गनाथे हि व्यामुग्धोऽहम् ॥ ... ... ... ... (४)

५. (तीदिलन्नेरिनिर्कं) निरवद्यां समीचीं सरणिमुत्सृज्य विपरीतमेव नियतमाचरताम-नीतिपथयायिनां समाजे न संगतो भवेयम् ; जगन्निदाने गोपालकृष्णे लक्ष्मीनाथे भगवतो रङ्गनाथे भृश-मुन्मत्तोऽस्म्यहम् ॥ ... ... ... ... (५)

६. (एम्बेरत्तरल्लारोडुमकूडलन्) अनन्यप्रयोजनतायां मत्साधर्म्यविरहितैस्सह न संव-सेयम् ; स्वभोगमपि तृणीकृतवानहम् ; नित्यसूरिनाथे श्रीरङ्गनाथे परम् अनारतमुन्मत्तोऽस्मि ॥... (६)

७. (एत्तिरत्तिलुम्) पुण्डरीकाक्षो भगवान् सर्वथा धूर्तसंवासकामुकं चेतो निरास्थत [ दुर्जन-संवासस्पृहां दूरीचकारेति यावत् ] । स्वामिन् रङ्गप्रभो ! इति तमेवाह्वयामि ; तस्मिन्नेव प्रभुपरिवृढेऽहमस्मि भृशमुन्मत्तः ॥ ... ... ... ... (७)

८. (पेयरे येनक्कि यावरुम्) प्राकृता स्सर्वेऽपि मम धिया नूनमुन्मत्ताः ; सर्वेषामपि धिया सोऽहमप्युन्मत्तः । किं फलमिह विपुलकथनेन ? श्रीरङ्गनाथेत्येव सततमाक्रोशामि, मदीयस्वामिन्येवाह-मुन्मत्तो भवामि ॥ ... ... ... ... ... (८)

९. (अङ्गैयाळियरङ्गनडियिणै) हेतिराजाभिरामदिव्यपाणितलस्य श्रीरङ्गनाथस्य चरण-द्वन्द्वे प्रवणेन अद्वितीयेनोन्मत्तेन राज्ञा कुलशेखरेण कथितमिदं सूक्तमधीयानास्सन्त स्सर्वथा निरवद्या भवितार इति फलकीर्तनेन समापितमिदं गाथयैकया न्यूनं दशकम् ॥ ... ... (९)

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यम्—

श्लो॥ देहे विद्युत्समाने विरचितरुचिभिर्भङ्गुरेष्वेव भोगे-
ष्वासक्तैः रङ्गिपादाम्बुजनतिविमुखैः प्राकृतैर्धूर्तचर्यैः ।
साकं नैवान्वितस्स्यां भगवति कमलावल्लभे रङ्गभर्त-
र्येकस्मिन्नस्मि सक्तोऽहमिति कथयता सूरिणाऽहं सनाथः ॥

इति श्रीकुलशेखरसूक्ते तृतीयं दशकमवसितम् ॥

——: ० :——

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ४. श्रीकुलशेखरसूक्ते—चतुर्थं दशकम्—ऊनेरुशेल्वत्तु ॥

अवतारिका ॥ भगवति श्रीरङ्गनाथे तद्भक्तेषु च भक्तिभूमानम् इतरेषु वैमुख्यं च त्रिषु दशकेष्व-भस्तनेषु प्रकटितवान् श्रीकुलशेखरसूरिरधुना श्रीवेङ्कटाद्रिनाथे भगवति प्रवणहृदयस्सन् विलक्षणमर्थविशेषं प्रकाशयतीह । * कुलं रूपं वयो विद्या धनं च मदयन्ति * इत्युक्तरीत्या गर्वहेतुषु पञ्चसु सत्स्वपि प्रथम-परिगणितं कुलम् अत्यन्ताहङ्कारहेतुर्भवति जगति प्रायः । 'नाहं जघन्यजातौ जातः ; अपितु उत्तुङ्गजाति-लन्माऽस्मी'ति अवलेपहेतुर्हि भवति बहूनामग्रिमं कुलम् ; तत्त्वदर्शिनस्तु भगवद्भागवतदास्यानुकूलं जन्म यद्वातद्वा भवतु नाम ; सैव सत्कुलप्रसूतिरित्यवधारयन्तः अभिजनाहङ्कारविदूरगा भवन्ति । * जनित्वाहं वंशे महति जगति ख्यातयशसां शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् * इत्यनया सूक्त्या (स्तोत्ररत्ने) स्वकीयमुत्तुङ्गवंशजननं प्रख्यापितवताऽपि भगवता यामुनमुनिना * तव दास्यसुखैकसङ्गिनां

भवनेष्वस्त्वपि कीटजन्म मे । इतरावसथेषु मास्म भूदपि मे जन्म चतुर्मुखात्मना * इति प्रार्थना प्राकाशि । * पत्युः प्रजानामैश्वर्यं पशुत्वं वा न कामये । अहं कदम्बो भूयासं कुन्दो वा यमुनातटे ॥ * आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् । या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ * इत्यादिप्रमाणगणप्रतिपन्नम् उद्धवादीनामाशंसनमप्यत्रानुसन्धेयम् । तथा नाम श्रीकुलशेखरसूरिवरोऽप्यसौ श्रीवेङ्कटाद्रौ नानाजन्मकामनां प्रकटयति दशकेनानेन ॥

१. (ऊनेरुशेल्वत्तुट्ल्पिरवि) नीलादेवीपाणिग्रहणस्पृहया तच्छुल्कभूतं सप्तर्षभौद्धत्यनिरसनमाचरितवतो भगवतः कैङ्कर्यमेव कामये, न पुनर्मांसप्रचुरदेहयोगम् ; ( भगवत्कैङ्कर्यमपि मा भूत ; भगवत्संबन्धविशिष्टे देशविशेषे क्वापि कोणे यत्किमपि वा जन्म भूयात ) श्रीपाञ्चजन्यपाणेर्भगवतो वेङ्कटमहीधरे स्वामिपुष्करिण्यां बकजन्मा भवानि ॥ [ वि. ननु सूरिवरस्यास्य वेङ्कटाद्रौ वासः खलु उद्देश्यः ; तेन च वेङ्कटाद्रौ वसेयमिति वा वेङ्कटाद्रौ जायेय इति वा कथनं योग्यम् ; इह तु न तथा प्रोक्तम् ; मांसप्रचुरदेहयोगं न कामये इति किमर्थमुपक्रान्तमिति चेत ; श्रीवेङ्कटाद्रिनित्यवासविरोधिभूतजन्म मा भूदिति तदाशयः । देहे मांसप्रचुरत्वविशेषणबलात मुमुक्षुजन्मैव ममोद्देश्यम्, बुभुक्षुजन्म मा भूदित्यपि कथितं भवति । स्वामिपुष्करिणी—श्रीवेङ्कटाद्रौ सुप्रसिद्धस्तीर्थविशेषः । वराहपुराणादिषु तत्प्रशस्तिरवलोकनीया ॥ ] ... ... ... ... (१)

२. (आनादशेल्वत्तु) अभङ्गुरयौवनसम्पदाढ्यसुरस्त्रीगणमध्ये संपत्स्यमानं स्वर्लोकसाम्राज्यं वा भूलोकसाम्राज्यं वा न कामये ; अपि तु मधुस्यन्दिदिव्योद्यानपरिवृते श्रीवेङ्कटशैले क्वापि जलाशये मीनजन्मलाभौपयिकभाग्यवान् भूयासम् ॥ [ वि. अधस्तनगाथायां बकजन्मा भूयासमित्याशंसा प्रकाशिता ; बकस्तावत विहङ्गमविशेषः ; अत एव स पक्षाभ्यामुड्डीय ततोऽन्यत्रापि गन्तुं शक्तः । तथा गमने वेङ्कटाद्रिनित्यवासो हि न सिध्येत ; अतश्च तस्मिन् जन्मनि अनुपपत्तिरस्तीति मत्वा अन्यजन्म कामयते गाथायामस्याम् । मीनो हि स्वाश्रयादन्यत्र गन्तुं न पारयतीति तज्जन्मकाङ्क्षणं क्रियते । इदानीमेव झषजन्मना भवितव्यमिति न निर्बन्धः ; यदाकदापि वा तज्जन्म घटतामित्याशयं व्यनक्ति " मीनजन्मलाभौपयिक भाग्यवान् भूयासम् " इत्येष वचोविन्यासः ॥ ] ... ... ... (२)

३. (पिन्निट्टशडैयानुम्) जटाधरचतुर्मुखशचीपतिप्रभृतीनां सुरवराणामपि भक्तजनसम्मर्दातिशयेन अन्तः प्रवेष्टुमशक्यस्य भूलोकवैकुण्ठव्यपदेशभाजो वेङ्कटाद्रेर्द्वारि श्रीसुदर्शनपाणेः श्रीनिवासस्य भगवतः ताम्बूलचर्वणानन्तरभाविनिष्ठीवनोपयुक्तसौवर्णकलशधारी सन् अन्तरङ्गपरिचारकैस्साकम् अन्तःप्रवेशभाग्यशाली भूयासम् ॥ [ अधस्तनगाथायां मीनजन्मन्याशंसा प्रकाशिता ; तत्रापि काचिदनुपपत्तिर्भासे ; मीनो हि जलैकजीवातुर्जन्तुः ; जले शुष्के सति मीनो न हि जीवेत ; * नच सीता त्वया हीना नचाहमपि राघव ! । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥ * इति खल्वाह श्रीरामायणे सौमित्रिः । एवंविधां झषजन्मन्यनुपपत्तिमभिसन्धाय किङ्करविशेषजन्म काङ्क्षति गाथयाऽनया । जगति महाराजस्ताम्बूलचर्वणानन्तरं तन्निष्ठीवनार्थं पात्रविशेषं पालयितुं कमपि सेवकं बिभर्ति ; तथा श्रीवेङ्कटाद्रिनिलयः कमलाकामुकोऽपि सौवर्णकलशपाणिं किङ्करं धत्ते ; तस्य पदवी काङ्क्षिता भवति ॥ भगवत्परिसरगमनसौकर्यार्थमेतज्जन्मकाङ्क्षणमिति ध्येयम् ॥ ] ... ... ... (३)

४. (ओणपवळवेले) चारुविद्रुमादिरत्नौघभासुरशिशिरकलशोदधिशायिनो ( वेङ्कटाचलपतेः ) भगवतः पादद्वंद्वसिसेविषया, उच्चावचगीतमुखरभ्रमरौघसंकुले श्रीवेङ्कटाचले चाम्पेयमहीरुहजन्मौपयिकभाग्यं कामये ॥ [ वि. भगवत्पादाब्जसेवनेच्छया चम्पकवृक्षजन्म कामये—इति गाथयाऽनया कथ्यते ; चम्पकवृक्षजन्मलाभे सति भगवत्पादारविन्दसेवा कथं घटेतेति शङ्का मा भूत ; भगवतो बहिर्यात्रावसरेषु

सुलभमेव तत्सेवनमिति । अधस्तनगाथायाम् किङ्करविशेषजन्म काङ्क्षितम्; तत्रापि काचिदनुपपत्तिरभात्; सौवर्णकलशे करस्थिते सति स्तेयबुद्धिरपि जातुचिज्जायेत; भगवत्परिसरगमने नानाविधा अपचारा अपि संभवेयुर्नाम इति विभाव्य स्थावरविशेषजन्मैव भूयादिति काङ्क्षति गाथयाऽनया ॥ ] (४)

५. ( कम्बमदयानै ) मत्तमातङ्गमूर्धनि निषद्य नानाविधानन्दोपभोगरूपां सम्पदं साम्राज्यं च नाहं कामये; सर्वेश्वरस्य भगवतोऽभिरामे वेङ्कटमहीधरे वन्ध्यवृक्षविशेषो वा भूयासम् ॥ [ वि. अधस्तनगाथाप्रकाशिते चम्पकानोकहजन्मन्यवाके काचिदनुपपत्तिरवभाति स्म; पुरा नरकासुरं निहत्य शचीपतिसकाशं गतो भगवान् वासुदेवः सत्यभामादेवीमनोरथपूरणाय स्वर्लोकात्तस्मात्पारिजाततरुमुत्खाय वैनतेयस्कन्धे निवेश्य द्वारकामानिनायेति प्रसिद्धम् । चम्पकतरुरपि तथा नाम स्पृहणीयोऽनोकहविशेषः । श्रीवेङ्कटाद्रिमनुदिनमागच्छत्सु महाराजेषु सार्वभौमेषु अन्यतमः कोऽपि भूरुहमेनं कामयते यदि, भगवते श्रीनिवासाय किमपि धनं समर्प्य तमुत्खाय नेतुमपि प्रभवेन्नाम इत्यतिशङ्कया स्पृहणीयवृक्षजन्मरुचि विहाय तदितरवन्ध्यवृक्षजन्म कामयते गाथयाऽनया । पत्रशलाटुफलादिषु किञ्चिदप्यसुवानः छायामात्रमप्यप्रयच्छन् वन्ध्यवृक्षविशेषो भूयासमिति कामनाऽत्र भवति । * कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाकोटकमित्यादिसुभाषितमिह विभाव्यम् ॥ ] ... ... ... (५)

६. ( मिन्ननैयनुण्णिडैयार् ) ऊर्वशीमेनकादीनां कृशोदरीणामप्सरसां गानलास्याद्युपभोगरूपं स्वर्भोगं नाहमाद्रिये; षट्पदझङ्कारमुखरे श्रीवेङ्कटशिखरिणि तत्तादृशः शिलाखण्डविशेषो भवितुं भाग्यवान् भूयासम् ॥ [ वि. अधस्तनगाथायां वन्ध्यवृक्षजन्म यदाशंसितं तत्राप्यनुपपत्तिमप्रतिसन्धानमभूत्सूरिवरस्य; राज्यशासनधुरन्धराः पार्थिवाः खलु तदातदा पर्वतादिषु वृक्षषण्डशोधने प्रवर्तन्ते; उपयोगदरिद्राननोकहान् इन्धनार्थमुपयोगाय विक्रेतुं छिन्दन्ति; तथा नाम कृते वेङ्कटाद्रिवासभाग्यं प्रच्युतं स्यादित्यतिशङ्का समजनि; अत एव शिखरिशिखरात्मना जनितुं कामयते गाथयाऽनया । ] (६)

७. ( वानाळुम् मामदिपोल् ) गगनमण्डलोद्भासकशशधरमण्डलसन्निभश्वेतच्छत्रच्छायायाम् राजाधिराजभावेन सिंहासनमलङ्कृत्य सर्वोपलालनीयस्थितिरूपां सम्पदं सम्पत्त्वेन न मन्ये; मधुस्यन्दिपुष्पोद्यानसान्द्रे श्रीवेङ्कटाचले वन्यनिर्झरो भवितुं कामयेय ॥ [ वि. अधस्तनगाथायां महत्तरशिलाखण्डजन्म यदाशंसितम् तत्राप्यनुपपत्तिमनुसन्दधे सूरिवरः; तत्रतत्र नूतनदेवालयनिर्मापणसमुत्सुका महाप्रभवः पर्वतेभ्यः शिलाखण्डानाहरन्ति; आहृत्य च स्वैरं बिम्बविशेषमन्यदन्यच्च निर्मापयेयुः । तर्हि मनोरथोऽस्मदीयो विपर्यासमियादित्यध्यवस्यन् अहार्यनिर्झरजन्म कामयते गाथयाऽनया ॥ ] ... ... ... ... ... (७)

८. ( पिरैयेरुशडैयानुम् ) शशिकलाञ्चितकपर्दशालिना कपर्दिना विरिञ्चेन वासवेन च यथायथमाचर्यमाणानां यज्ञविशेषाणां फलेग्रहित्वकरणे प्रभवता भगवता श्रीनिवासेन सनाथे सौरभाढ्यशिशिरोद्यानपरीते श्रीवेङ्कटमहीधरे भक्तजनसञ्चारार्हः पन्था भूयासम् ॥ [ वि अधस्तनगाथायां निर्झरजन्म यदाशंसितम् तदप्यनुपपत्तिग्रस्तमिति प्रतिभातिस्म; निर्झरस्रोतो हि सन्ततं न वर्तते; कदाचिद्विलुप्येतापि; किञ्च निर्झरस्रोतसामेकत्रैवावस्थितिरसम्भविनी; अन्यत्र सुदूरमपि प्रवहणं भवति खलु; तदा काङ्क्षितसिद्धिर्न संभवतीति मत्वा, श्रीशैलगमनोत्सुकभक्तजनसञ्चारयोग्यमार्गभावं कामयते गाथयाऽनया ॥ ... ... ... ... (८)

९. ( शेडियायवल्विनैहळ्तीर्क्कुम् ) दुर्मोचोद्भटकर्मनिर्मोकनिपुण श्रियःपते ! परमपुरुष ! श्रीवेङ्कटाद्रिनाथ ! भवदालयमुखद्वारे भागवतानां निर्जराणां निर्जरयोषितां च पादन्यासयोग्यस्य दिव्य-

सोपानस्य जन्म लब्ध्वा संसेविषीय भवदीयं विद्रुमसममधरम् ॥ [ वि. मार्गभावो ह्यधस्तनगाथायामाशंसितः; एकं स्थानं प्रति एक एव मार्ग इति न हि नियमः; बहवस्सन्ति पन्थानः। 'तन्मार्गापेक्षया अयं मार्गो लघीयान् नेदीयानिति गृहीत्वा भक्तजनता यदि नवीनपरिकल्पितमार्गान्तरेण व्रजेयुस्तर्हि मदिष्टसिद्धिर्न भवेत्खलु इति शङ्कमानस्सूरिवरः सर्वजनतानियतास्थेयसोपानभावं कामयते गाथयाऽनया । गाथायामस्यामीदृशीमाशंसामनुसृत्य श्रीशैले अद्यापि व्यवहारस्सम्पद्यते कुलशेखरसोपानम् ( कुलशेखरप्पडि ) इति । भगवन्मुखारविन्दसन्निकृष्टस्य सोपानस्य तावदेवं व्यवहारः । श्रीवेङ्कटाद्रौ केवलमेवं न; सर्वेष्वपि विष्णवालयेषु । एतेन च गम्यते सूरेरस्य नानाजन्माशंसनं सर्वदिव्यदेशविषयकमिति ॥ ] ... (९)

१०. ( उम्बरुलहाण्डु ) स्वर्लोके एकच्छत्राधिपत्यसम्पत्प्राप्तिपूर्वकमूर्वशीपरिरम्भलाभमपि नाद्रियेय; विद्रुमसमाधरस्य भगवतो वेङ्कटमहीध्रनाम्नि दिव्ये धाम्नि यत्किमपि वा वस्तु जायेय ॥ [ वि. अधस्तनगाथायां श्रीवेङ्कटाद्रीशभगवन्मुखभागे सोपानभाव आशंसितः; तत्र प्रयोजनद्वितयमभिलषितमभूत्; सन्ततभगवन्मुखारविन्दसेवनम् , भक्तजनपादपरागनिषेवणं च । परंतु प्रयोजनद्वितयमेतत् असिद्धमपि स्यात्; कथम्? अतिमात्रसम्पदाढ्ये भगवन्मन्दिरे शिलामयसोपानसद्भावो नोचित इत्याशयानैर्महाधनिकैर्भक्तप्रवरैः अथ देवस्थानधर्मनिर्वाहकैर्वा सोपानोपरि सौवर्णकवचनिर्मापणे कृते सति भक्तजनपादपांसुनिषेवणं भगवन्मुखारविन्दसेवनं च सुवर्णकवचैकसुलभं सोपानदुर्लभं च स्यात् खलु, अतस्तस्मिन्नपि जन्मन्यस्वारस्यप्रतीतिरुदियाय सूरिवरस्य । ननु आशंसासमय एव सौवर्णसोपानभावाशंसने कृते अनुपपत्तिरियमप्रसक्ता स्यादिति चेत्; तदाऽपि निरतिशयसम्पत्समृद्धिभूम्ना उत्तरोत्तरं रत्नखचितत्वादिसंभवेन शङ्कितानुपपत्तितादवस्थ्यं दुर्निवारमेव । अतश्च गाथायामस्याम् अनुपपत्तिप्रतिसन्धानयोग्यताविरहाय "श्रीवेङ्कटाद्रौ यत्किमपि वा वस्तु जायेय" इत्याशंसनमाविष्क्रियते । "यत्किमपि वा वस्तु" इत्यत्र अनन्तालवान्नामा गुरुवर एवमर्थमभ्यधत्त—श्रीवेङ्कटाद्रिनाथात्मकं वस्तु वा जायेय इति । अत्र किं तात्पर्यमिति चेत् , भगवच्छेषभूतवस्तुत्वेन जनिं कामयमानस्यास्य सूरिवरस्य शेषिभूतभगवदात्मना अवस्थितिकाङ्क्षणमनुद्देश्यमेव स्यात्; तथाऽपि श्रीशैलवासमात्रे परमपुरुषार्थत्वेन अभिसंहिते सति भगवदात्मना अवस्थितिकाङ्क्षणं नानुपपन्नं स्यादिति ॥ अथ श्रीपराशरभट्टार्या अत्रैवमर्थमाचचक्षिरे— [ श्रीशैले यत्किमपि वा वस्तु जायेय ] सर्वज्ञो भगवानपि मास्म जानात्; अहमपि मा नाम ज्ञासिषम्; तथा नाम यत्किमपि वा जन्म घटताम्—इति । सर्वथा श्रीशैलवास्तव्यत्वमेव परमपुरुषार्थतयाऽभिसंहितमिति कथितं भवति ॥ ] ... ... ... ... (१०)

११. ( मन्नियतण्शारल् ) अतिशिशिरपरिसरपरिक्रमितस्य श्रीवेङ्कटाद्रेरीशितुर्भगवतः श्रीनिवासस्य पादाब्जसेवाहेवाकिना क्षत्रियकुलानुरूपवर्मभृता श्रीकुलशेखरसूरिणा कीर्तितमिदं स्वादुद्राविडवाङ्मयं गाथादशकमधीयानाः सत्पुरुषा योग्यभक्ता भवितार इति फलकीर्तनेन समापितमिदं दशकम् ॥११

तथा चैतद्दशकसारांशसंग्राहकमिदं पद्यम्—

श्लोक ॥ भूयासं वेङ्कटाद्रौ बकजनिरथ वा मत्स्यजन्मा भवेयम्
यः कश्चित्किङ्करस्स्यामथ तरुरथ वा निर्झरो वाऽश्मखण्डः ।
भूयासं मार्गरूपी हरिनिलयमुखे दिव्यसोपानकं स्याम्
यत्किंचिद्वस्तु वा स्यामिति विविधजनीराशशंसात्र सूरिः ॥

इति श्रीकुलशेखरसूक्ते चतुर्थं दशकमवसितम् ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ५. श्रीकुलशेखरसूक्ते-पञ्चमं दशकम्-तरुतुयरम तडायेल् ॥

अवतारिका ॥ प्रपित्सूनां जनानां आकिञ्चन्यमनन्यगतित्वमित्युभयम् अतिमुख्या अधिकारसम्पत् । आकिञ्चन्यं नाम— * न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे * (स्तोत्ररत्ने) इत्युक्तप्रक्रियया कर्मयोगज्ञानयोगाद्युपायान्तरेषु मात्रयाऽप्यनन्वितत्वम् । अथ अनन्यगतित्वं नाम— ' हे भगवन् ! त्वमापन्निवारको वा भूयाः अथ आपदभिवर्धको वा भूयाः ; सर्वथा त्वमेव शरणं मम ' इत्यनुसन्धानपूर्वकं तदेकगतिकत्वम् । इदं तु प्रपन्नानामत्यावश्यकं लक्ष्म । यदा सम्पद्विवर्धते तदा भगवन्तं स्तुयुः ; यदा तु विपदुद्भवति तदा तं निन्देयुरपि निर्घृणो भगवानिति । सम्पद्विपदुद्भवरूपाया मुभय्यामपि दशायां समरूपमेव भगवति परमकारुणिकत्वानुसन्धानं ह्युत्तमभक्तलक्षणम् । इदमेव दशकेऽस्मिन्नाविष्क्रियते । भगवतस्तु चेतनानां विषये प्रियपरता हितपरता चेत्युभयं वर्तते ; प्रियपरस्सन् सम्पदो ददाति ; हितपरस्सन् विपदो वितरति-इत्यनुसन्धाने सत्यनपाये भक्तास्सर्वथाऽपि तस्मिन् परमकारुणिकतामेव हि प्रतिपत्तुं प्रभवन्ति । तदिदमस्मिन्दशके विविधोदाहरणपूर्वकमुपन्यस्यते ॥ केरलमण्डले "तिरुवित्तुवक्कोडु" समाख्यो दिव्यदेशविशेषो विलसति ; तदधिनाथस्य भगवतस्सन्निधौ दशकमिदं विज्ञाप्यत इति वेदितव्यम् । अर्थविशेषाणां यत्रकुत्रचा दिव्यदेशे प्रकाशनं हि दिव्यसूरीणां समुदाचारः । एकस्मिन् दिव्यदेशे विज्ञापितोऽर्थः सर्वदिव्यदेशाधीशभगवत्सन्निधाने विज्ञापितो वेदितव्य. ॥

१. (तरुतुयरम् तडायेल्) सौगन्ध्यसम्भृतपुष्पविततिविभूषितदिव्योद्यानपरिवृतविद्वत्क्रोडक्षेत्राधीश भो भगवन् ; त्वयैव समुत्पाद्यमानान् क्लेशान् त्वं न निरस्यसि चेदपि त्वमेव गतिरस्माकम् ; त्वत्पादारविन्दादन्यत्र नः शरणमस्ति नाम ; लोकेजननी यद्यपि महता कोपावेशेन स्वकीयं स्तनन्धयं निरस्यति तथाऽपि तस्याः कारुण्यमेवानुसन्दधानस्स शिशुर्विलपन्नपि यथा तामेवानुधावति तथा ह्येतत ॥ [ वि. भगवद्यामुनार्य कूरनाथ भट्टपादादयः अस्मदीयाः पूर्वाचार्याः स्वस्वप्रणीतेषु स्तोत्रप्रबन्धेषु दिव्यप्रबन्धगाथा भूयसीरनुवदन्तिस्मेति विपुलं निरूपितमस्ति तत्रतत्रास्माभिः ; भगवान् यामुनमुनिः स्वकीये स्तोत्ररत्ने यदाह * निरासकस्यापि न तावदुत्सहे महेश ! हातुं तव पादपङ्कजम् । रुषा निरस्तोऽपि शिशुः स्तनन्धयो न जातु मातुश्चरणौ जिहासति * इति तदिद मस्या एव गाथायाः प्रतिच्छन्द इति प्रतिपत्तव्यम् ॥ ] ... ... ... ... ... (१)

२. (कण्डारिहळवनवे) गगनस्पृशा प्राकारेण परिवृतस्य विद्वत्क्रोडदिव्यदेशस्य स्वामिन् हरे ! सर्वैरपि गर्हणीयानि दण्डनानि कुर्वन्तमपि भर्तारं विसृज्य कमप्यन्यं यथा न कामयते कुलयोषित तथाऽहं भृशमुपेक्षमाणमपि भवन्तमृते नान्यं जाने तवैव पादाब्जे कीर्तयेयम् ॥ ... ... (२)

३. (मीन्नोक्कुनीळ्वयल्शूळ्) अप्सवितततिविहृतिभरितविपुलकेदारपरीतविद्वत्क्रोडस्थलेश्वर भगवन् ! मयि कृपार्द्रदृष्टिपातमकुर्वन्तमपि भवन्तं नाहं विसृजेयम् ; त्वदेकशरणो भवामि ; प्रजारक्षणदीक्षितो महाप्रभुः परिपालनमकृत्वा क्लेशानेवोच्चावच्चान् संपादयति चेदपि यथा स एव प्रजाभिः शरणवरणकर्मतां नीयते [तस्यैव दिव्याज्ञापरिपालननिरता यथा प्रजा भवन्ति] तथाऽहमपि भवदेकगतिकः ॥ (३)

४. (वाळालरुत्तुच्चुडिनुम्) भगवन् भो विद्वत्क्रोडपुरेश ! आमयावी जनो निजगात्रच्छेदनतापनादिदारुणकृत्यनिष्णातेऽपि भिषजि यथा भृशमनुरक्त एव भवति तथाऽहमपि सन्ततदुःखसंदायकेऽपि भवति न वीततृष्णो भवामि ; कैङ्कर्यरुचिविवशस्सन् त्वत्कृपामेव प्रतीक्षमाणो वर्ते ॥ [ वि. * हरिदु-

खानि भक्तेभ्यो हितबुद्ध्या करोति वै । शस्त्रक्षाराग्निकर्माणि ( स्वपुत्राय पिता यथा ) रुग्णाय हि भिषग्यथा * इत्यार्षवचनमिहानुसन्धेयम् ॥ ] ... ... ... ... (४)

५. ( वेङ्गट्टिण कळिरट्टत्ताय् ) स्वजिघांसुकंसप्रेरितं भीषणालोचनं कुवलयापीडाभिधानं मत्तमातङ्गमभिभूतवन विद्वत्कोडपुरेश भगवन् ! त्वदीयचरणयुगलप्रपदनादन्यत्किमस्ति मम संजीवनस्थानम् ? न किमप्यस्ति । वीचिमालाकुले जलनिधौ नौकाया मूर्धभागमध्यासीनो विहगविशेषः स्वयं सर्वतः परिभ्रमन्नपि कुत्रापि गतिमलभमानो यथा स्वस्थानमेवाञ्छति ; तथाऽहमप्यनन्यगतिरिति मन्यस्व भगो ! ॥ [ वि. नौकामूर्धस्थाने भगवान ग्राह्यः ; विहङ्गमस्थाने तु सूरिरेषः ; सागरस्थाने संसारसागरश्च ॥ ] (५)

६. ( शेन्तळल वन्दळले ) अयि भगवन् विद्वत्कोडदेशाधीश ! यथा सरसीरुहं नभोमण्डलसञ्चारिगभस्तिमालिगभस्तिमालाभिरेव विकासमयते न पुनः स्वपरिसरे सुतीक्ष्णवह्निसन्तापितं सदपि ; तथाऽहमपि भवदीयशुभगुणगणैकविकासनीयहृदयोऽस्मि ; त्वं ममार्तिहारी न भवसि चेदपि निरपायोऽयमध्यवसायो मम ॥ ... ... ... ... (६)

७. ( एत्तनैयुम् वान्मरन्द कालत्तुम् ) भो विद्वत्कोडपुराधिनाथ हरे ! सस्यानि यथा जलदैरुपेक्षिताम्यपि तानेव कालमेघान सकुतूहलं प्रतीक्षन्ते तथाऽहमपि भवदनपोढदुःखोऽपि सन् भवदेकसक्तचित्तो भवामि ॥ ... ... ... ... ... (७)

८. ( तोक्किलङ्गियारेल्लाम् ) सान्द्रजलदविततिसंनिभदिव्यमङ्गलविग्रह ! भगवन् विद्वत्कोडक्षेत्रपते ! सुकृतस्वरूपिन् हरे !, परिपूर्णपयःप्रवाहभरितानां सरितां सर्वासामपि * नदीनां सागरो गतिरित्युक्तरीत्या यथा पारावार एव परमा गतिर्भवति तथा भवदीया मनोहराः कल्याणगुणा एव मम शरणं भवन्ति ॥ [ वि. अन्ततो भगवद्गुणगणानुभूतिरेव सर्वेषां प्रपन्नानां धारकपोषकभोग्यस्थानीयेत्युक्तं भवति ॥ ] ... ... ... ... (८)

९. ( निन्नैये तान्वेण्डि ) जाज्वल्यमानहेतिराजपाणे भगवन् विद्वत्कोडपुरीश !, यथा ऐहिकी सम्पत्तिः स्वात्मानमुपेक्षमाणमपि भगवत्प्रवणं जनं स्वयमुपसर्पति कामयमाना सती, तथाऽहमपि मदुपेक्षकं भवन्तमेव कामये ॥ [ वि. यो भक्तो भगवति लक्ष्मीपतावेव प्रेमभूमभरितस्सन् अर्थसम्पत्तिमुपेक्षते तं जनं स्वयमभिवाञ्छति सा सम्पत्तिरिति जगति पश्यामः; * यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम् * इति भगवदुक्तिर्न सर्वत्रापि भवत्यर्थवती ; क्वचिद्व्यभिचरत्यपि । * लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत * इति कालिदासमहाकविकथितरीत्या स्वयंवरसमुत्सुकायाः श्रियः प्रसरो हि दुर्निवार इति बोद्धव्यम् । अर्थसम्पत्तिर्हि अपेक्षकानुपेक्षते; उपेक्षकान् स्वयमपेक्षते । तथैवासौ सूरिवरोऽपि स्वापेक्षकान् संसारिणः पामराननुपेक्षते; स्वस्मिन्ननुपेक्षाशालिनमपि भगवन्तं स्वयमनन्यगतित्वबलादेव कामयते—इत्युक्तं भवति । इदमवधेयम्; मूले तावत ( द्राविडे ) "नीलशेल्वम्" इति पदमस्ति ; आमुष्मिकी सम्पत्तिस्तदर्थो भवितुमर्हति; * दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक ! प्रकामम् । अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥ ( मुकुन्दमालायाम् ) इत्युक्तरीत्या भगवच्चरणारविन्द चिन्तनमात्रस्पृहया मुक्तिसम्पदमुपेक्षमाणमपि भागवतमणिं यथा सा मुक्तिसम्पत स्वयमुपसर्पति—इत्यर्थोऽप्यत्रोपपन्नतं ॥ ] ... ... ... (९)

१० ( वितुवक्कोट्टम्मा ) "भगवन् विद्वत्कोडदिव्यदेशनाथ ! भवताऽहमुपेक्ष्यमाणोऽपि सन् सर्वथाऽनन्यगतिरेव भवामी" ति तत्पादारविन्दप्रावण्यातिशयेन कथयता जयशीलहेतिसनाथेन श्रीकुल-

शेखरसूरिणा प्रणीतं स्वादुद्राविडवाङ्मयं गाथादशकं कीर्तयन्तस्सन्तो दुर्गतिदवीयांसस्स्युः ॥ इति फलकीर्तनतस्समापितमिदं दशकम् ॥ ... ... (१०)

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यमिहानुसन्धेयम्—

श्लो ॥ विद्वत्क्रोडाभिधाने प्रथितरुचिरदिव्यस्थले भ्राजमानं
विष्णुं संसेव्य तत्पत्कमलपरिसरे स्वामनन्यार्हतां यः ।
नानादृष्टान्तसंदर्शनमुखत उवाचातिभोग्यप्रणाल्या
तस्मिन् सूरौ सदा स्यामहमनुपधिना प्रेमभूम्ना समृद्धः ॥

इति श्रीकुलशेखरसूक्ते पञ्चमं दशकमवसितम् ॥

---

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## श्रीकुलशेखरसूक्ते— षष्ठं दशकम्—एर्मलर्प्पूङ्गुळल् ॥

अवतारिका ॥ अधस्तनदशकपञ्चकापेक्षया परमविलक्षणमवतरति दशकमिदम् । अर्चावतारानुभवप्राधान्येन व्यतीयुः प्रायः पञ्च दशकान्यधस्तात् । दशकमिदमागामि च विभवावतारीयगुणानुभवप्राधान्येन संपद्यते । जगति दम्पत्योरनुभवे प्रणयरोषपरीवाहभूतचेष्टितविशेषावतारो योषित्सु प्रथितः । प्रणयरोषविरहे शृङ्गाररसपरिपूर्तिश्च न भवति नाम । श्रीरामायणेऽपि वाल्मीकिर्भगवानाह * प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम्—इति, यदा हि जानकी रामचन्द्रं प्रति * किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः । रामजामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ * इत्युदैरिरत । एकदारव्रतरामावतारे प्रणयरोषप्रसक्तिरल्पीयसी; पञ्चलक्षसंख्याकान् गोपीजनाननुभोक्तुमवतीर्णे गोपालकृष्णे प्रेयसीनां प्रणयरोषजविचेष्टितानि विविधानि हि समपद्यन्तः तदशेषतः प्रतिपादयितुं सहस्रवदनो भगवानादिशेषोऽपि न समर्थः । श्रीशठकोपमुनीन्द्रस्सहस्रगीत्याम षष्ठशतके द्वितीयेनैकेन दशकेन तदिदं मनागिव प्रकाशितवान् । श्रीपरकालसूरिरपि ( कलिध्वंसिसूरिः ) स्वकीये सूक्तिसहस्रे दशमे शतके अष्टमेनैकेन तदिदं प्रतिपादितवान् । अनयोस्सूरिवरयोर्मध्ये स एष श्रीकुलशेखरसूरिरपि तादृगनुभवप्रणाल्यैव निबध्नाति दशकमिदम् । तथाच व्रजवासिगोपीजनप्रणयरोषपरीवाहरूपविजल्पितप्रकाशनरूपेण दशकमिदं प्रवर्तत इत्युक्तं भवति ॥

१. ( एर्मलर्प्पूङ्गुळलायर्मादर् ) भो वासुदेव ! सुरभिकुसुममालाविभूषितचिकुरबन्धाभिरसंख्येयाभिर्गोपाङ्गनाभिरापूरितेऽस्मिन् व्रजे त्वदीयवक्षस्स्थलसंश्लेषस्सर्वथा सुदुर्लभ एव ममेति नैराश्यमधिवहन्ती सत्यप्यहं त्वदीये मृषावाक्ये अकाण्डबद्धया श्रद्धया, वृष्टिनिर्विशेषं स्यन्दमानया हिमान्या भृशमिव कम्पितगात्रा सती यामुने सैकते त्वदागमनप्रतीक्षया हा हन्त ! आप्रभातं स्थितवती ॥ गम्यतां प्रभो ! गम्यताम् ॥ [ वि. परमभक्तो विद्वद्वरेण्यो जयदेवकविवरः स्वकृतगीतगोविन्दे * मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैः नक्तं भीरुरयं त्वमेव तदिमं राधे ! गृहं प्रापय । इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ * इति परमशोभनं मङ्गलश्लोकं निबबन्ध । अतिमानुषस्तवे श्रीकूरनाथगुरुवराश्च * धूर्ताचितं तव हि यत् किल रासगोष्ठ्यां तत्कीर्तनं परमपावनमामनन्ति * इत्याहुः । अतश्च कृष्णकेलिविशेषाणामनुसन्धानं बहुतरजन्मसञ्चितभूयिष्ठदुरितवर्गनिबर्हणनिपुणमिति निर्विवादम् । तथाविधानामेव केलिविशेषाणां दशकेऽस्मिन् कीर्तनं भवतीति ध्येयम् ॥ काचन गोपी कृष्णसंश्लेषे भृशमुत्सुकाऽऽसीत ; परन्तु भूयसीषु सुन्दरीषु गोपीषु जाग्रतीषु

कथमयं मे मनोरथः फलेग्रहिर्भवितेति नैराश्यमप्यवहत्। तथाऽपि विप्रलम्भशृङ्गारविदग्धो वासुदेवस्तां प्रलोभयन्नाह 'अद्य नक्तं यमुनापुलिनविशेषमहमागमिष्यामि, तत्र त्वमवतिष्ठस्व मत्प्रतीक्षये' ति। सा च तद्वचसि विस्रम्भबलात् तन्निर्दिष्टं पुलिनविशेषमासाद्य सुदुस्सहां शीतबाधामपि सहमाना दिक्षु विदिक्षु च दृष्टिपातं प्रसारयन्ती प्रभातावधि तत्रैवावतस्थे कृष्णस्तु नैवागतः। उदिते च भगवति भास्वति सा हताशा स्वसदनमयासीत्। कृष्णस्तु अपरेद्युस्तस्यास्सद्म स्वयमुपेत्य 'ह्यः कार्यान्तरपरतया निर्दिष्टं स्थलमागन्तुं न प्राभवम्; अद्यरात्रौ पुनरवश्यमेवागमिष्यामि; विस्रब्धा तत्रैव प्रतीक्षस्व' इत्याह; तदात्वे सरोषं तया यदुक्तं तदेव तद्भावभावनया निबध्यते। 'गम्यतां प्रभो गम्यताम्' इत्येतद्वाक्यं यद्यपि मूले गाथायामस्यां नास्ति, तथाऽप्युपरितनगाथाभ्योऽनुषङ्गतस्तदनुसन्धानमिह कृतमिति वेदितव्यम् ॥ ] (१)

२. ( केण्डैयोणकण्मट्टवाळोरुति ) प्राचये वेश्मनि दधिमथनसक्तां शफरललितनयनां कामपि गोपकन्यकामवेक्ष्य 'सुभगे ! एकाकिन्या त्वया मथनकार्यमिदं नैव सुसाधम्; अहमपि त्वया सह मिलित्वा मथ्नामि चेत् झटिति मथनमिदमवसास्यति' इत्यभिधाय तस्करदृशं च प्रदर्श्य विस्रस्तकचबन्धं प्रस्विन्नमुखारविन्दं स्फुरिताधरबिम्बं च यथातथा यदकरोस्त्वं दधिमथनम्, तद्यथायथमहं जाने; याहि याहि महानुभाव ! ॥ [ वि. अपरस्याः कस्याश्चन गोपकन्यकाया वाक्यानुवादरूपा गाथा सेयम्। अस्यास्सकाशे कृष्णः प्रेमभूमानं प्रदर्शयन्निव समाययौ; तदात्वे तं प्रति ईर्ष्यया कथितमिदम्। तया सहैव दधि-मथितुं पुनरपि तत्रैव गच्छ भोः इतितावदुक्तं भवति ॥ ] ... ... (२)

३. ( करुमलर्कून्दलोरुत्तितन्नै ) अयि यमलार्जुनभञ्जन ? नन्दनन्दन !, हन्त ! त्वदीयवयोऽभिवृद्ध्या सह तव मायाचेष्टितविवृद्धिश्च भवति। सुरभिचिकुरबन्धां कामपि कन्यकामपाङ्गवीक्षालक्ष्यं कुरुषे; तस्मिन्नेवावसरे अन्यस्यां कस्याञ्चन बालिकायामनुरागं निवेशयसि; अथापरस्यास्सकाशे तवाहमस्मि दास इत्यात्थ; अथेतरस्यास्सविधे कृत्रिमभाषितानि कथयसि; अथ कुटिलकुन्तलामन्यां कामपि गोपिकामाश्लिष्यसि: सोऽपि संश्लेषः छलात्मक एव हन्त ॥ [ वि. इदमन्यस्या गोपिकाया भाषितं रोषकषायितम्; अत्रापि "त्वत्स्वभावमहं जाने; गच्छ कितव ! गच्छ" इति शेषपूरणेन भवितव्यम्। गीतगोविन्दे * धीरसमीरे यमुनातीरे वसति वने वनमाली—गोपीपीनपयोधरमर्दननिर्दयकरयुगशाली—श्लिष्यति कामपि चुम्बति कामपि रमयति कामपि रामाम् * इत्यादिकमिहानुसन्धेयम् ॥ ] ... ... ... (३)

४. ( तायुमुलैप्पालिलमुदिरुक्क ) कितव कृष्ण !, जनन्यां यशोदायां स्तन्यभरितपयोधरायां सत्यां तामपहाय पूतनाया विषदिग्धं स्तन्यं पीत्वा उन्मत्तोऽयमिति परैर्गर्हित भोः ! अतिशयितकामायां मयि प्रतिक्षमाणायां सत्याम् मत्प्रहितया दूतिकया सह रतिं चकर्थ सहर्षम्: तदपि तव कितवत्वानुरूपमेव खलु ॥ [ वि इदमपरस्या गोपाङ्गनाया भाषितम्। एषा तु स्वां कामनां गूहितुमशक्ता सती कृष्णमिहानयेति कथयित्वा कामपि दूतीं कृष्णसविधं प्रजिघाय; सा तावदत्रागत्य चिरं स्थित्वा एकाकिन्येव प्रतिनिववृते। अथ तस्यास्तनौ दन्तक्षतनखक्षतादिकमवेक्ष्य महान्तं रोषं बिभर्तिस्म; तदवगच्छन् कृष्णस्तां सान्त्वयितुं यदा तत्सकाशमयासीत्तदा तया कथितम्। सकामायां मयि तिष्ठन्त्याम् जघन्यायामन्यस्यां रतिकरणं तव स्वभावोचितमेवेति विवक्षया पूतनास्तन्यपानवृत्तान्त इह प्रस्तुतः; अमृतनिर्विशेषं स्तन्यं पाययितुं यशोदायां सज्जायां सत्यामपि पूतनाया विषदिग्धस्तनपयःपानरसिकोऽभवः खलु, एवंविधमौग्ध्यानुरूपमेवैतदपीति कथितं भवति ॥ ] ... ... (४)

५. ( मिन्नोत्तनुण्णिडैयाळैक्कोण्डु ) अयि परिपूर्ण केशव !, विद्युत्सन्निभवलग्नया कयाचन बालिकया सार्धम् अन्धतमसावृते निशीथे मम वीथिकायां व्रजन्तं पीताम्बरावकुण्ठितशिरस्कं त्वामवैक्षिषि; किञ्च, पथि संदृष्टामन्यामपि कटाक्षवीक्षलक्ष्यभावं प्रापय्य संकेतस्थलविशेषमागन्तुमवोचः;

तदप्यहमज्ञासिषं बत । किमिति तां विहायात्र समागतोऽसि; अधुनाऽपि कामं तत्सकाशमेव गच्छतात् ॥ [ वि. युगपत् गोपीद्वितये कृतां कृष्णस्य प्रेमसम्पदमवलोकितवत्याः कस्याश्चन गोपाङ्गनायाः प्रणयरोष-भाषितमिदम् । अयि धूर्तकृष्ण ! इतरजनदुरवबोधतया निशीथे स्वमनोभिरामया कयाचन सह जिगमिषुणा त्वया तमोनिविशेषं स्वगात्रं प्रकाश्य यदि गतं स्यात्तर्हि तव गमनमितरानवगतमेव स्यात्; परभागशोभावहपीताम्बरावकुण्ठितशिरस्कतया त्वया कृतं दयितया सार्धं गमनं कथं नु रहस्यं भवितुमर्हति ? मार्गान्तरेणापि न गतवानसि; मम जठरसंतापो भूयादिति धिया ममैव रथ्यया गतोऽभूः— इति हृदयमत्र बोध्यम् ॥ ] ... ... ... (५)

६. ( मल्पोरुतोळुडै वासुदेवा ) भो मल्लप्रस्पर्धिभुजबलशालिन् ! वासुदेव ! मया सह कृतशयनस्त्वं निद्राविवशां मामुत्सृज्य निशीथे समुत्थाय अन्यत्र गत्वा तस्यां रजन्यामथापरदिनरजन्यां च भूयसीर्ललनाः संश्लिष्य समागतोऽस्यद्य; एतादृशस्त्वं किमिति मत्सकाशमागमः ! स्वामिन् महाप्रभो ? तासामेव सनीडमुपसर्प ॥ [ वि. सरोषं कथयन्त्या अस्या गोपाङ्गनायाः परिरम्भे कृते रोषः प्रशाम्येदिति धिया कृष्ण इमामाश्लेष्टुमुपासर्पत् ; तदात्वे कथयत्येषा मामम मत्सकाशमुपसर्प इति ॥ ] (६)

७. ( पेयरविनणैप्पळ्ळियिनाय् ) भो भोगिभोगशयनीयशायिन् कृष्ण ? न वयं पूर्ववत् त्वदीयकृत्रिमभाषितविस्रम्भभरिताः ; नापि त्वदीयस्पृहाविषयभूतनयनसौन्दर्यशालिन्यो ललनाश्च स्मः ; अस्मदगारमतीव विलम्बेन समागतोऽसि , अलमेतादृशेन समागमेन ; तव दिव्यपीताम्बरं चारुमुखकुण्डले दिव्याधरबिम्बं रमणीयशिखाबन्धं च मुग्धाभिरस्माभिस्तवानतवचसि श्रद्धया अनुभूतैः क्लेशैरलम् ; पुनरपि कृत्रिमभाषितानि भाषितुं मा स्म समागच्छ इह; याहि याहि कितवाग्रगण्य ! [ वि. अपरस्या गोपिकाया रोषकषायितं भाषितमिदम् । मायिन् ! त्वदीयविप्रलम्भकभाषितचेष्टितादिषु चिरादहं व्यामुग्धैवावर्तिषि; अधुना तु न तादृशीति विद्धि । नापि मे त्वदनुरागोचितमाभिरूप्यमस्ति । यदाकदाचिदत्राप्यागत्य मुखं प्रदर्शयितव्यमिति धिया समागत इवात्र त्वम् ; अलमेतादृशेन परिश्रमेण ; त्वदीयेषु मृषावादेषु विस्रम्भेण ये क्लेशा इयता कालेनानुभूताः तैरलम् ; परमकृपया गम्यतामितः ; पुनःपुनः छलोक्तिकथनेन न किञ्चित्फलं संस्यति— इत्याह सैषा ॥ ] ... ... (७)

८. ( एन्नै वरुहवेनक्कुरित्तिट्टु ) भोः कितव कृष्ण !, स्थलविशेषं निर्दिश्य तत्र मदागमनमादिश्य, तथैव तत्रागतायां मयि मालतीलतावितानच्छायायां चिरान्निलीय स्थितामन्यां कामपि गोपकुमारिकां संश्लेष्टुं गत्वा अथ मामपि वीक्ष्य आविलहृदयस्सन्निव अन्यतोऽपासर्पः ; पीतवसनं करेण गृहीत्वा मनश्शकित इव भावनां विधाय गतवानसि ; अस्तु ; पुनः कदाचिन्मदेकगतिकस्सन् मत्सकाशमागमिष्यसि खलु; तदात्वे मम कोपप्रशान्तिम् संपादयेयम् ॥ [ वि. इदमन्यस्या गोप्या रोषभाषितम् । पुरस्तादेव कस्याश्चन गोपकुमार्याः संकेतस्थानविशेषं परिकल्प्य अथ दाक्षिण्यवशान्ममापि साङ्केतिकं स्थानविशेषं निर्दिष्टवानसि त्वम्; अन्ततस्तस्यैव भोगभाग्यं लब्धम् , मम तु विप्रलम्भ एव जातः ; अस्तु तावत्; पुनः कदाचिन्मामन्विष्यन् मदेकशरणस्सन् आगमिष्यसि खलु; तदात्वे मदीयरोषप्रशमनोपायमहं जाने—इति स्वकं यसदनप्रान्ते गच्छन्तं मुकुन्दमाहूय कथितवती । स्वकीयरोष प्रशमनं कथा विधयेति चेत् ; आभिमुख्यलेशमप्यकृत्वा वैमुख्यप्रदर्शनेनेति ध्येयम् ॥ ] (८)

९. ( मङ्गलनल्वनमालै ) अयि गोपालकृष्ण ! माङ्गलिकवैजयन्तीविभूषितवक्षस्को बर्हिबर्हावतंसो रमणीयपीताम्बरमण्डितकटितटः पुष्पगुच्छावतंसितकर्णशष्कुलीकश्च सन् मधुस्यन्दिकुसुमाश्रितचिकुरप्रकराभिर्ललनाभिस्सह संश्लिष्य तज्जनितानन्दपरीवाहरूपं वेणुगानमारचयन्नागतोऽसि ; एवमन्यासां गोपीनां भूरिभाग्यमसकृद्भवति ; अस्माकं कृते एकस्मिन्नपि दिने वेणुगानं न करिष्यसि हन्त त्वम् ? ॥

[ वि. अहं दौर्भाग्यशालिन्येव काममसानि; अन्या एव सौभाग्यसुभगा विराजन्तां भृशमिति सनिर्वेदमाह काचन ॥ ] ... ... ... ... (९)

१०. ( अल्लिमलर्त्तिरुमङ्कैक्कळ्वन्तन्नै. ) सरसिजवासिनीसहाये गोपालकृष्णे भृशमनुरक्तानां गोपालबालिकानां मुखान्निर्गतमर्धयामे प्रणयरोषवशाद्यद्वाक्यजातमवातरत् तत सार्वभौमधुरन्धरेण श्रीकुलशेखरसूरिणा परमभोग्यद्राविडगाथादशकतः प्रकाशितम्; तदिदं ये कीर्तयन्ति ते सांसारिकक्लेश-वैदेशिकास्स्युरिति फलकीर्तनेन समापितमिदं दशकम् ॥ ... ... (१०)

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यमिहानुसन्धेयम्—

श्लो ॥ पूर्वं कृष्णावतारे व्रजभुवि विविधाश्चर्यचर्यासमृद्धो
जारश्चोरो विटाग्र्यः कितव इति यशः प्राप्तवान्नन्दसूनुः ।
यासु स्वं विप्रलम्भं प्रकटितमतनोत्ताभिराभीरजाभी-
रोषावेशाद्यदुक्तं तदिदमनुवदन् तद्गिरा सूरिरीड्यः ॥

इति श्रीकुलशेखरसूक्ते—षष्ठं दशकमवसितम् ॥

---

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ७. श्रीकुलशेखरसूक्ते—सप्तमं दशकम्—आलैनीळ्करुम्बु ॥

अवतारिका ॥ ※ एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥ ※ इत्युक्तरीत्या क्षीरसागरान्मथुरापुरीमुपेत्य तत्र वसुदेवदेवक्योरात्मजतया हि प्रादुर्भूतो भगवान् । सद्य एव ※ यमुनां चातिगम्भीरां नानावर्तझषाकुलाम् । वसुदेवो वहन् कृष्णं जानुमात्रोदको ययौ ※ इत्युक्तरीत्या वसुदेव एव स्वयं कृष्णमादाय यमुनामतिलङ्घ्य निशीथे व्रजमुपेत्य तत्र यशोदा-भर्तुर्नन्दगोपस्य सद्मनि तं शिशुं विसृज्य प्रतिनिवृत्तः; अथ कृष्णकिशोरस्य पूतनावध—शकटमर्दन—यमलार्जुनभञ्जन—गोवर्धनोद्धरण—रासक्रीडितादीन्यतिमानुषवृत्तानि अतिवृत्तामरविक्रमप्रतापांश्चानु-क्षणमनुभोक्तुं नन्दगोपो यशोदा चैव निरुपमं भाग्यमलभेताम्; वसुदेवदेवक्योः कालक्षेपस्तु सततं प्रलापविलापैरेव भवति । तयोर्निर्वेदस्तु सत्यं वाचामभूमिः । अथ कृष्णो यदा कंसवधार्थं मथुरामानीतोऽभूदक्रूरेण, तदा स कंसं निहत्य पित्रोर्वसुदेवदेवक्योरन्तिकमायासीत; तदात्वे ततः पूर्वं च देवकी-मुखतो यानियानि प्रलापविलापवचांसि निर्गतानि तानि तद्भावनया निबध्यन्ते दशकेऽस्मिन् । नन्द-यशोदयोः अस्मभ्यधिकभाग्यमहिमा, स्वात्मनोः [ वसुदेवदेवक्योः ] दौर्भाग्यभूमा च चारुतरोक्ति-जालैर्विव्रियतेऽत्र दशक इति यावत् ॥ ... ... (※)

१. ( आलैनीळ्करुम्बन्नवन् तालो ) रसघनेनेक्षुखण्डेन सदृश कृष्ण! शेष्व; अम्बुजायत-विलोचन कृष्ण! शेष्व; सिन्धुसवर्ण मुकुन्द! शेष्व; कलभसमान केशव शेष्व, सुरभिकचबन्ध मदीयसूनो शेष्व—इत्येवमसकृदभिधाय कर्तव्ये परमानन्दसन्दोहमयडोलाशयनगीतोपगाने भाग्य-दरिद्रासु जननीषु जघन्या खल्वहं क्षोदीयसी माता ॥ इति देवकी प्रलपति ॥ [ वि. लोके पुत्रं प्रसूत-वतीनाम् इदमेव खलु परमं भाग्यं यदुत शिशुं डोलातल्पे शाययित्वा तन्निद्रार्थं श्रुतिमधुरनानागीतगानम्,

कृष्णं गर्भे धारयित्वा प्रसूतवत्याऽपि देवक्या नैतद्भाग्यमलम्भि; सद्य एव यशोदान्तिके तत्प्रेषणात्। हा हन्त नैतद्भाग्यं मया लब्धमिति देवक्या यद्वचलापि तदिहोक्तम् । डोलातलिममधिशयानं कृष्णशिशुं प्रति वक्तुं योग्यानि संबोधनानि निबद्धान्यत्र । एवमेवं संबोध्य 'भो मुकुन्द ! शयनसुखमनुभव' इति विलक्षणस्वरविशेषेण सह उच्चैर्गानं जनन्याः कृत्यम् ; तदिदं यशोदया परमभाग्यशालिन्या लब्धम् हन्त ! मया तु नैवेति निर्वेदं प्रकाशितवती देवकीति ध्येयम् ॥ ] ... ... (१)

२. (वट्टिक्कोळ्ळनमेळुदुशेम्मलर्) कज्जलालंकृतेन तीक्ष्णेन सरसिजोपमेन च स्वकीयेन चक्षुषा डोलातल्पवितानावलम्बितेषु कृत्रिमशुकशाबादिषु वस्तुषु यत्किमप्यवेक्षमाणः, अन्तःप्रदेशे शोणौ बहिःप्रदेशे कृष्णौ स्वचरणावाकुञ्चितौ च कुर्वाणः, आकण्ठवारिभरमन्थरमेघदेश्यस्सन् अतिमृदुलपादाङ्गुलीविततीराकोच्य पाणितले गृह्णन् कलभपोतवत् यदा त्वं डोलातल्पे शयनमकार्षीः तदा ऽहं तद्रामणीयकमवलोक्यानन्दितुं भाग्यभागिनी नाभूवम् ; केशव ! हन्त ! धिङ्माम् ! धिङ्माम् ॥ (२)

३. (मुन्दैनम्मुऱैयन्बुडैमहळिर्) पारम्पर्यागतबन्धुत्वशालिन्यः प्रेमविवशाश्च ललनाः क्रमशः त्वाम् (कृष्णशिशुं) स्वस्वकटितटे निवेश्य 'प्रभो ! अस्मत्कुलप्रदीप ! नीलजीमूतराशिवत् स्पृहणीयमूर्ते ! गोपालपुंगव ! प्रदर्शय तावत् त्वदीयं जनकम्' इति कथयेयुः ; तदात्वे त्वमङ्गुलिनिर्देशतः कटाक्षपातनेन च नन्दगोपं प्रादर्शयः ; तथा नाम प्रदर्शनभाग्यं यशोदापतिर्नन्दो ह्यलभत ; गर्भदुर्भगाया मम पतिर्वसुदेवस्तु नैव लेभे हन्त ॥ [ वि. लोके कस्मिंश्चन गृहे शिशुर्जातोऽभिवर्धत इति श्रुत्वा तद्ग्रामस्था बन्धुवर्ग्याः प्रेमशालिन्यश्च ललनाः क्रमशस्समागत्य शिशुमुपादाय परिरभ्य परिचुम्ब्य च प्रेमपरीवाहरूपान् बहून् प्रश्नान् विरचयेयुः ; तेष्वन्यतमोऽयं प्रश्नः 'वत्स ! तव पिता कः ? कुत्र स वर्तते' ? इति । अत्रोत्तरं शिशुर्वाचा वक्तुमशक्नुवन् अंगुल्या दृशा च प्रदर्शयेत ; एवमेव व्रजेऽपि गोपीभिर्भूयसीभिरनुयुक्तः कृष्णडिम्भो दवीयांसं वसुदेवं कथमिव प्रदर्शयेत् ? नेदीयांसं नन्दगोपमेव ननु प्रदर्शयेत ; तदिदमनुसन्दधाना देवकी वास्तविकपितृभूतस्य स्वभर्तुर्भाग्यमिदं प्रच्युतमभूद्धतेति खिद्यते ॥ ] ... ... ... ... ... (३)

४. (कळिनिलावेळिल्मदिपुरै) हे श्रीकृष्ण ! विश्वप्रह्लादनप्रगल्भराकाशशाङ्कनिभं मुखमण्डलम् चारुतरं पाणिवक्षोभुजम् सौगन्ध्यसंभृतं केशपाशम् अष्टमीन्दुनिभं निटिलम् पृथुलसरसीरुहोपमं लोचनं च बिभ्रतस्तव दिव्यमङ्गलविग्रहसुषमासम्पदमत्र लोचनाभ्यां पिबन्त्या मम त्वदीयशैशववाल्यकेलीनामनुभवानन्दप्रच्युतिरिहहिन्त सन्ततनिर्वेदनिदानं भवति; जननी सत्यप्यहं जननीत्वसाफल्यमलभमाना हि दूये ; वत्स ! सुदुस्सहोऽयं मम खेदः ॥ [ वि. कृष्णं युवदशायां साक्षात्कृतवत्या देवक्या वाक्यमिदमिति सुगमम् ॥ ] ... ... ... (४)

५. (मरुवुनिन् तिरुनेत्तियिल्) वत्स वासुदेव ! त्वया समयेषु फालतलविलसल्ललन्तिकाचलनपूर्वकं क्रियमाणस्य अधरामृतप्रदानस्य स्वीकरणम्, स्वतातविग्रहसनाभि-त्वदीयतनुसौन्दर्यावलोकनजनितहर्षानुभवम् कराङ्गुलिं वदने विन्यस्य सरोषमिव तदा तदा त्वयोच्चार्यमाणानाम् मुग्धविजल्पितानां श्रवणं च हन्त ! दुर्भगाऽहमीषदपि नालभे ; हा हन्त ! सर्वविधमपि भागधेयं परमभाग्यवती दिव्या यशोदा हि लेभे ॥ ... ... ... ... (५)

६. (तण्णन्तामरैक्कण्णने कण्णा) शिशिरसुभगसरसिजकुसुमोपमेयविलोचन ! कृष्ण !, मृन्मयीषु स्थलीषु जानुचङ्क्रमणस्खलनमाकलय्य सरभसमुपसृप्य मातुर्वक्षसि समाश्लेषणम् तदात्वे तनुस्थितानां परागाणां जनन्या वपुषि निपातनं च यद्भवति, तन्न दौर्भाग्योपहतायां मयि नाभूदहह ।

चारुभिः कराङ्गुलीभिरखिलाभिरपि संगृह्य त्वयाऽश्यमानस्य दिव्यान्नस्य शेषमशितुमपि भाग्यवती नाहम भूवम् अहह! महापापिनी खलु साऽहम् । हा बत! मम माता किमर्थं मां प्रासूत; सर्वथा मम जन्म विफलमेव ॥ ... ... ... ... (६)

७. ( कुळहनेयेन्दन् कोमळ ) सौशील्यनिधे! मम कोमलकुमार! गोविन्दडिम्भ! ( त्वं ममैव सद्मनि स्थितो यदि स्यास्तदा ) मम पाणितलमधिशयानस्सन् परमसुन्दरसुकुमारकिसलयोपमेयेन कराग्रेणैकेन ममैकस्य पयोधरस्य चूचुकमभिमृशन् अपरं च पयोधरमास्वादयन् मध्येमध्ये मामवेक्ष्य स्मयमानश्च सन् स्तन्यं पिबेः खलु; हाहन्तैतादृशात्परमभाग्यात च्युता प्रच्युताऽस्मि ॥ ... (७)

८. ( मुळुदुम् वेण्णेयळैन्दु तोट्टुण्णुम् ) भाण्डस्थं नवनीतमशेषमपि पाणितलेन परामृश्य स्पर्शंस्पर्शमीषदीषद्गृहीत्वा अशनसमये स्थितं कराम्बुजसन्निवेशम्, जातरोषाया दामग्रहणचटुलाया मातुरवलोकनेन जातां चकितचकितावस्थितिम्, दधिलिप्तमुखारविन्दस्थितिम् रोदनम् भीरुविलोकितम् रोदितुमपि भिया क्रियमाणमभिराममधरस्फुरणम् अन्ततोऽञ्जलिबन्धं चानुभूतवती यशोदा नित्यानन्दस्य सीमाभूमिं हि दृष्टवती ॥ [ वि. अनुभवरसिकानामियं गाथा नूतमतिमात्रं भोग्या; अस्या एव गाथाया एकदेशानुभवरूपम् * हर्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् । पायादीषत्प्रचलितपदो नापगच्छन्नतिष्ठन् मिथ्यागोपस्सपदि नयने मीलयन् विश्वगोप्ता ॥ * इति पद्यरत्नं गोपालविंशत्यामाह श्रीमान्निगमान्तसूरिः । कृष्णस्य नवनीतस्तेयकथा, मुषितस्य तस्य भुक्तिकथा च सत्यं गिरां दूरे। तदिदं तदात्वे समक्षं दृष्टवन्त एव भाग्यशालिनो वर्णयितुं विचक्षणा भवितारः। देवकी तु नैव तदा साक्षाददाक्षीत्; एवमसौ श्रीकुलशेखरसूरिरपि नाद्राक्षीदेव खल्विति न वाच्यम्; भगवदनुगृहीतविलक्षणदिव्यज्ञाननिधिषु दिव्यसूरिषु [ आळ्वारेषु ] अन्यतमोऽयं सूरिवरः कथं नु साक्षान्न दृष्टवान् स्यात? अदर्शने सति एवं कवयितुं नैव प्रभवेदिति निर्धारणं योग्यम् । स्वकीयसाक्षादनुभूतिगोचरं वस्तु स्वयं कीर्तयन् सन् इदमुक्तिचातुर्यं देवक्यामारोपयति सूरिरसाविति ध्येयम् । चौर्येण नवनीतभुक्तिसमये कृष्णस्य यादृशी स्थितिरासीत्सा तावदन्यूनानतिरिक्तपरिपाट्या हि निगद्यतेऽत्र । मुषित्वा गव्यम् अश्नन् कृष्णकिशोरो नवनीतेऽतिमात्रं स्थितेन प्रेमविशेषेण सद्य एव कृत्स्नमपि भोक्तुमनिच्छन् महत्तरभाण्डस्थितं कृत्स्नमपि नवनीतं पाणितलेन मुहुरभिमृशति; अथ च स्पर्शंस्पर्शमीषदीषदुपादाय जिह्वातले विन्यस्यति; मध्येमध्ये दधि चाश्नाति; दधिभुक्तिमपलपितुकाम इव भुक्तशिष्टमङ्गुलिषु संसक्तं दधि मुखे मार्जयति, तदात्वे समागता जननी विलोक्य प्रहर्तुमिव दामग्रहणतत्परा भवति; ततो न काऽपि भीतिः कृष्णस्य; अथापि भियमभिनयति; रोदितुमुपक्रमते; तदा अकृत्यमपि कृत्वा रोदनमपि करोषि वेति माता भीषयति; तदा उच्चैर्विलपितुमशक्तस्सन्निव स्फुरिताधरोष्ठो भवति; तदाऽपि मातरमशान्तरोषां पश्यन् 'मातः! इतः परं नैवाहमीदृशमकृत्यं कुर्याम्, सत्यम्; अधुना क्षान्तिं याचे; प्रणमामि त्वाम्; अत्र मां विजहीहि' इतीव कथयन्नञ्जलिं बध्नाति; आद्रापराधिनोऽपि जनाः स्वविषये अञ्जलिं बध्वा मुच्यन्ते खलु दण्डनात्; तथाविधाभ्यासभूम्ना स्वयमपि अञ्जलिबन्धेन दण्डनान्मुक्तो बुभूषतीव; एतत्सर्वमवलोकयन्ती यशोदा स्वभाग्यभूमानमभिनन्दन्ती ब्रह्मानन्दस्य सीमाभूमिमद्राक्षीत—इति गाथयाऽनया क्रियमाणोऽनुभवः कर्कशमपि चित्तं जडयितुमलम्! देवकीनिर्विशेषमस्माभिरपि रोदितव्यमेव; परं तु न रोदितव्यम्; एवंविधपरमविलक्षणगाथानुभवो हि सर्वं दुःखं विस्मारयति। द्राविडभाषानभिज्ञा यद्यपि मदीययाऽनया टीकया किमप्यनुभुञ्जते, तथाऽपि द्राविडगाथारसानुभवप्रच्युतिर्हि शोचनीयैव परम्। कृष्णो रोदितुमुपचक्रमे, स्फुरिताधरोष्ठो बभूवेति यत्तदास्तां नामः अञ्जलिमपि बबन्धेति यदिहोच्यते, * कोऽयं गुणः कतरकोटिगतः कियान् वा कस्य स्तुतेः पद महो बत कस्य भूमिः!" आस्राविललोचनैरेवास्माभिरेतावदलेखि प्रयागक्षेत्रे कुम्भमेळावसरे त्रिवेणीसंगमस्थल्याम् ॥ ] ... ... ... (८)

९. ( कुन्निनाल् कुडैकवित्तदुम् ) अयि कुमार कृष्ण ! गोवर्धनाद्रेश्छत्रीकरणम् अतिरमणीय रासक्रीडाप्रवर्तनम् कुम्भनर्तनसंविधानम् वत्सेन कपित्थोपमर्दनम् स्वचरणमर्दनेन कालियनागावलेपविलोपनं चेत्यादिषु त्वदीयजैत्रबालचेष्टितविशेषेष्वेकमपि नाहमवैक्षिषि; तदवेक्षणजनितहर्षप्रकर्षानुभवभाग्यदवीयसी खल्वभूवम्; यदि तदवलोकनभाग्यमधुना घटेत तर्हि दयस्व भोः ॥ [ वि. भगवतः कृष्णस्य अतिमानुषशक्तिविशेषं सम्यगवगच्छन्त्या देवक्या एवमभ्यर्थना युज्यते । सैषा फलेग्रहिश्चाभूदिति प्रथा । ※ दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमित्यभिधाय दिव्यचक्षुःप्रदानपूर्वकं पार्थाय विश्वरूपप्रदर्शकः कृष्णः कथं नु मातुः काङ्क्षितं न पूरयेत ? ॥ ] ... ... (९)

१०. ( वञ्जमेवियनेञ्जुडैप्पेय्च्चि ) विप्रलम्भकदुष्टहृदयां पूतनां शुष्कशरीरां विनिर्गतरुधिरवसामांसादिकां प्रशिथिलस्नायुसञ्चयां च कृत्वा तस्या विषदिग्धं स्तनमास्वाद्यापि मयि कृपयैव खलु कृष्ण ! त्वं जीवितवानसि ! कंसजीवितहरकालमेघ स्वामिन् ! स्तन्यपानार्थं समीचीनां जननीं संपादितवानसि; वृथैव खल्वहं स्तनभारभराक्रान्ता सती जघन्यजननी भवामि ; त्वद्दते गतिहीनाऽस्मि; यदाकदाचिदपि वा त्वदनुभवभाग्यं घटेत नन्विति प्रत्याशया प्रसभं प्राणिमि ॥ [ वि ※ कंसजीवितहरकालमेघेति यदुक्तमिह तत्रेदमवधेयम्; मेघः खलु सर्वेषामपि क्षेमङ्करः ; तथापि ※ त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः । अस्माकमर्कवृक्षाणां पूर्वपत्रेषु संशयः ॥ ※ इत्युक्तरीत्या अर्कक्षुपपत्रक्षपणकरो भवति स एव बलाहकः; एवं कृष्णोऽपि सर्वेषां क्षेमङ्करकालमेघोऽपि सन् कंसविषये विपरीतवृत्तिकोऽभूत ॥ [ स्तन्यपानार्थं समाचीनां खलु जननीं सम्पादितवानसि ] इत्यस्यायं भावः;—मामुपेक्ष्य यशोदामुपेक्ष्य पूतनां खलु समयविशेषे स्तन्यदायिनीं जननीमकामयथा इति । ] ... ... (१०)

११. ( मल्लैमानगर्क्किरैयवन्तन्नै ) सुसमृद्धमथुरापुराधिनाथं कंसं वीरस्वर्गमधिगमय्य स्वसाविधमुपागतस्य श्रीकृष्णकिशोरस्य अप्रमेयाद्भुतबाल्यचेष्टितविशेषावलोकनविरहजनितनिर्वेदातिशयया दिव्यदेवक्या यथा विलपितम् तथा स्वयं विलप्य प्रोचुषो भगवत्पादारविन्दावतंसितशिरसः सम्राजः श्रीकुलशेखरसूरेर्मधुरगीतप्रचुरद्राविडदिव्यगाथा इमा अधीयानास्सन्त स्सततं संसारसरणिवैदेशिका भवितार इति फलकीर्तनेन समापितमिदं दशकम् ॥

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यम्—

श्लो ॥ देवक्या आत्मजस्सन्नयिमथुरमिहाविर्भवन् वासुदेवः
तस्माद्देशात्तदैव व्रजभुवमुपयन् नन्दजायां यशोदाम् ।
पूर्णानन्दाब्धिमग्नां व्यधित हि तदिदं देवकी चिन्तयन्ती
यद्यत्प्रोच्य प्रलापानकुरुत तदुशन् सूरिराश्चर्यसूक्तिः ॥

इति श्रीकुलशेखरसूक्ते सप्तमं दशकमवसितम् ॥

---

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ८. श्रीकुलशेखरसूक्ते—अष्टमं दशकम्—मन्नुपुहळ्कौशलैदन ॥

अवतारिका ॥ कृष्णप्रसवभाग्यशालिन्या अपि देवक्या स्तदीयबाल्यलीलानुभवदारिद्र्यप्रयुक्त-निर्वेदनिर्भराया विलपितमधस्तनदशके निबद्धम् । * एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिन्यायेन देवकीस्मरणं कौसल्यास्मरणमुपाजीजनत । कौसल्या हि नैतादृशदौर्भाग्यशालिनी ; श्रीरामचन्द्रं पुत्रत्वेन प्रसूतवती सा तस्य बाल्यलीलानुभवौपयिकभाग्यशालिन्येव विरराज ।

महर्षिर्वाल्मीकिस्तु स्वकीये श्रीरामायणे तन्मात्रयाऽपि न न्यबध्नात ; यस्मिन् सर्गे श्रीरामवतारं निबबन्ध, तस्मिन्नेव सर्गे स्वयज्ञत्राणार्थं रामं निनीषतो विश्वामित्रस्य महर्षेरुपस्थितिमपि निबद्धवान् । बालकाण्डे अष्टादशे सर्गे वीक्ष्यतामेतत् । तदास्तां नाम । कौसल्यादेवी भगवन्तं रामचन्द्रं डोलिका-तल्पमधिशाय्य विविधानि गीतानि श्रुतिसुभगान्युपगीय धन्यजन्मा बभूवेत्ययमंशो निर्विवादः । स एष विषय इतिहासपुराणादिषु कुत्रापि न निबद्धः ; दिव्यसूरिभिरन्यैरपि स्वकीयेषु दिव्यप्रबन्धेषु नोपवर्णितः । तद्धि महती न्यूनतेति विभावयन्नसौ दिव्यसूरिवरः कुलशेखरमहाकविः स्वानुभवभूम्ना न्यूनतां तां परिहरन्निदानीम् । कौसल्यावर्ष्म स्वयं बिभ्राणः श्रीरामचन्द्रं डोलातल्पमधिशयानं विभाव्य तस्य सुखनिद्रार्थं गीतानि गायति तद्वाचा । सोऽयमनुभवस्सूरेरस्य * तिरुक्कण्णपुरनामकदिव्यदेशाधीश-शौरिराजभगवद्विषयकस्सम्पन्नः ।

श्रीरङ्गक्षेत्रप्रधानकचोलमण्डलान्तर्गतेषु चत्वारिंशतिदिव्यदेशेषु श्रीकृष्णक्षेत्रत्वेन त्रयो दिव्यदेशाः प्रथिताः (१) तिरुक्कण्णमंगै. (२) तिरुक्कण्णपुरम् (३) तिरुक्कण्णंगुडि । तेषु प्रथमतृतीयौ दिव्यदेशौ श्रीपरकालसूरिमात्रमङ्गलाशासनगोचरभूतौ ; मध्यमं तिरुक्कण्णपुरक्षेत्रं तावत श्रीपराङ्कुशभट्टनाथगोदा-देवीप्रभृतिभिरपि परमभोग्यतयाऽनुभूतम् । श्रीविष्णुसहस्रनामस्तोत्रे * शौरिरित्येतन्नाम्नो भाष्यं विरचयन्तो भट्टपादा महाचार्याः प्रकृतदिव्यदेशाधिपतिं भगवन्तं शौरिराजमेव विषयत्वेनानुगृह्णन्ति * उत्पलावतके दिव्ये विमाने पुष्करेक्षणम् । शौरिराजमहं वन्दे सदा सर्वाङ्गसुन्दरम् ॥ * इत्यमुं ध्यानश्लोकमपि हि तत्रोदाहरन्ति ॥ एवं नाम सुप्रशस्तविभवश्रीकृष्णक्षेत्रवराधीशं भगवन्तं श्रीराम-शिशुत्वेनानुसन्ध्याय, तस्यैव डोलातल्पे शयनं हृदि कलयन्नेष सूरिः स्सूक्तमिदमनुगृह्णातीति वेदितव्यम् ॥ ... ... ... ... ... *

१. ( मन्नुपुहळ्कौशलैतन्. ) यशस्विन्याः कौसल्यायाः ( मम ) सुभगजठरसमुद्भूत ! लङ्काधीश्वरदशकन्धरकन्धरानिपातननिपुण ! हिरण्मयशाश्वतविपुलवप्रमालाश्चितश्रीकृष्णपुरीविराजमान नीलमणिनिभ ! मम परमभोग्यामृत श्रीराघव ! ममानेन गीतेन डोलातल्पे शयनसुखमनुभव तावत ॥ [ वि. द्राविडवाचि * तालेलो * इति शब्दसन्निवेशः 'शयनसुखमनुभव' त्यर्थे निरूढः । मूले कौसल्याया इत्येतत्पदं तमेत्यर्थकम् मन्तव्यम् ' एवमभिहितवती कौसल्येति स्फोरयितुं कथितं कौसल्याया इति । तदात्वे तया कौसल्यया लङ्काधीश्वरदशकन्धरकन्धरानिपातननिपुणेति संबोधनं कृतं स्याद्धेति शङ्का मा भूत् ; तस्या वर्ष्म बिभ्राणस्सूरिवरोऽयं तथा नाम संबोधयितुं प्रभवत्येव खलु पाश्चात्यत्वेन । तथाच आंशिकं कौसल्यावचनम्, आंशिकं सूरिवरवचनमिति ग्राह्यम् । उपरितन-गाथास्वप्येषा वैखरी वेदितव्या ॥ ] ... ... ... ... (१)

२. ( पुण्डरिकमलरदन्मेल् ) निजनाभीनलिने निखिलभुवननिर्माणधुरीण ! सायकप्रयोग-विदारितबलिष्ठताटकावक्षस्स्थल ! द्रष्टृजनतासमर्पितनिजमानस ! [ सकलजनमनोहरसौन्दर्यशालिन् ! ] श्रीकृष्णपुरविराजमान।स्मदीयनीलमणे ! सर्वशेषिभूत राघव ! डोलातल्पे शतनसुखमनुभव मम गीतेन ॥

३. ( कोङ्गुमलि करुमूकुळलाळ् ) सुगन्धिकुन्तलायाः कौसल्यायाः ( मम ) आत्मजरत्न ! महायशस्विनो जनकप्रभोर्जामातः ! दाशरथे ! गंगाजैत्रतीर्थविशेषभासुरश्रीकृष्णपुरालय शतमखमणिनील ! स्वामिन् ! राजवंशपरमभोग्यामृत राघव ! शयनसुखमनुभव ममानेन गीतेन ॥ ... (३)

४. ( तामरैमेलयनवनैप्पडैत्तवने ) कमलपीठे समुत्पादितकमलासन ! चक्रवर्तिसत्पुत्र ! मैथिलीवल्लभ ! भ्रमरमुखरोद्यानपरिवृतश्रीकृष्णपुरावसथास्मदीयनीलमणे ! सायकालंकृतशार्ङ्गपाणे ! राघव ! शयनसुखमनुभव ममानेन गीतेन ॥ ... ... ... (४)

५. ( पाराळुम पडुसेल्वम् ) कृत्स्नभूमीमण्डलसाम्राज्यरूपां विपुलां सम्पदं भरतसात्कृत्य प्रेमभूमभरितेन सौमित्रिणाऽनुजेन साकं गहनं काननमधिगतवन् ! धीरलक्ष्मीनिकेतनवक्षस्थल ! श्रीकृष्णपुराधिनाथ ! रक्षणदीक्षितत्वपिशुनमालालंकृतमूर्धन् ! दाशरथे ! शयनसुखमनुभव ममानेन गीतेन ॥ ... ... ... ... ... (५)

६. ( शुत्तमेल्लाम् पिन्तोडर ) सकलैरपि पौरजनैरनुसरद्भिस्सह कान्तारं प्रस्थितवन् ! परमैकान्तिनां भक्तानां परमसुखदायक हितैषिन् ! साकेतनगरसाम्राज्यधुरन्धर ! विबुधाग्रेसरनिकेतनभूत-श्रीकृष्णपुरविभ्राजमान नीलमणे ! कैकेयीवचसि कृतादर ! श्रीराम ! शयनसुखमनुभव मम गीतेनानेन ॥ [ वि. * सोयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् । त्वन्नाथोऽनाथवद्राम ! राक्षसैर्हन्यते भृशम् ॥ एहि पश्य शरीराणि मुनीनां भावितात्मनाम् । हतानां राक्षसैर्घोरैर्बहूनां बहुधा वने ॥ * इति शरभङ्गाश्रमे समागत्य क्रन्दितवन्तो महर्षयोऽत्र परमैकान्तिभक्तत्वेन विवक्षिताः, तेभ्योऽभयप्रदानं कृतवान् राघवो भगवान् * अप्यहं जीवितं जह्यां त्वां वा सीते ! सलक्ष्मणाम् । न हि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ * इति सीतां प्रति यदुवाच तदप्यत्रानुसन्धेयम् ॥ ] ... ... ... (६)

७. ( आलिनिलैप्पालहनाय् ) पुरा निखिलमपि जगन्निगीर्य वटदलमधिशयितवन्नर्भक ! वालिवधपूर्वकं तदनुजे कपीन्द्रे किष्किन्धाराज्याधिपत्यमनुगृहीतवन् ! मणिनिवहोद्भासिवीचिमालासंकुलसरित्प्रवाहोदश्चत्परिसरश्रीकृष्णपुरीविराजमानशतमखमणे ! श्रीमदालिश्रीनगरीनाथ ! अयोध्याधिपते ! शयनसुखमनुभव ममानेन गीतेन ॥ [ वि. श्रीमदालिश्रीनगरी चोलमण्डले तिरुवालितिरुनगरीति प्रसिद्धो दिव्यदेशः; अत्रैव श्रीपरकालदिव्यसूरेरवतारस्थली विराजत इति वेदितव्यम् ॥ ] (७)

८. ( मलैयदनालणैकट्टि. ) शिलोच्चयस्सेतुबन्धनपूर्वकं वप्रमालापरीतलङ्काध्वंसकारिन् । उत्तरङ्गजलधिमथनेन देवभोग्यामृतप्रदायक ! सकलकलावल्लभविद्वज्जनतासनाथश्रीकृष्णपुरीविराजमान नीलमणे ! धानुष्कसार्वभौम ! महावीर ! श्रीराम ! सुखं शेष्व ॥ [ वि. श्रीरामावतारचरितानुभवमध्ये अमृतमथनोदन्तवर्णनं किमर्थमिति शङ्का जायेत; जलधौ सेतुबन्धनं यथा सीतादेवीलाभार्थमभूत्तथा ( समयान्तरे ) जलधिमथनमपि देवीलाभार्थमेवाभूदित्यनुसन्धाननिबन्धनमेतदिति वेदितव्यम् । अनुजगृहुश्च भट्टपादाः श्रीरङ्गराजस्तवोत्तरशतके—*उन्मूल्याहर मन्दराद्रिमहिना तं संबधानामुना दोर्भिश्चल-मालिकैश्च दधिनिमर्थि मथनाम्बुधिम् । श्रीरङ्गेश्वर ! चन्द्रकौस्तुभसुधापूर्वं गृहाणेति ते कुर्वाणस्य फलेग्रहिर्हि कमलालाभेन सर्वः श्रमः ॥ * इति । एवं श्रीगुणरत्नकोशेऽपि—*स्खलितकटकमाल्यैर्दोर्भिर-बिधं मुरारेर्भगवति ! दधिमाथं मथ्नतः श्रान्तिशान्त्यै । भ्रमदमृततरङ्गावर्ततः प्रादुरासीः स्मितनयनसुधा-भिस्सिञ्चती चन्द्रिकेव * इति ॥ ] ... ... ... ... (८)

९. ( तळैयविळुनरुमकुञ्जि ) सौगन्ध्यसंभृतकुन्तलोल्लासिदशरथपुत्ररत्न ! अवनमितेन धनुषैकेन प्राकारपरिवृतलङ्कापुरीविध्वंसनं विरचितवन् ! विकस्वरकल्हारविततिपरीतोपवनश्रीकृष्णपुरेश नीलमणे ! दीनदयालो ! राघव ! सुखं शेष्व ॥ ... ... ... (९)

१०. ( देवरैयुमशुररैयुम ) देवानसुरान् दिगुपलक्षितसकलवस्तुजातं च समुत्पादितवन् ! सर्वजनताविनतियोग्यतया श्रीरङ्गनगरीमाधिशयान ! कावेरीपयःपूरपवित्रश्रीकृष्णपुरेश नीलमणे ! शरगणसनाथसुन्दरभीषणशार्ङ्गपाणे ! राघव ! भगवन् सुखं शेष्व ॥ [वि. श्रीकृष्णपुरात् कावेर्या विप्रकर्षे सत्यपि तस्याः पयःपूर उपकुल्यामुखेनात्र प्रवहतीति वेदितव्यम् ॥] ... ... (१०)

११. ( कन्निनन्मामदिळ्पुडैशूळ ) विलक्षणप्राकारपरिवेष्टितश्रीकृष्णपुराधीशकाकुत्स्थभगवत्पदारविन्दपरिसरे—साम्राज्यलक्षणसंपन्नेन श्रीकुलशेखरसूरिणा श्रीरामचन्द्रडोलागीतविषयकत्वेन विज्ञापितमिदं सूक्तमधीयाना स्सन्तो भगवदनुभवयोग्यभक्तमणयो भवितार इति फलकीर्तनेन समापितमिदं दशकम् ॥ ... ... ... (११)

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यमिहानुसन्धेयम्—

श्लो ॥ कौसल्यानन्दनस्सन् हरिरवतरणं यर्हि चक्रे तदानीम्
रामस्यैतस्य डोलामधिशयितवतः शैशवे गीतकानि ।
कौसल्या यान्यगायत्परममधुरतत्कीर्तिसान्द्राणि तानि
प्रोचे श्रीशौरिराजं प्रति मधुरवचास्सूरिरेषोऽद्वितीयः ॥

इति श्रीकुलशेखरसूक्ते अष्टमं दशकमवसितम् ॥

---

श्रीमते रामानुजाय नमः । श्रीमद्वरमुनये नमः ॥

## ९. श्रीकुलशेखरसूक्ते—नवमं दशकम्–वन्ताळिनिणवैणाङ्ग ॥

### — अवतारिका —

कृष्णाकृतबाल्यविचेष्टितविशेषानुभवविरहेण विषण्णाया देवक्या वाचा सप्तमं दशकमवतार्य अथ च रामचन्द्रस्य बाल्यानुभवभूम्ना हर्षप्रकर्षमनुभूतवत्याः कौसल्याया वाचा अथ स्तनं दशकमनुगृहीतवतः श्रीकुलशेखरसूरेर्मनसि काचन महती व्यथा समजनि—रामचन्द्रं तमहं साक्षादनुभोक्तुमभाग्योपहतः खल्वभूवमिति । सैषा व्यथा कथञ्चिदप्यन्तर्निगूहितुमशक्याऽभूदमनुष्य । तां व्यथां विलक्षणेन प्रकारविशेषेण प्रकाशयन्निदं दशकमवतारयति सूरिः । रामचन्द्रस्य साक्षाज्जनकत्वेन संजातोऽपि दशरथः सामग्र्येण तमनुभवितुमशक्तस्सन् अचिन्तितोपनतेन वनप्रस्थापनेन वाचामभूमिं व्यथामनुबभूव खलु । तामेव तद्गिरा विपुलमिह प्रख्यापयन् स्वकीयामेव व्यथां प्रकाशितवान् भवतीह सूरिवरः । इदमेव ह्यन्यापदेशेन कथनं नाम ॥

दण्डकारण्ये वैजयन्तनामकपत्तनवास्तव्यं तिमिध्वजापरनामधेयं विजितवासवं शम्बरासुरं वासवाभ्यर्थनया जेतुं कैकेय्या सह रथे प्रस्थितः पंक्तिरथश्चक्रवर्ती तेनासुरेण सह प्रबलं तुमुलमायोधनं प्रवर्तयन् तेन भृशमाकुलीकृतो मूर्च्छितश्चाभूत्; तदात्वे तमिम मनपायगन्ध मन्यतो नीत्वा संरक्षितवती कैकेयी स्वकीयेन सारथ्यवैशारद्येन । अथ व्यपेतमूर्च्छो दशरथः कैकेय्या उपकारातिशयविज्ञानेन प्रसन्नचेतास्तस्यै वरद्वयदानं प्रतिजज्ञे । सा च परतात्समयविशेषे यथाभिलषितं लभेय तदित्यभिधाय तदानीं न लेभे । अथ यदा स राजा रामं यौवराज्येऽभिषेक्तुमयतत, तदा सा मन्थरादुरुपदेशकलुषितहृदया स्वलब्धव्य-

प्रतिश्रुतवरवरद्वयफलत्वेन स्वात्मजस्य भरतस्य राज्येऽभिषेचनम् कौसल्यानन्दनस्य वने विवासनं चाकामयत । अथ यत्समभूत् तत्किमिह विवरणीयम् ? सत्यवाग्वागुराबद्धो दशरथः प्रत्याख्यातुं न प्राभवत; रामप्रेमभूम्ना तस्य वनवासादेशं स्ववाचा विस्रष्टुमपि न शशाक । मूर्च्छयाऽभिभूयते, मध्येमध्ये प्रबुद्धस्सन् प्रलपति विलपति च । तावेव प्रलापविलापौ दशकेऽस्मिन् निबध्येते । एवं निर्वेदघनमपि दशकमिदं रामे हार्दभक्तिभाजां परमभक्तानां चित्तं द्रवीकर्तुं प्रभवतीति तत्तदनुभवावसेयमेतत् ॥

१. ( वन्ताळिनिर्णवणाङ्कि ) भोरामप्रभो ! साकेतनगरप्रजासु सर्वास्वपि शरणागतरक्षणबद्धश्रद्धौ तव चरणौ नमस्कृत्य स्तोतुमुत्कण्ठितासु सतीषु, त्वयि च सिंहासनाधिरोहणपूर्वकं साम्राज्याभिषेकसंमुखीने सति, हाहन्त पापिनी कैकेयी नगरं विहाय विपिनं व्रजेति कथितवती : आः पुत्ररत्न रामभद्र ! त्वज्जनन्याः कैकेय्या वचनबद्धोऽहं सम्यगेव खलु त्वां राज्यनिर्वाहधुरन्धरमकार्षम् : धिङ्मे जीवितम् ॥ ... ... ... ... (१)

२. ( वेऽवायेन् वेव्वुरैकेट्टु ) हा मत्पुत्ररत्न रामचन्द्र ! दारुणवाचो मम कठिनं वच आदृत्य सद्य एव साम्राज्यलक्ष्मीं च समुपेक्ष्य मत्तमातङ्गस्यन्दनतुरंगमादिसम्पदमप्यवधीर्य सद्यो विपिनमेव समुपेत्य सुचारुदृशा वल्गुभूषणया सीतया सौमित्रिणा चानुसृतस्सन् कथमिव त्वं हन्त ! पादचारमकार्षीः ! प्रभो ! पापी सोऽहं किं करवाणि ? ॥ ... ... ... (२)

३. ( कोल्लणैवेल् वरिनेडुङ्कण् ) आः कमनीयदृशः कौसल्याया नन्दन ! शार्ङ्गपाणे ! महावीरशूर ! महापापिनो मम हृदयं शिथिलयितुमेव समुत्पन्न काकुत्स्थ ! कालमेघनिभ ! रामभद्र ! एतावता कालेन सुकुमारशय्यामधिशयितवांस्त्वमधुना विप्रोष्य महारण्यमधिगत्य महीरुहच्छायासु कर्कशशिलातलेषु खलु शयनमभ्यस्यसि हन्त ! ॥ ... ... ... (३)

४. ( वापोहु वाविन्नम् वन्दोरुकाल् ) महापापिनो मम हृदयशिथिलीकरणविचक्षण ! आः पुत्ररत्न ! क्षणमत्र समायाहि ; याहि तावत : पुनरपि सकृदागत्य दर्शनं दत्वा प्रयाहि : कुसुमभरभरितचिकुरबन्धाया अभिरामभुजाया मैथिल्याः पाणिग्रहणार्थं रौद्रधनुर्भञ्जनमारचितवन् ! भो रामचन्द्र ! मृगसन्ततिसञ्चरणदन्तुरं महारण्यमद्य त्वयि गतवत्यपि मम हृदयं न विदीर्णं हन्त ! दृढतरं ह्यवतिष्ठते तत ॥ [ वि. "आः पुत्ररत्न ! क्षणमत्र समायाहि याहि तावत पुनरपि सकृदागत्य प्रयाही" त्येतत मतिभ्रंशमापुषो दशरथस्य चित्तस्वास्थ्यविरहायत्तम् अनन्वितभाषणम् । तदातदा रामभद्रं प्रति एवं कथयन्नासीद्दशरथः ; तन्मुखारविन्दसुषमादिदृक्षया क्षणमत्र समायाहीति कथयेत ; अथ पृष्ठभाग रामणीयकदिदृक्षया 'याहि तावत' इति कथयेत् । पुनरपि वदनाब्जविलोकनकुतूहलेन समायाहीत्याह्वयेत् । एवमेवमसकृदाहूय साभिनिवेशमनुभूत पुत्ररत्न ! इति शेषपूरणेन भवितव्यम् ॥ ] (४)

५. ( पोरुन्दार् कैवेल् नुदिपोल् परल्पाय ) हा महापापिनो मम पुत्ररत्न ! अरातिजनकरधृतशूलायुधाग्रसमशीलानाम् अतितीक्ष्णानामश्मखण्डानां संमर्देन प्रसृतरुधिरपादतलस्सन् निदाघतप्तस्सन् क्षुद्बाधया चाभिभूतस्सन् कस्यापि जनस्य स्पृहाया अगोचरं दारुणं काननमद्य व्रजसि हंहो ! : केकयराजदुहितुर्महापापिन्या वचनमादृतवानेष पापी हन्त ! किं करोतु ॥ ... (५)

६. ( अम्मावेन्नुहन्दलैक्कुम् ) भोः प्रियतातपादेति तदातदा त्वया सप्रेमभरं क्रियमाणं संबोधनमनाकर्णयन्, आभरणालंकृतं तव वक्षो मम वक्षस्यनाश्लेषयन् * मुदा हसन् जिघ्रति मूर्ध्नि पुण्यभाक् * इत्युक्तरीत्या मूर्ध्नि नजिघ्रन् , मत्तमातङ्गगामिनस्तव गतिसौकुमार्यं चाननुभवन् मुखारविन्ददर्शनं च मुहुरनाकलयन् मत्प्रभुं मत्पुत्ररत्नं त्वां प्रच्युतवानयं दुष्टचेष्टितः पापी हन्त ! प्राणित्यद्यापि ॥

७. ( पूमरुवुनरुमक्कुञ्जि ) नित्यनिरवद्यवेदधना भो ब्राह्मणाः! राजधर्मविशारद भोस्सुमन्त्र! पुरोहिताग्रेसर वसिष्ठमहर्षे! युष्मानहं किमपि पृच्छामिः कुसुमसुरभि केशपाशं जटाजूटमाकलय्य, कमनीयपीताम्बरधारणयोग्ये कटितटे कुशकाशवल्कलादि धृत्वा दिव्याभरणानि च दूरीकृत्य नैसर्गिकसौन्दर्यविरहिताङ्गस्सन् महाभुजो मम पुत्रो मयाऽधुना प्राप्तव्यं काननं हन्त स्वयं प्राप्नोति; तदिदं किमहो न्याय्यम्! धर्मज्ञा भवन्त एव कथयन्तु विमृश्य ॥ ... ... (७)

८. ( पोन्पेत्तारेळिल्वेदप्पुदल्वनैयुम् ) आः पापिनि कैकेयि! विद्याधनानां महात्मनां सकशादधीतानन्तवेदं मम ज्यायांसं तनयम् तत्सहजं सौमित्रिम् कीरवाणीं कृशोदरीं मम स्नुषां वैदेहीं च विपिनं प्रापय्य, त्वत्पुत्रं भरतं च वृथापवादपात्रमारचय्य हन्त! मामपि स्वर्गं गमयसिः एवंविधैः कृत्यैर्हन्त किं फलमवाप्तवती त्वम्? त्वमेकाकिनी भुवि सुखं जीवसिः जीव जीव सुचिरं जीव ॥ (८)

९ ( मुन्नोरुनाळ् मळुवाळिशिलैवाङ्गि ) पुरा कदाचित परशुधरमुनिकरतलस्थितं चापं गृहीत्वा तदीयतपःफलमशेषं विनाशितवन्! राम! हन्त त्वं स्वकीयस्वरूपस्वभावादिकं न व्यजीगणः; तव जनन्याः खेदातिशयं च नापश्यः: पितृवाक्यपरिपालनमावश्यकम् पितुस्सत्यवादित्वप्रतिष्ठापनमावश्यकम् इत्येव हृदि कलयन् काननमयासीस्तात! अयि महाभुजबलाढ्य महावीर! एतादृग्गुणशालिनं त्वामेवाहं पुनःपुनरपि पुत्रतया लब्धुं भाग्यवान् भूयासम् ॥ [ वि० ईदृशं गुणानामाकरं पुत्रं प्रसूतवतः पितुर्भाग्यमप्रमेयमिति भावः ॥ ] ... ... ... (९)

१०. ( तेनहुमा मलर्क्कून्दल् ) मनुकुलोत्पन्नमहीपालतल्लज! मधुस्यन्दिपुष्पमालाश्चितकुन्तलबन्धां कौसल्यां च सुमित्रां च शोकसागरे निपात्य, वपुषीव हृदयेऽपि वक्रतां वहन्त्या मन्थराया वचनमादृतवत्याः पापिन्याः कैकेय्या वचनमुररीकृत्य वनवासमेव स्पृहाविषयमाकलितवता त्वयाऽद्य परित्यज्य स्वर्गमेवाभिलष्य तत्र व्रजामि भोः ॥ ... ... ... (१०)

११. ( एरार्न्दकरुनेडुमाकिरामनाय् ) सुन्दरकालमेघनिभस्य श्रीरामतयाऽवतीर्णस्य श्रीमहाविष्णोर्वनप्रवेशदुःखमसहमानेन महनीयविक्रमशालिना दशरथचक्रवर्तिना यद्यथा प्रलपितम् तत्तथैव श्रीमता सम्राजा कुलशेखरसूरिणा तद्भावभावनया प्रकथितमित्थम्; तदिदं द्राविडदिव्यगाथादशकं ये कीर्तयन्ति ते दुरध्ववैदेशिका भवितार इति फलकीर्तनेन समापितमिदं दशकम् ॥ ... (११)

तथा चैतद्दशकसारार्थसंग्राहकमिदं पद्यमिहानुसन्धेयम्—

श्लो० ॥ कैकेय्या हन्त! रूक्षे वचसि बहुमतिं बिभ्रतः पापिनो मे
वाचाऽरण्यं प्रयाता मम तनयवरो रामचन्द्रश्च सीता ।
सौमित्रिश्चातिमात्रं खलु कठिनभुवि क्लेशमासादयन्ती-
त्येवं ह्यक्रन्ददुच्चैर्दशरथवपुषा सूरिरुत्तुङ्गभक्तिः ॥

इति श्रीकुलशेखरसूक्ते नवमं दशकमवसितम् ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ४. श्रीकुलशेखरसूक्ते—दशमं दशकम्—अङ्गणेडुमदिळ् ॥

( श्रीरामायणसारसंक्षेपरूपम् । )

अवतारिका ॥ श्रीकुलशेखरसूरिवरोऽसौ यतो हि श्रीरामचन्द्रावतारास्पदे शुभे पुनर्वसुभे जज्ञे, ततश्चास्य श्रीरामे परमा भक्तिः श्रीरामायणे महती श्रद्धा चासीदिति प्रथितमेतत् । नित्यं श्रीरामायणपारायणम् तदर्थप्रवचनम् तदर्थश्रवणं चैव नियमेन कुर्वन्नासीत् । तत एवास्य मनसि मनोरथोऽयमजनि—जगति सर्वेऽपि जनाः श्रीरामचन्द्रस्य पवित्रं चरित्रं संक्षेपतोऽपि वा विदित्वा पूता भूयासुरिति । तेनैव मनोरथेन दशकमिदं श्रीरामचन्द्रचरितमयं निबध्नाति । दशरथात्मजत्वेन भूतले कृतादवतारात्प्रभृति दिव्यधामनिषेवणपर्यन्तं प्रवृत्तं श्रीरामचरितमतितरां संक्षिप्य प्रतिपादयति दशकेऽस्मिन् । एवंविधमनुभवम् अर्चावतारस्थलविशेषे करोतीति विशेषः । चित्रकूटनाम्ना प्रथमानं स्थलमुत्तरभारते च विराजते । * सुभगश्चित्रकूटोऽसौ गिरिराजोपमो गिरिः । यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने ॥ * इति श्रीरामायणोपश्लोकितं स्थलमौत्तराहम् । दाक्षिणात्यं चित्रकूटस्थलं तु चिदम्बरक्षेत्रविराजमानं श्रीगोविन्दराजभगवदावसथभूतम् । तदिदं क्षेत्रं तिल्लैचित्रकूटनाम्ना व्यपदिश्यते । श्रीपरकालसूरेरपि मङ्गलाशासनास्पदमिदं स्थलमिति ध्येयम् । प्रकृतक्षेत्राधीशं भगवन्तमेव श्रीरामायणकथया स्तौतीदानीं सूरिरेषः । उत्तरकाण्डपर्यन्तकथानुसन्धानमिह वेदितव्यम् ॥ ... ... ... *

१. ( अङ्गणेडुमदिळ्पुडैशूळ्अयोत्तियेन्नुम् ) विपुलरुचिरप्राकारपरिवृतायां साकेतपुर्यां सकललोकप्रकाशनपटुस्वतेजोंशेन सूर्यकुलप्रदीपवदाविर्भूतम् समुज्जीवितसकलदेववृन्दं महावीरं पुण्डरीकाक्षं कालमेघोपमयद्दिव्यशुभविग्रहमस्मत्प्रभुं श्रीरामचन्द्रं दक्षिणचित्रकूटक्षेत्रमध्यासीनम् अद्वितीयजगन्निदानं स्वामिनं कदा नु हर्षप्रकर्षेण संसेवेय ? ॥ [ श्रीरामावतारकथाऽत्र कीर्तिता भवति । ] ... (१)

२. ( वन्देदिर्न्दताटकैतनुरत्तैक्कीरि ) कौशिकमहर्षियज्ञविघ्नचिकीर्षयाऽभ्युज्जिहानाया स्ताटकाया वक्षस्स्थलं रुधिरस्रावजनकसायकविशेषप्रयोगेन विदार्य वैदिकोत्तमस्य महर्षेस्तस्याध्वरं निष्प्रत्यूहं निर्वर्तितवान् बलिष्ठयातुधानगणप्राणापहरणप्रवीणो महावीरो रामचन्द्रः—पल्लवप्रसूनपरिकर्मितशिशिरोपवनपरीतदक्षिणचित्रकूटस्थले त्रिसहस्रसंख्याकब्राह्मणाभिष्टुतस्सन् अतिमनोहररत्नसिंहासनमलङ्कुर्वाणस्सर्वेश्वरः ॥ [ वि. दिव्यक्षेत्रमेतदधिकृत्य श्रीपरकालसूरिवरानुगृहीतगाथास्वपि त्रिसहस्रसंख्याकब्राह्मणाधिष्ठितत्वमुपवर्णितमस्तीति वेदितव्यम् । श्रीशठकोपमुनीन्द्रानुगृहीतसहस्रगीत्याम् केरलमण्डलान्तर्गत—तिरुच्चित्तारुनामकदिव्यदेशस्तुतिप्रकरणे ( ८-४-१० ) तस्यापि क्षेत्रवरस्य त्रिसहस्रसंख्याकवैदिकाधिष्ठितत्वमुपवर्णितमस्तीति स्मारयामः | .... ... ... ... (२)

३. ( शेव्वरिनर्करुनेडुङ्कण्शीदैक्काहि ) अतिरमणीयनीलोत्पलसच्छायलोचनशालिन्याः सीतादेव्याः पाणिग्रहणाय वृषभध्वजस्य धनुर्भङ्गमाकलितवन्तम् परशुधरस्य जामदग्न्यस्य करे स्थितं वैष्णवं धनुर्गृहीत्वा तत्पराभवसंपादनेन क्षत्रियवैरिगर्वभञ्जनं कृतवन्तम् महावीरं शार्ङ्गपाणिं श्रीराघवम्—शत्रुव्रातभयावहसमुच्छ्रितप्राकारपरिवेष्टित दक्षिणचित्रकूटदिव्यदेशे ये प्रणमन्ति भागवताः, तेषामेव पादद्वन्द्वं प्रणमामि ॥ [ एतावता गाथात्रितयेन बालकाण्डकथानुसन्धानमवसितम् ] ... ... (३)

४. ( तोत्तलर्पूञ्जुरिकुळल्कैकेशिशोलाल् ) कुसुमस्तबकालंकृतकबरीबन्धायाः कैकेय्या वचनमादृत्य साम्राज्यमवधीर्य काननमवगाह्य गुहनामकभक्ततारितभागीरथीकम् चित्रकूटगिरिमधिष्ठितवन्तम् प्रणतभरतमकुटस्थापितपादुकाराज्यं च भगवन्तं जानकीजानिं सम्प्रति दक्षिणचित्रकूटदिव्यदेशेऽस्याह्लादपूर्वकमवेक्षमाणा भौमा जनास्सत्यममरेभ्योऽप्यभ्यर्हिताः ॥ ... ... ... (४)

५. ( वलिवणक्कुवरनेडुन्तोळ् ) निरतिशयभुजबलशालिनं विराधं निहतवन्तम् परमोदारेण द्राविडभाषाप्रवर्तनधुरन्धरेण कुम्भसंभवमुनिवरेणार्पितमस्त्रग्रामं प्रतिगृहीतवन्तम् मृगीदृशः शूर्पणखाया अङ्गभङ्गमाकलितवन्तम् खरदूषणादिप्राणानपहृतवन्तम् चापमवनमय्य मारीचमायामृगमुपमर्दितवन्तं च राघवेन्द्रं दक्षिणचित्रकूटदिव्यदेशे सप्रणति साञ्जलिबन्धं च स्तुवतां सतां सञ्चरणेन सौभाग्यवती सैषा जगती ॥ ... ... ... ... ... (५)

६. ( तनमरुवैदेविपिरियलुत्तु ) स्वसर्वस्वभूताया वैदेह्या विश्लेषेण विक्लबहृदयम्, * मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमानिति प्रोच्य जटायुं नाम खगपतिं वैकुण्ठं प्रापितवन्तम्, शाखामृगेन्द्रसुग्रीवसख्येन वालिवधमारचितवन्तम्, राक्षसेश्वराधिष्ठितलङ्कापुरीं मारुतिद्वारा निर्दग्धवन्तम् दक्षिणचित्रकूटदिव्यदेशे परमभोग्यतया विराजमानं च रामचन्द्रप्रभुं स्तुवतां सतां पादद्वन्द्वमेव स्तवानि ॥ (६)

७. ( कुरैकडलैयडलम्बाल्मरुहवेयूदु ) उत्तरङ्गमुदधिमाशीविषोपमैश्शरैर्भीषयित्वा तत्र सेतुबन्धमारचय्य ततस्तीर्त्वा अरुन्तुदहेतिपाणिनाशरनिवहानाशराधीशेन सह समूलं निहत्य विभीषणे लङ्कैश्वर्यं प्रतिष्ठाप्य तदनु सीतासंश्लेषमनुभूतवतो दक्षिणचित्रकूटस्थलेशितुः रघुपतेश्चरणावतंसनादन्यन्नाहं राज्यभोगमभिमन्ये ॥ ... ... ... ... ... (७)

८. ( अम्बोनेडुमणिमाडवयोत्तियेयूदि ) स्पृहणीयसमुत्तुङ्गहिरण्मयप्राकारपरिवृतामयोध्यामधिगत्य साम्राज्यमासाद्य, स्वेन निहतपूर्वस्य दशकन्धरस्य महतीं पुरातनकथामगस्त्यमहर्षिमुखादाकर्ण्य, अथ सकललोकसमुज्जीवनार्थं वैदेहीप्रसूतकुशलवमुखतः श्रीरामायणकथामखिलामाकर्णितवतो दक्षिणचित्रकूटदिव्यधामाधिपतेः रघूद्वहस्य चरितामृतं श्रवसा चक्षुषा चास्वादयेम, नान्यदमृतमाद्रियेमहि ॥ [ एतावता युद्धकाण्डान्तकथानुभूतिरवसिता, उत्तरकाण्डकथोपक्रमश्च कृतः ॥ ] ... (८)

९. ( शेरितवञ्जम्बुहन्तन्नैचेन्नुकोन्नु ) दण्डकारण्ये तपश्चर्यानिष्णातं शम्बूकं नाम वृषलं तत्र गत्वा निहत्य द्विजन्मसुतं मृतं संजीवितवन्तम्, तापसप्रवरकुम्भसंभवमुनिप्रदत्तमनर्घमाभरणवरं प्रतिगृहीतवन्तम्, लवणासुरं शत्रुघ्नतो वीरस्वर्गमधिगमय्य अथागस्त्यमुनिवरहृदयानुसारेण सौमित्रिवियोगमाप्तवन्तं दक्षिणचित्रकूटदिव्यधाम्नि स्थिरवासजुषं भगवन्तं सन्ततं ध्यायता चित्तेन सनाथास्स्मः। अतश्च वयमार्तिवैदेशिका विलसामः ॥ ... ... ... ... (९)

१०. ( अन्नु शराशरङ्गळै वैहुन्दत्तेति ) समयविशेषेषु गरुत्मन्तमधिरुह्य कृतेन सुरवैरिनिबर्हणेन जातां जयश्रियं बिभ्रतश्चतुरोऽपि बाहून् प्रकाशयन्सन् वैकुण्ठं प्रति प्रस्थितः सकलचराचरैश्च सह गत्वा नित्यमुक्तनिबर्हैरभ्युद्गतस्सन् निजधाम निषेव्य यस्सुखं व्यराजत, स एव भगवान् रामचन्द्रो दक्षिणचित्रकूटदिव्यदेशमध्यास्त इत्यनुसन्धाय स्तुत्वा च नित्यं तत्रैव प्रणम्य समुज्जीवत भो भक्ता यूयम् ॥ [ वि. अनुजस्य सौमित्रेर्वियोगदुःखं सोढुमशक्नुवन् रामो राज्यं विहाय निजं धाम प्रस्थातुमैहत यदा, तदा सर्वेऽपि पौरा जनाः स्वात्मनामपि सहनयनं प्रार्थयन्तस्म; श्रीरामस्तेषां प्रेमप्रकर्षमवेक्ष्य भृशं प्रसन्नः ओमित्यङ्गीकृत्य सर्वैरपि जनैरनुसृतः प्रतस्थे। तदात्वे न केवलं मनुष्या एव, अपि तु साकेतनिलयाः पशुपक्ष्यादयोऽपि तमन्वसरन् सानन्दम्। एवं नाम सपरिवारो भगवान् सरयूमवगाह्य दिव्यं

धाम व्रजन् परमप्रेमभूम्ना स्वात्मानुसरणेन सरय्वां देहत्यागं कृतवतां सर्वेषामपि जन्तूनां ब्रह्मलोकादप्यभ्यर्हिते श्रीवैकुण्ठवदपुनरावृत्तिलक्षणे सान्तानिकसमाख्ये लोकविशेषे निवासं पर्यकल्पयत। तदिदं सुन्दरबाहुस्तवे श्रीकूरनाथगुरुवरैश्च * अयोध्यिकान् सपशुकीटतृणांश्च जन्तून् ... सायुज्यलभ्यविभवान् निजनित्यलोकान् सान्तानिकानगमयो वनशैलनाथ! * इत्यनेन श्लोकेनानुसंहितम्॥] ... (१०)

११. (तिल्लैनगर्त्तिरुच्चित्तिरकूडन्दन्नुळ्) दक्षिणचित्रकूटदिव्यधाम्नि बलीयसा मारुतिना सह विराजमानं रघुनन्दनमधिकृत्य—दशरथात्मजत्वेनावतरणमारभ्य स्वकीयदिव्यधामप्रवेशावधि कथासन्दर्भं संगृह्य विज्ञापितवतः साम्राज्यलक्षणसम्पन्नस्य श्रीकुलशेखरसूरेः सल्लक्षणलक्ष्यद्राविडवाग्विततिमिमाम् अधीयानास्सन्तो भूरिश्रेयोनिदाननारायणचरणपरिसरमवगाहन्तीति फलकीर्तनेन समापितमिदं दशकम्॥ सूक्तं च समाप्तम्॥ ... ... ... ... ... (११)

तथा चैतद्दशकसारांशसंग्राहकमिदं पद्यद्वयम्—

श्लो॥ साकेते सूर्यवंशे दशरथभवने रामनाम्नाऽवतारम्
विश्वामित्राध्वरस्यावनमथ धरणीपुत्रिकोद्वाहभद्रम्।
पश्चात्कान्तारयात्रां भरतशिरसि पादूनिधानं च पश्चात्
राक्षस्या अङ्गभङ्गं खरमुखहननं मायिमारीचहत्याम्॥
पश्चात्सीतावियोगं खगपतिदहनं वानरेन्द्रेण मैत्रीम्
वालिध्वंसं हनूमत्कृतपरपुरनिर्दाहमम्भोधिबन्धम।
रक्षोराजोपमर्दं तदनुजपरमानुग्रहं राज्यभोगम्
कुम्भीसूनूक्तरक्षश्चरितनिशमनं चान्ततस्सूरिराह॥
कुलशेखरसूरिवरस्सुमहान् निजभक्तिबलादवदच्छतकम्।
मधुरद्रविडोक्तिभरैरथ तत् सुरगीरनुवादमवापितवान्॥
प्रतिवादिभयङ्करसूरिकुले सुकृतैरमितैर्जननं कृतवान्।
मिडामरवाक्प्रमुखामितवाक्कलितश्रम एष बुधः कविराट्॥
कुलशेखरसूक्तविवर्त इति प्रथितं महितं कृतिरत्नमिदम्।
भगवद्धृदयाब्जविकासकरं सततं लसतात्सुधियां हृदये॥

इति श्रीकाञ्चीप्रतिवादिभयङ्कर-अण्णङ्गराचार्यकृतिषु

द्राविडाम्नायदिव्यप्रबन्धविवर्ते श्रीकुलशेखरसूक्तविवर्तः

समाप्तः

प्रथमसहस्रे पञ्चमो दिव्यप्रबन्धः परिसमाप्तः

॥ श्रीरस्तु ॥

श्रीरामचन्द्रपरमात्मने नमः ।

अस्मद्गुरुपरम्पराभ्यो नमः ।

श्रीकुलशेखरसूक्तदशमदशकानुगृहीत श्रीरामकथाविवरणात्मना

श्रीकाञ्ची प्रतिवादिभयङ्कर जगदाचार्यसिंहासनाधीश

श्रीमदण्णङ्गराचार्यकृता

# ॥ श्रीरामायणदण्डककृतिः ॥

जयतु रघुरामचन्द्रो जयतु महावीरधीरधौरेयः । जयतु महनीयसत्तममहर्षिहृदयाब्जभास्करो जगति ॥

---

## १. बालकाण्डदण्डकः ।

जय जय रघुवीर रामप्रभो रामचन्द्रप्रभो सूर्यवंशप्रदीप प्रसिद्धप्रभावाढ्यदेवेन्द्रगौरीशवाणीशमुख्यामरस्तोमसंप्रार्थनाहृष्ट दुग्धाब्धितो दिव्यसाकेतसम्राड्गृहे स्वं चतुर्धा विभज्यावतीर्ण प्रभो शुक्लपक्षेन्दुवन्नित्यसंवर्धमानाङ्ग सत्कैकयीपुत्रसौमित्रिशत्रुघ्नसंयुक्त यज्ञस्य रक्षार्थमभ्यागतं गाधिपुत्रं स्वपित्राज्ञयैवानुसृत्याथ विद्ये च सम्पाद्य संगृह्य चास्त्राणि विज्ञाय चाश्चर्यनानाचरित्राणि विध्वस्तदुस्ताटकाताटकेयादिरक्षस्समूह स्वपादाब्जधूलीपवीत्रर्षिपत्नीस्तुतप्राभव स्वैरनिर्भग्नभूतेशचापक्रयीभूतसीताकराम्भोज लीलासमुद्धूतसद्रेणुकापुत्रदर्प प्रभो दिव्यसाकेतधामन् नमस्ते पुनस्ते नमः ॥ १ ॥

वाल्मीकेर्मुनिपद्मयोनिमुखतो रामायणोद्बोधनं विष्णोः पंक्तिरथाध्वरागतसुरैरभ्यर्थितस्योदयः ।
विश्वामित्रनिषेवणं कुलकथोद्बोधो मुनिस्त्रीकथा सीतापाणिपरिग्रहो भृगुमुनेरुद्वासनं चादिमे ॥१॥

---

## २. अयोध्याकाण्डदण्डकः ।

नम इदमविराममुज्जृम्भतां राम विप्रोषिते मातुलागारमुद्दिश्य भक्त्युज्ज्वले भ्रातृरत्ने सशत्रुघ्न उत्कण्ठितात्मीयतातप्रक्लृप्ताभिषेकोद्यमामोदिपौरप्रजावर्गसंश्लाघितामेयदिव्यप्रभावाढ्य ! पत्न्या समं कल्पनारायणाभ्यर्च्य ! कुब्जाकठोरोक्तिसम्पादितक्षोभकैकेय्युपक्षिप्तवाञ्छाद्वयीवृद्धशोकानृतोक्तिप्रभीतस्वताताज्ञयालब्धकान्तारयात्र, स्वमातृप्रयुक्तामिताशीर्वचस्तुष्ट रोषातिरेकोपशान्तप्रोत्कटालापसीतामनस्तोषणोत्प्रसिद्ध सदा सर्वकैङ्कर्यसाम्राज्यपट्टाभिषेकस्फुरद्भ्रातृसेवासनाथ प्रयाणार्थदानावलीमध्यसम्प्राप्तवृद्धद्विजस्वान्तसन्तोषदायिन् लसद्वन्यवेष प्रजावर्गदीर्घप्रलापप्रदायिप्रयाण स्वताताति वेलाश्वसादैकबीजावतार स्वयात्रानुवर्तिप्रजाविप्रलम्भप्रवीण प्रभो व्याधनाथातुलप्रेमबन्धप्रकाशप्रसिद्धात्मसुशील प्रयागे भरद्वाजयोगीन्द्रसेविन् अथो चित्रकूटाचलोपान्तवास्तव्यवल्मीकजन्मर्षिसंमोदहेतो प्रमीतस्वतातावसानक्रियौघ-

प्रपूर्तेः परस्तात् समं पौरवर्गैरुपायातभक्ताग्रचसद्भ्रातृशीर्षप्रतिष्ठापितात्मीयसत्पादुकाद्वन्द्व कान्तास्तनाभोगपीडाकरोद्वेलकाकासुरत्राणविख्यातकीर्ते महर्ष्यत्रिसेविन् तदीयप्रियादत्तदिव्योपदेशोररीकारिसीतामनस्तोषहेतो महाराक्षसानीकिनीधूमकेतो ! ॥ २ ॥

भ्रात्रोर्मातुलसद्मसेवनमथो रामाभिषेकोद्यमः कैकेयीवरयाचनं रघुपतेर्व्याधादिसख्यं वने ।
निर्याणं नृपतेर्विषण्णभरतस्याजग्मुषोऽद्रेस्तटे पादूस्वीकृतिरत्रिदारमधुरालापो द्वितीयेऽभवत् ॥९॥

---

## ३. अरण्यकाण्डदण्डकः ।

जनयतु शुभमाशु सीतापतिर्दण्डकारण्यवास्तव्यसद्वृन्दभद्रोक्तिसंस्तूयमानो विराधाभिधध्वंसविख्यातभूमा सहस्राक्षसन्दृष्टमौनीन्द्रमुक्तिप्रदानप्रवीणावलोकः स्वगात्रस्थनानाविधोपप्लवावेदिसन्तापसौथाय दत्ताभयो दृष्टनानामुनीन्द्राश्रमौघस्सुतीक्ष्णाख्ययोगीन्द्रसेवी समाचान्तपाथोधियोगिप्रदत्तास्त्रवर्गो जटायुश्रितः पञ्चवट्याश्रमस्थस्समं सीतया साधु गोदावरीनीरपूरावगाही स्मरावेशसन्तप्तदुर्वृत्तरक्षोवधूकर्णनासक्षयाधायिसौमित्रिसंसेविताङ्घ्रिर्जनस्थानजाग्रत्खरादिप्रसिद्धाशरक्षोभसन्तुष्टसीतासमाश्लिष्टगात्रो महामायमारीचभेदी लसद्भिक्षुवेषप्रचण्डाशराधीशदुर्विप्रलम्भाहृतक्षोणिपुत्रीवियोगावसन्नो यथावृत्तविज्ञापनोत्सन्नपक्षीशसंस्कारकारी कबन्धाख्यरक्षोवपुर्दाहदार्यो महाभक्तिसाम्राज्यभास्वच्छबर्या भृशं पूजितो दिव्यपम्पासरस्तीरसेवी रघूत्तंस उद्यत्कुधा क्लृप्तरक्षोगणध्वंसः ॥ ३ ॥

भद्रोक्तिर्यमिनां विराधहननं योगीन्द्ररक्षाव्रतप्राबल्यं शरभङ्गमुक्तिरथ चागस्त्याश्रमासेवनम् ।
रक्षस्त्रीकदनं खरादिनिधनं मायामृगध्वंसनं सीताया हरणं जटायुनिधनं काण्डे तृतीयेऽभवत् ॥

---

## ४. किष्किन्धाकाण्डदण्डकः ।

प्रभवतु सततं स रामप्रभू रामचन्द्रप्रभुर्हन्त नानाविधक्रौञ्चदात्यूह हंसौघमद्गुप्रियावृन्दबर्हिच्छटाकोकसत्कोकिलालीकलालापकोलाहलाकर्णनात्यत्प्रियाविप्रयोगावसादातिरेको भयावेशसंविग्नसुग्रीववाचा समायातसैन्यासिवेषाश्चितश्रीहनूमत्सुधासूक्तिसन्तर्पितात्मा दिनाधीशपुत्रप्रपत्तिप्रतीताप्रमेयात्मशीलः प्रतिज्ञातवालिप्रमाथी विदेहात्मजादिव्यभूषासमीक्षासमुद्भूतशोकातिरेकस्सुहृच्चित्तविश्वासनैकान्तकर्मा पदाङ्गुष्ठविक्षेपदूरीकृतोद्दण्डदुन्दुभ्यभिख्यातदैत्यास्थिपुञ्जः क्षणात् सप्तसालीविभेदैकबाणो दशास्योपमर्दप्रसिद्धातिवीर्याढ्यवालिप्रियाकण्ठवैकल्यकल्यः प्रलापापदेशप्रयुक्ताप्रमेयस्तुतिस्तोमताराम्नस्तोषणोक्तिः कपीन्द्राधिराज्याभिषेकप्रकल्पी तथा यौवराज्याभिषिक्तेन्द्रपौत्रः कथञ्चित् कथञ्चित् समाश्वासयित्रा समं लक्ष्मणेन क्षिपन् वृष्टिमासान् स्वभोगैकसंसक्तसुग्रीवभीतिप्रदज्यानिनादश्रुतिस्विन्नताराकृताश्चर्यवाग्गुम्भसंमोदितस्वान्तसौमित्रिसेवाप्रसन्नान्तरङ्गः कपीशानसुग्रीवसन्नाहितासंख्यनानादिगन्तप्रयाणोत्ककीशौघसेनासमीक्षासमुत्फुल्लचेता विशिष्यान्तरङ्गाहृतश्रीहनूमत्करायोजितस्वाङ्गुलीभूषणो मैथिलीचित्तसन्तोषणः ॥ ४ ॥

वैदेहीविरहावसादगरिमा वातात्मजाभाषणं सख्यं सूर्यसुतेन तस्य हृदये विस्रम्भसम्पादनम् ।
वालिक्षोभणतत्प्रियाकृतनुती राज्याभिषेकोऽनुजे वर्षायापनकीशसैन्यनियमौ काण्डे चतुर्थेऽभवन् ॥

---

## ५. सुन्दरकाण्डदण्डकः ।

प्रदिशतु कुशलानि रामोऽभिरामो यमानन्दयामास कर्णामृतोक्तैर्मनीषी हनूमान् मरुत्पुत्ररत्नं स्फुरज्जाम्बवस्तोत्रसंवृद्धवीर्यो महेन्द्राद्रिचूडातटादुत्पतिष्णुः पयोराशिमध्यात् समुद्भूतमैनाकभूभृद्वरस्वादुविज्ञप्तितुष्टः परीक्षोत्सुकामर्त्यसम्प्रेषितायातरक्षोवपुर्नागमातृप्रभेदी गृहीतस्वकच्छायसिंहीविनाशी विनाऽऽयासलेशं पयोराशिलङ्घी गृहीताल्पकायश्शशाङ्कोदयस्पष्टसंदृष्टलङ्कः स्वमुष्टिप्रहारश्लथक्षेत्रपालीप्रदत्तप्रवेशाभ्यनुज्ञो मनोज्ञप्रतोलीमहासौधवप्रादिवीक्षासमुद्यन्महाश्चर्यधुर्यान्तरात्मा मुहुस्सर्वतोऽन्वेषणेनापि सीतामदृष्ट्वाऽतिमात्रं विषण्णान्तरात्मा विलम्बं विना तत्कटाक्षोपलब्ध्यै कृताशेषदैवत्यपूर्णार्चनादिस्ततोऽशोकवन्यां पिशाचीसमाभिस्सुभीमाभिरुग्राभिरुग्रक्रियाभिर्वधूभिः परीतामसह्यार्तिमूर्तिं रघूत्तंस रामाभिरामेति वाचो मुहुर्व्याहरन्तीं मुमूर्षां वहन्तीम् धरित्रीसुपुत्रीं तनुं स्वामविन्नीं पवित्रैश्चरित्रैः प्रणम्याथ सर्वाः कथास्साधु विज्ञाप्य सन्तोषयंस्तां प्रदायापि तस्यै स्वनाथाङ्गुलीयं ततो दिव्यचूडामणिं चाददानस्स्वकीयागतिं तत्र सन्दर्शयिष्यन् परेषां च वीर्यादि विज्ञातुमिच्छन् वनं तत् समन्तात्समुत्पाटयन् द्राक् ततः किङ्कराभिख्यरक्षस्समूहान् प्रहस्तात्मजं सप्तदुर्मन्त्रिपुत्रान् विरूपाक्षमुख्यांश्च सेनाधिनाथान् दशास्यात्मजन्मानमक्षं च निघ्नन् ततश्शक्रजिन्नीतबिध्यस्त्रबन्धो दशास्यान्तिकं प्राप्य रामप्रभावान् हितोक्तिप्रदानेन साकं प्रवर्षन् स्वलाङ्गूलसंयोजिताग्निप्रतापप्रदग्धाशराधीशनिश्शेषदेशो विदेहात्मजानुग्रहं प्राप्य तीर्त्वा पयोराशिमुत्तानदत्तानानाऽज्ञान् सजातीयवीरान् समाश्लिष्य हृष्यन् प्रहृष्टैः परीवाहरूपाणि कर्माण्यशेषैस्समं साधु कुर्वन् प्रयातः प्रियादिव्यचूडामणिं सम्प्रयच्छन्निदानीमपि व्योमयात्रामगच्छन् ॥ ५ ॥

भित्त्वा सिंहिकया सहैव सुरसां तीर्त्वाऽम्बुधिं सर्वतोऽ-
प्यन्विष्य क्षितिजामशोकविपिने दृष्ट्वा निवेद्याखिलम् ।
दत्त्वा चांगुलिभूषणं पवनजस्संगृह्य चूडामणिं
दृष्ट्वाऽरिं प्रदहंश्च तस्य नगरीं प्रत्यागतः पञ्चमे ॥ ५ ॥

---

## ६. युद्धकाण्डदण्डकः ।

रघुवर रघुवीर सीतापते देहि भद्राण्यनिद्राणि कान्ताशुभोदन्तसन्तानविज्ञानसञ्जातहर्षप्रकर्ष प्रियाख्यातृवातात्मजाय प्रदत्तातुलात्मीयगात्रोपमर्द ! प्रयाणोन्मुखीभूतसुग्रीवसेनापरीवारबृन्दैस्समं प्राप्तसिन्धुप्रतीर स्वदत्तोपदेशोक्तिधिक्कारिदुर्भ्रातृसंवासवैमुख्यधन्यात्मसामात्यधर्मात्मसम्प्राप्तिसुप्रीत तत्स्वीकृतिक्षेपिसुग्रीवनीलादिशाखामृगप्रोक्तवादप्रतिख्यानविख्यातवात्सल्य ! दत्ताभयप्रह्वधर्मात्ममूर्धाभिषेकप्रकल्पिन् त्रिरात्रप्रपत्त्याऽप्यजाताभिमुख्ये समुत्पन्नकोप ! प्रसादार्थिपाथोधिवाञ्छानुरूपप्रवल्गमानवच्छ्रप्रधानप्लवसेतो शुभोदर्कनानानिमित्तोपलम्भप्रफुल्लान्तरङ्ग प्रभो राशराणां निदेशादुपायातचारानुकम्पिन् प्रियाविप्रलम्भार्थमायाशिरस्स्रष्टनक्तञ्चरध्वंसबद्धत्वरावेशदत्ताभितोत्साहशाखामृगौघ प्लवरक्षोवधोद्दिप्रलङ्केन्द्रपुत्रेन्द्रशत्रुप्रयुक्ताहिपाशप्रणाशार्थयादृच्छिकायातपक्षीन्द्रवीक्षासमुज्जृम्भितानन्दसेनाकृतोद्वेलवीरारवाकर्णनोद्विग्नरक्षःप्रभुप्रेषितोद्दण्डधूम्राक्षदुर्वज्रदंष्ट्रप्रहस्तादिविध्वंसनाश्चर्यचर्यानिरीक्षिन् महाशोकरोषाभिभूतोपयाताशराधीशशक्तिप्रयोगार्तसौमित्र्युपच्छन्दिवातात्मजांसोपविष्ट क्रुधा वातसूनुव्रणोत्पादिलङ्कापुरीराट्किरीटप्रभेदार्ध-

चन्द्रप्रयोगिन् परित्यक्तचापाशराधीशमालोक्य गच्छानुजानामि पश्चादुपायाहि विश्रम्यतां सम्प्रतीति प्रयुक्तातिगम्भीरसूक्ते यशस्विन् अहो रामबाणा अहो रामबाणा इतीवानिशं जल्पता रावणेन प्रयत्नैरनल्पैः प्रबोध्याधियुद्धं विसृष्टं बलिष्ठं शरैः कुम्भकर्णं निहत्यातिदेदीप्यमानप्रताप त्रपाहीनलङ्केशसञ्चोदितोद्यन्महापार्श्वदेवान्तकोग्रातिकायप्रभृत्याशरौघप्रणाशप्रहृष्टप्रक्लृप्ताभिचारक्रियाभङ्गसाटोपसेनासमुत्थापितक्रोधशक्रारिविक्षिप्तविध्यस्त्रसंमूर्छिताशेषजीवातुदिव्यौषधिप्रापणोत्कण्ठवातात्मजायत्तसत्ताक ! सौमित्रिबाणौघक्लृप्तेन्द्रजित्प्राणनिर्मोकघोरक्रियाकर्णनोद्वेलसंकुद्धलङ्केशसंप्रेषितामोघमूलौघनिर्मूलनोदञ्चदाश्चर्यचातुर्य वैधव्यनिर्विण्णनक्तञ्चरीबृन्दशोकप्रलापोक्तिसन्धुक्षितामर्षलङ्केश्वरादेशनिर्यद्विरूपाक्षमुख्याशरस्तोमसंहारिकीशेन्द्रविक्रान्तिसन्तुष्टसाक्षादुपायातरक्षःपतिक्षिप्तशक्त्यायुधोद्विग्नसौमित्रिजीवातुदिव्यौषधानेतृमारुत्युपास्ताहं देवेन्द्रसम्प्रेषितोत्तुङ्गयानस्थकुम्भीसुतादिष्टमानुष्यकैकान्तसुयंस्तुतिस्तुत्य शश्वद्विलूनप्ररोहच्छिरःपुञ्जदोर्दण्डनिःशेषनिर्मूलनोदञ्चदानन्ददेवर्षिगन्धर्वसिद्धौघसन्धुक्षितस्तोत्रपात्रप्रभाव ! प्रलापापदेशेन मन्दोदरीवक्त्रनिर्यन्महाश्चर्यवेदान्तसोदर्यशुद्धस्तुतिस्तोमवेद्यस्वरूपाढ्य विध्वस्तपंक्त्यास्यसंस्कारिधर्मात्मविन्यस्तलङ्केश्वर्यां वक्तुमभ्यागते वातपुत्रे चिरक्रूररक्षोवधूवर्गनिष्पेषणार्थिन्यथाविष्कृतात्मीयदिव्यानृशंस्यां विदेहात्मजामग्निशुद्धां विशुद्धां सहानन्दमाश्लिष्य दिव्ये विमानेऽथ सुग्रीवमुख्यैस्सह स्थापयित्वा सुरम्याणि हर्म्याणि वन्यानि धन्यानि चाश्चर्यचर्याविशेषैस्सहोद्बोध्य मध्ये भरद्वाजपूजामतीवोत्तमां प्राप्य हृष्टान्तरङ्ग प्रयागत पुरस्तात प्रयाताञ्जनेयप्रियाख्यानसन्तुष्टसद्भ्रातृक्लृप्ताप्रमेयाद्भुतालंक्रियाशोभ्ययोध्याप्रवेशप्रहृष्टप्रजावर्गजुष्ट प्रसिद्धप्रभावाभिषेकोत्सवोदञ्चदानन्दसन्दोहभक्तानुकम्पिन यथायोग्यसत्कारसन्तुष्टसुग्रीवलङ्काधिनाथाञ्जनेयादिचित्तस्फुरद्दिव्यकीर्ते तथा दिव्यकाञ्चीपुराणङ्गराचार्यजिह्वाग्रसिंहासनस्वीकृतास्थान ! दिव्याद्भुतामेयलीलामहास्थान तुभ्यं नमः ॥ ६ ॥

आत्यायातविभीषणप्रपदनं सेतोः कृतिस्सागरे शक्रारातिकृताहिपाशदलनं मृत्युः प्रहस्तादिषु ।
लङ्केशानुजपुत्रमन्त्रिनिधनं मूलौघनिर्मूलनं रक्षोराजनिबर्हणं रघुपतेः साम्राज्यमप्यन्तिमे ॥ ६ ॥

श्रीकाञ्चीवादिभीकृद्गुरुकुलतिलकश्री जगद्गुर्वभिख्या-
विख्यातानन्तसूरिप्रगुणकरुणया लब्धसत्तो जनोऽयम् ।
श्रीमद्वाल्मीकिरामायणकथितकथासारसंक्षेपरूपं
भक्तानां नित्यभोग्यं व्यतनुत शुभदं दण्डकग्रन्थमेतम् ॥

इति श्रीकुलशेखरसूक्त-दशमदशकानुसंहित-श्रीरामकथाविवरणात्मना
श्रीकाञ्ची-प्रतिवादिभयङ्कर अण्णङ्गरार्य विरचिता
श्रीरामायणदण्डककृतिस्समाप्ता ।

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ॥

श्रीमच्छठकोपयतिराजवरवरमुनिभ्यो नमः ।

श्रीमदण्णङ्गराचार्यसंस्कृत ग्रन्थमालायाम्

श्रीभक्तिसारदिव्यसूरिप्रणीत-तिरुच्चन्दविरुत्तसमाह्वय-दिव्यप्रबन्धविवर्तः

# ॥ श्रीभक्तिसारसूक्तम् ॥

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् । यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

[ लक्ष्मीनाथसमारम्भामित्यादि... श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ॥ ]

श्रीभक्तिसारसूक्तदिव्यप्रबन्धस्य मुखपद्ये द्वे ; तयोरादिमं पद्यम्— * तरुच्चन्दप्पोऴिल् तऴुवु *

( विवर्तः ) विविधवृक्षाभिरामोद्यानवनसनाथधरणिमण्डलनिवासिजनतादुःखशान्त्यै * तिरुच्चन्दविरुत्ताभिधानं द्राविडदिव्यप्रबन्धं प्रणीतवतो भक्तिसारसूरिवरस्यावतरणस्थली-सुगन्धिचन्दनमहीरुहादिपरिवृतत्वेन विलक्षणसौरभाढ्यम् श्रीमहालक्ष्म्याः सकुतूहलवासस्थानभूतं च श्रीमन्महीसारक्षेत्रवरम् ॥ [ वि. भगवदपेक्षयाऽपि भगवदधिष्ठित क्षेत्र विशेषाणामेव यथा ह्युद्देश्यतातिशयः तथैव दिव्यसूर्यपेक्षयाऽपि तदवतारस्थलस्यैवातिशयितमुद्देश्यत्वमिति द्योतयितुमिह श्रीभक्तिसारमुनीन्द्रस्तुतिं विहाय तदवतरणस्थलविशेषकीर्तनमुपनिबद्धम् । सूरिवरोऽसौ यथा परमभक्तिप्रकृष्टज्ञानानुष्ठानविशेषसंभृतसौरभः, तदा तदवतारस्थलमपि सौरभाढ्यमिति प्रकाशितमत्र ॥ ] ... ... (१)

२. अथ द्वितीयं मुखपद्यम्— उलहुमऴिशैयुमुळ्ळुणर्न्दु ॥

पद्यमिदं श्रीभक्तिसारमुनीन्द्रावतारस्थलस्य पुराणप्रथितसर्वातिशायिमहिमविशेषख्यापनपरम् । अनुपदमेव प्रकाशयिष्यमाणे श्रीभक्तिसारमुनीन्द्रवैभवे उपोद्घातरूपे प्रथमस्तम्भे यदुक्तम्, तदस्या एव गाथाया विवरणरूपमिति मन्तव्यम्; तदेवात्राप्यनुसन्धेयम् ॥ तुलाफलकतस्तोलनकाले त्रैलोक्यधारितुलाफलकादपि श्रीतिरुमऴिशैक्षेत्रधारि तुलाफलकमेव समुत्कृष्यतेस्मेत्युक्तमिह । एवं क्षेत्रप्रशंसनमपि क्षेत्रावतीर्णसूरिवरप्रशंसन एव पर्यवस्यति ॥ ... ... ... ... (२)

— इति मुखपद्य ( तनियन् ) विवृतिस्समाप्ता ॥ —

## अथ श्रीभक्तिसारमुनीन्द्र ( तिरुमलिशैयाल्वार ) वैभवम्

मकरे मासि मघर्क्षे भूसारक्षेत्रकलितजननस्य । श्रीभक्तिसारनाम्नो योगीन्द्रस्य प्रभावमभिदध्मः ॥

## उपोद्घातः ।

पुरा कदाचिदत्रिवसिष्ठभृगुभार्गवपुलस्त्याङ्गिरःप्रभृतयो ब्रह्मर्षयो बहवस्सत्यलोकमधिगत्य तत्र वैभवातिशयेन विराजमानं विरिञ्चं भगवन्तं प्रणिपत्य बद्धाञ्जलिपुटास्सन्त एवं व्यजिज्ञपन्—भगो ! भूलोके श्लाघ्यतमे क्वचन क्षेत्रविशेषे तपश्चर्यामनुतिष्ठासवो वयं तादृशं किमपि क्षेत्रं भवतस्सकाशादवगन्तुकामा इदानीमिह समुपस्थितास्स्मः : कृपया ब्रवीतु तत्रभवान् तादृशं क्षेत्रमवधार्येति । विज्ञापितश्चैवं विधाता भगवान् दयमानमनास्सन् देवशिल्पिनं विश्वकर्माणमाकार्य समादिशदित्थम्, पश्यतामेतेषां मुनिवराणां पुरतो दिव्यतुलादण्डिकां विन्यस्य तस्या एकस्मिन् फलके पञ्चाशत्कोटियोजनायतं कृत्स्नमपि भूमण्डलं निधाय अथापरस्मिन् फलके तिरुमलिशै नामकं पुण्यक्षेत्रमेव निक्षिप्य समुद्धर तुलाम्—इति । अवतंसितकमलासनशासनो विश्वकर्मा तथैव चक्रे । धृतकृत्स्नभूमण्डलकं फलकं लाघवादूर्ध्वस्थितम्, तिरुमलिशैक्षेत्रमात्रधारकं फलकमतिमात्रगौरवादवनतं च ददृशाते ।

अथ ब्रह्मदेवो ब्रह्मर्षीणां तेषामुत्कर्षमिममुद्बोध्य तदेव क्षेत्रं महीसारव्यपदेशभाजनमिति चोपपाद्य, तत्र गत्वा तपश्चरतेति प्रस्थापयामास तान् । ततः प्रस्थितास्ते महर्षयो महीमुपागत्य दक्षिणस्यां दिशि तुण्डीरमण्डले श्रीभूतपुरीकैरविणीक्षेत्रमध्यविद्योतमानं तदेव क्षेत्रमासाद्य जितेन्द्रियत्वादिनियमसनाथा अद्भुतं तपस्तेपिरे । तेषु च भार्गवनामा मुनिप्रवरो दीर्घसत्रनाम्नाऽनुष्ठितेन महाध्वरेण वासुदेवमाराध्य तदनु तमेव भगवन्तमुद्दिश्य घोरं तपस्तप्तुमुपाक्रंस्त । तादृशतपःप्रत्यूहसंपिपादयिषया निर्जराः प्राहिण्वन्नूर्वशीतिलोत्तमारम्भामेनकादीनप्सरोगणान् । ताश्च सुरसुन्दर्य इह समुपागत्य तपस्विनोऽस्य तपोनिष्ठां शिथिलयितुमुच्चावचान् प्रयत्नानाकलय्यापि हन्त वितथमनोरथाः प्रत्याववृतिरे । यदसौ भगवत्पादारविन्दयुगलैकनिषण्णनिभृतान्तरङ्ग आसीत् । ह्रिया भिया चाभिभूतासु तासु ललनासु यथागतं प्रतिनिवृत्तासु कनकाङ्गीनाम्नी काचिदपरा स्वर्वनिता निरतिशयवैदग्ध्यानिधिभूता सुदृढप्रतिज्ञमुपागता मुनिवरं समया, विष्णुमायेव विश्वव्यामोहनविचक्षणविपुलशक्तियुक्ता मन्मथवसन्तमृगाङ्कमलयपवनाद्यनेकसहायवर्गसमन्विता सरलसरससङ्गीतनर्तनादिप्रवर्तनपरा प्रायतत बहुमुखम् ।

बलवद्धि विधेर्बलम् । तत एव स तापसप्रवरो भगवद्ध्यानादपाकृष्य निजमन्तरंगं कनकाङ्ग्याः सङ्गीतसौवादवे समासज्य विस्फारितविलोचनस्तस्या अनुपमां सुषमामवलोक्य स्मरपरवशो योगं विसृज्य भोगप्रसक्तो विस्मृत्य स्वात्मानं कियन्तंचन कालमयापयन्मोहवागुराविवशः ।

कालेन च सा कनकाङ्गी समभूदन्तर्वत्नी । अथ मकरमासि मघानक्षत्रे गर्भपिण्डप्रादुर्भावस्समजनि भगवतो हरिराजस्यांशेशश्च तत्र संजघटे । अलक्षितावयवसंनिवेशं पिण्डाकृतिमात्रं तदुपेक्षमाणा सा मदिराक्षी संनिहिते क्वचन वेत्रगुल्मे समुत्सृज्य त्रिदशसमीहिता स्वर्ययौ । क्रमेण च प्रकृतिं गतः पश्चात्तापपरवशहृदयश्च भार्गवो मुनिवरोऽपसृत्यान्यत्र पुनरपि तपश्चर्यापरो बभूव । आस्तां नाम तत् ।

वेत्रगुल्मे विधूतेन च पिण्डेन परमसुन्दरपुरुषशिशुरूपेण परिणेमे क्रमशः । परिणतश्चायं दिव्यः शिशुः क्षुत्पिपासाभिभूतो विजने वने तत्र विलपन्नवर्तत । तस्मिन्नेव क्षेत्रे कृतसन्निधानो जगन्नाथो भगवान् सह श्रिया समेत्य निजेक्षणसुधासिन्धुवीचिविप्रुषीकरैः कारुण्यमारुतानीतैः शीतलैः शिशुमभिषिच्य स्वकीय दिव्यमङ्गलविग्रहसन्दर्शनसन्दानेन व्यपगतक्षुत्पिपासं च विरचय्य तिरोहितोऽभूत् ।

अथ भगवद्विश्लेषजविषादेन दुस्सहेनाभिभूतो दिव्यशिशुः पुनरपि रोदितुमुपचक्रमे ।

तदात्वे तत्र वेत्रलवनार्थमुपागतः कोऽपि श्रीनिधिर्नाम वेत्रजीवी शिशोर्विलपननिनदमाकर्ण्य सविधमभ्येत्य सर्वाङ्गसुन्दरमप्राकृतमिव विराजमानम् अवनावुदितमिव भास्करं भासमानं तमेनं शिशुमभिवीक्ष्य सन्तोषविस्मयसमाविष्टान्तरङ्गः परमकारुणिकेन भगवता प्रदत्त इवायमस्माकं कुमार इति निश्चिन्वानो हर्षप्रकर्षप्रफुल्लेन पाणिकमलेन तं परिगृह्य नीत्वा निजं भवनं पङ्कजवल्लीनाम्न्यै गृहिण्यै प्रादात् अनपत्ययोरावयोरहेतुकभगवत्प्रसादपरिपाकोऽयमिति किमपि किमपि कथयन् । सा च तं सादरं सप्रेमभरं स्वीकृत्य संवर्धयन्ती श्रीकृष्णकिशोरविषयकप्रेम्णा यशोदाया इव स्वस्यापि दैवात्स्रुतं स्तन्यं पाययितुं प्रावर्तिष्ट । स तु दिव्यशिशुः * वासुदेवस्सर्वमिति द्रढीयसाऽध्यवसायेन परिपूतात्मा स्तन्यमन्यच्चान्नपानादिकं तृणाय मन्वानो भगवद्गुणानुभवैकधारकः सांसारिकजनस्वभाववैदेशिको रोदनाक्रन्दनभाषणादिलोकव्यापाररहितो मलमूत्रादिविसर्जनविवर्जितश्च सन् अप्रतिमनिजदिव्यविग्रहतेजःपुञ्जनिर्धूततमश्छटो ववृधे ।

एवं नाम वर्धमानस्य भगवदनुभवामृतास्वादनैकजीवातोरस्य दिव्यमहापुरुषस्य विलक्षणं वैभवं विश्वतः पप्रथे । शृण्वन्तः पश्यन्तश्च विश्वे जना विस्मयसागरगाढावगाढमनसो बभूवुः । आकर्णिततादृशाप्रतिमप्रभावस्तद्देशवासी कोऽपि चतुर्थवर्णजो जरठो मुनिमिमं संसेव्य धन्यो बुभूषुः परमपवित्रं गोः क्षीरमुपायनमुपनयन् निजधर्मपत्न्या सह प्रभाते समुपस्थितः अपरस्यैव भौमस्य भास्करस्यास्य तेजःपुञ्जमसमाधिकमालोक्य विस्मयस्तिमितः स्वानीतं दुग्धभाजनं पुरतः समर्प्य परमकृपया पय इदं पेयं श्रीमतेति सप्रणयविनयं प्रार्थयामास । प्रार्थितश्च तथा भक्तिक्रीतोऽयं मुनिः प्रसन्नहृदयः पिबतिस्म तत् । अनपत्यतादुःखदूरीकरणकामिनौ तौ दम्पती अनुदिनमेवमन्वतिष्ठताम् । मुनिश्च तयोर्भवबन्धगरिमातुरक्तः पयस्तत्पिबन्नवर्तत । एकस्मिंस्तु दिने पीतशेषं पयः प्रददौ ताभ्यां दम्पतिभ्याम् ; तौ च तन्निपीय सद्यो विमुक्तजरौ समृद्धयौवनौ समिन्धानसुषमौ समभूताम् ।

अथ गते च कियतिचन काले परमभक्तिनिधिस्सा ललनाऽन्तर्वत्नी सती पुत्ररत्नं प्रासूत । कणिकृष्ण नाम्ना च स पुत्रः प्रथतेस्म । क्रमशोऽभिवृद्धमिमं कुमारं कदाचिन्मुनेरस्य सन्निधिं प्रापयामास जनकः । स चास्य शुभकटाक्षवीक्षणेन सम्पन्नदिव्यविमलविज्ञानः समधीतानेकसद्ग्रन्थश्च सन् भगवद्भागवतभक्तिसम्पत्समुज्ज्वलोऽभिववृधे ।

भार्गवसूनुर्मुनिवर एवं सप्तहायनावधि वेत्रजीविकुटुम्बे तिष्ठन्नथ अष्टाङ्गयोगेन भगवन्तमाराधयितुमासादयितुं च कामयमानः प्रस्थाय ततो नानादेशपर्यटनोत्सुको व्रजतिस्म । सर्वाभ्यधिकं परं वस्तु च विमृश्य निर्धारयितुमैहत । अत एव च लोकायतबौद्धादिष्ववैदिकेषु बाह्येषु समयेषु वैदिकेषु च कुदृष्टिमतेषु प्रविष्टस्तत्तन्मतसर्वस्वभूतनानानिबन्धनिध्याननिरतश्च सन् तदातदा तत्तन्मतानुरूपनामवहन्-कृत्याचरणादियुक्तो भूयसीश्च कृतीर्निर्मिमाणः क्रमेण बहूनि मतान्यतीत्य शैवमतमवजगाहे । प्रणिन्ये च शिवपरान् कानपि निबन्धान् । अवर्तिष्ट च परमशिवध्यानतत्परः । एवं गच्छति काले सरोभूतमहदाह्वयप्राथमिकमुनित्रये तार्तीयीको मुनिवरो महदाह्वयोऽत्र समागत्य विज्ञाय चास्य वृत्तान्तं, तमिमं सुशिक्षितं श्रीवैष्णवसम्प्रदायप्रवर्तनधुरन्धरतया स्वीकर्तुमिच्छन्, यत्रायं भार्गवसूनुर्मुनिर्वसति तत्रैवाग्रत आश्रममुपकल्प्य तत्र फलपुष्पद्रुमान्संपिपादयिषुरिव कांश्चन क्षुपान् अधोमुखान्निखाय सरन्ध्रान् घटान् प्रशिथिलां च दामानं परिगृह्य सलिलसेकसमुद्यत आसीत् । हन्त बत कोऽयं समुद्यमः । पामरैरपि परिहास्या खलु सेयं प्रवृत्तिः । क्षुपाणामधोमुखं निखननम् अथ सरन्ध्रघटग्रहणम् अथ च प्रशिथिलदामोपादानमिति सर्वमपहास्यं किल । एतादृशं चास्य कृत्यमवेक्षमाणो भार्गवात्मजमुनिरात्मन्यपहसन् तत्स विधं च समेत्य 'किं भो भवान् मत्तः किमुन्मत्तः' इत्याह । प्रत्याह च सः, नाहं मत्तो न चोन्मत्तः ; भवानेव सत्यं तादृश इति ।

प्रज्वलिते च किञ्चिदिव मिथो वाग्विवादे प्रत्यपादयत महदाह्वयो मुनिः "द्राघीयसा कालेन बहुषु मतेषु प्रविश्यापि परं तत्त्वमिदमिति परमार्थतोऽवधारयितुमशक्नुवन्नवसीदंश्च भवानेव हि मत्त उन्मत्तश्च; अखिलहेयप्रत्यनीककल्याणैकताने श्रीमन्नारायणे विराजमाने तमनाश्रित्य भिक्षौ सुराजम्भवमभिमन्यमानं भवन्तमृते नान्यं कमपि मत्तमुन्मत्तं वा पश्याम इति । प्रसङ्गात्प्रववृधे चोभयोः शैववैष्णववादकेलिः । पराजितश्च भार्गवमुनिः हा हन्त वृथैव सुमहान् कालो व्यतीत इति भृशमनुशयानस्सपदि विसृज्य शैवलक्ष्माणि तत्त्वोपदेष्टुस्तस्यैव महदाह्वयमुनेः पादारविन्दयुगलं प्रणिपत्य लब्ध्वा च वैष्णवदीक्षां निर्मलान्तःकरणो विपुलविष्णुभक्तिसंपदाढ्यस्समुल्ललास । समुज्जीव्य चैवमेनं महदाह्वयो मुनिर्दिव्यदेशसेवाहेवाकी व्रजतिस्मान्यतः । भार्गवमुनिश्च महीसारक्षेत्रमेवाधिगत्य योगनिष्णातो जगदेककन्दं मुकुन्दं निध्यायन्नवर्तत ।

तदात्वे च कदाचिदुमापतिरुक्षाणमारुह्य व्योमवर्त्मना गच्छन्नास्त । उमा तु भूमौ चक्षुषी विक्षिपन्ती महामुनेरस्य तेजसि विस्मिता प्राणनाथ! कोऽयमन्यादृशमहिमा महानिति प्रेयांसमनुयुयुजे । शिवश्च प्रत्यभाषत सोऽयं मद्भक्तिमपहाय नारायणभक्तिमूरीकृतवान् कश्चिदिति । नाथ! महतोऽस्मै आवामपि दर्शनं दत्त्वा वरमभीष्टमनुगृह्य गच्छेवेति गौरी समगिरत । ओमित्यभ्युपगम्य संनिदधे पार्वतीपतिः । मुनिस्तु तं समीक्ष्यापि अदर्शनमभिनयन् कामपि कन्थां तन्तुना सीव्यन् आन्यपर्यं प्राचीकशत । उपेक्षामिमां प्रजानन् शङ्करः 'महात्मन्! त्वामनुग्रहीतुमागते मयि अनादरप्रकाशनं किं नु सांप्रतम्' इति पप्रच्छ । योगिवरः प्रत्याह—भो यतो नास्ति भवता साधर्म्यं किमपि मम, तत एवास्म्युदासीन इति । अथापि गङ्गाधरो निरबध्नात 'योगिवरेण्य! वितथं माभून्मामकमिहागमनम्; अभीष्टं वरमपेक्ष्य लभस्व' इति । मुनिराह—यदि शक्नोषि वैकुण्ठमनुगृहाणेति । रुद्रः प्रत्याह—नाहं तत्प्रदानप्रभविष्णुः; नारायण एव तत्प्रदाता प्रसिद्धः । याचस्व वरमन्यमिति । अथ स्मयमानो मुनिरुवाच—तादृशीं मुक्तिं प्राप्तुमत्र भुवि सुचिरं योगमनुष्ठातुमायुर्मम द्राघिष्ठं विधेहीति । कैलासपतिः प्रत्यब्रूत—कर्मानुरोधिन आयुषो वर्धनं क्षपणं च न मय्यायतते; अन्यदपेक्षस्व इति । तदनु योगीन्द्रो मन्दस्मिताञ्चितमुखो नम्रशिराश्च सन् 'अयं तन्तुरिमां सूचीमनुसरत्विति वरं प्रदेहि' इति गर्हारूपमिव जगाद । तन्निशम्य ललाटनयनो हरो भृशं प्रकुपितः 'अतिमात्रमवलिप्तमिममधुनैव कुर्यामनङ्गसधर्माणम्' इत्यभिदधानो निजनिटिलादग्निमयं नयनमुदजीघटत् । ततस्समुत्थितां धूम्यां स्फुलिङ्गावर्ततिं च विलोकयन् भार्गवमुनिर्मनागप्यविह्वलो धैर्यसीम्नि तिष्ठन् निजदक्षिणचरणाङ्गुष्ठस्थितमक्षि समुद्घाटयामास । ततस्समुत्थितो महाग्निः कालाग्निमप्यधिक्षिपन्निव विसृत्वरो रौद्रमग्निमभिभूय प्रजज्वाल, तदा हरस्तमेनमनलमुपशमयितुकामः स्वकीयकपर्दस्थितान् भूयसः पर्जन्यान् प्राचूचुदत । ते च संवर्तसमयजीमूतनिर्विशेषं घोरवृष्टिमुदपादयन् । ततोऽप्यचकितोऽप्रचलितश्च मुनिवरो भगवद्भक्तावेव गाढावगाढ आसीत । अवलोक्य तादृशीं स्थितिमम्बिकापतिरतिविस्मयविवशमानसो 'भक्तिसार' इति संज्ञामस्य प्रख्यापयन् विशेषतोऽभिनन्द्य चास्य वैभवं प्रययौ स्वमावसथम् ।

अथ भक्तिसारो मुनिवरो यथापूर्वमवजगाहे योगम् । तदात्वे शुक्तिहारनामा कोऽपि सिद्धः स्वसामर्थ्यभूम्ना शार्दूलमेकमपहतावलेपमाकलय्य वाहनीकुर्वन् व्योमवर्त्मना पर्यटन्नास्त । स च व्याघ्रो भक्तिसारमुनेरस्य योगमहिम्ना प्रतिरुद्धगतिरतिक्रम्य गन्तुमशक्नुवन् स्थगितगतिरवतस्थे । किमत्र कारणमिति परामृशन् स सिद्धः पृथिवीतले परितश्च निरीक्ष्य योगिप्रवरमेनं निशाम्य वाहनादवतीर्य सन्निधानमस्य समुपेत्य शक्तिमदसीयां शोधयितुकामः "भगवन् मुनिसार्वभौम! स्वभृतामिमां कन्थामुत्सृज्य स्वीकरोतु भवानिदं मया प्रदीयमानं पीताम्बर" मिति प्रकथयन् प्रशस्ततरं कौशेयं सपदि सृष्ट्वा प्रदिदर्शत्स्म । मुनिस्तु तद्वसनं तिरस्कृत्य स्वसङ्कल्पमात्रेण माणिक्यमयं दिव्यं वासो निर्माय प्रादर्शयत । सहसादस्य

र्चसस्तस्य वाससो विलोकनेन व्रीडितस्सिद्धः स्वकीयकण्ठावलम्बिनीं कांचन मणिमालामुद्धृत्य भगवन् ! जपमालामिमां स्वीकुरुतादिति प्रदातुमाययौ। तदा भक्तिसार आत्मीयकण्ठावलम्बिनीं तुलसीनलिनाक्षमालामुद्धृत्य प्रादर्शयत। सा तु सिद्धेन ददृशे निस्समाभ्यधिकनवरत्नमालिका। अथ चातिमात्रमपत्रपितस्स मुनिवरं मुहुः प्रदक्षिणीकृत्य प्रणिपत्याभिष्टूय सिद्धसार्वभौमस्तत्रभवानिति प्रशस्य पथाऽन्येन प्रययौ।

भक्तिसारस्य प्रभावभूमा दिक्षु विदिक्षु च विशेषतः पप्रथे। कोङ्कणसिद्धो नाम कोऽपि रसवादी ससंभ्रमं तत्रागत्य रसगुलिकामेकां प्रदर्श्य तत्प्रभावमप्रमेयमुपवर्ण्य गृहाण तावदिमामित्यवोचत्। भक्तिसारस्तु तामवधीर्य स्वदिव्यमङ्गलविग्रहरजांस्युपादाय गुलिकीकृत्य 'अपरिमितसुवर्णप्रसवित्रीमिमां गुलिकां प्रतिगृह्य जीवतु भवान्' इत्यभिधाय तां तस्मै प्रायच्छत्। स च तां परिशोध्य सूनृतवादिता मुनिवरस्य विज्ञाय विस्मितः प्रणम्य निश्चक्राम।

अथ भक्तिसारोऽन्यत्र कुत्रचिद्गत्वा कस्यचन गिरेर्गह्वरे निषद्य योगनिरत एवासीत्। दिव्यदेशयात्रावशात्तत्र समुपागताः सरोभूतमहदाह्वया आद्यास्त्रयो योगिवरा अन्तस्स्थितस्यापि भक्तिसारस्य बलीयसा दिव्यतेजसा समाकृष्टा अन्तः प्रविश्य कुशलानुयोगमारचय्य तत्रैव कियन्तंचन कालं भगवद्गुणानुभवसक्तचित्ता आसत। तत्र चतुर्णामेतेषां समवायो ज्ञानभक्तिविरक्तिशान्तियोग इव सुशोभनस्संददृशे। अतीते चैवं कियतिचन काले चत्वारोऽपि ( महदाह्वययोगिजन्मभूमिं ) महिलापुरीमुपगम्य तत्र कैरवतीर्थतीरेचिरं योगप्रवणा अवर्तन्त। अथ आद्यास्त्रयो योगिनो भूमिसञ्चरणाय प्रातिष्ठन्त।

अथ भक्तिसारो मुनिवरो महीसारक्षेत्रमात्मीयमागत्य निवसंस्तत्र नित्यश ऊर्ध्वपुण्ड्रधारणौपयिकीं श्वेतमृत्तिकां संप्रतिपन्ने स्थाने अलभमानो व्यामुग्ध इवावतस्थे। अथ श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः परः पुमान् स्वप्नेऽस्य दत्तसंदर्शनः 'काञ्च्यां श्रीवेगासेतुभगवन्मन्दिरपार्श्ववर्तिनि सरोवरे लभस्व श्वेतमृत्स्नाम्' इत्यनुजग्राह। अनुगृहीतश्चैवं भक्तिसारो हर्षप्रकर्षफुल्लान्तरङ्गः प्रस्थाय काञ्चीक्षेत्रमनुप्राप्य तस्यामेव सरस्यां श्वेतमृदमुपलभ्य तत्रैव वेगासेतोर्भगवतो मन्दिरे कलितावासस्तमेव भगवन्तं नित्यमासेवमानस्सुचिरं तत्र निवसतिस्म।

पूर्वमदसीयेनैव प्रसादेन समुत्पन्नः कणिकृष्णस्तदात्वे तत्र समुपागतः स्वाचार्यस्य भक्तिसारमुनेर्विविधाः परिचर्या विरचयन् उपादानेन देहयात्रां निर्वहन्नवर्तत। तदानीं पलितचिकुरा पतितदशना च काचन जरठा भक्तिसारपादारविन्दपरिसरं प्रतिपन्ना परमभक्तियुक्ता सती संमार्जनगोमयानुलेपनरङ्गवल्लीविन्यसनादिकैङ्कर्यप्रवणाऽऽसीत। सा च कदाचित्प्रभाते मुनिवरस्य पादाब्जे प्रणिपत्य अविकलं यौवनं वरलाभं लब्ध्वा स्वर्वनितेव स्पृहणीयसौन्दर्यसारनिधिरुल्ललास। तन्नगराधिनाथः पल्लवराजः कदाचिदेनामवलोक्य कामयमानः सुबहून्यनर्घाणि वसनभूषणानि वितीर्य विवाह्य तां प्रधानमहिषीपदं निधाय नन्दतिस्म।

गच्छति चैवं काले, तस्या निरपायं नित्यनिरवद्यं यौवनं स्वस्य च क्रमशो जायमानां जरातुरतां च वीक्ष्य दूयमानमनाः प्रभुः किमत्र कारणमिति जिज्ञासया तामेव पप्रच्छ कथं नु भवती नित्यानपाययौवना विराजत इति। सा चाब्रवीद्भक्तिसारमुनेर्वरप्रसादत इति। अथ स्वयमपि तादृशवरप्रसादं प्रेप्सन् परिबृढस्तदर्थं तामेवानुनयतिस्म। सा च समगिरत—अनुदिनमुपादानार्थमस्माकं भवनमागच्छन् कणिकृष्णनामा भिक्षुकस्तस्यैव मुनेः प्रेयाननुचरः; तमेव घटकं कृत्वा मुनिवरमनुवर्तसे यदि समीहितं सिध्येदिति। सदुपायोऽयमिति संमन्यमानस्सम्राट् परेद्यवि यथायथं कणिकृष्णमागतं प्रणिपत्य सविनयमूचे 'भवदीयमाचार्यं सेवितुमिच्छाम्यहम्, अतस्तमत्र समानयतु तत्रभवान्' इति। प्रतिबभाषे कणिकृष्णः 'तृणीकृतवि-

रिश्वादिनिरङ्कुशविभूतिरस्मदाचार्यः स्वाश्रमादन्यत्र कुत्रापि नोपगन्ता ' इति। ततो राजा ययाचे 'भगवन्! मामेवाचार्यसकाशमुपगमय्य नित्ययौवनवरप्रसादलम्भनेनानुगृहाण ' इति। कणिकृष्णः कथयतिस्म ' त्वादृशानैहिकभोगमात्रकामुकान् पामरानस्मदाचार्यश्चक्षुषाऽपि नेक्षितुं क्षमः; यद्विजहीहि वितथकामनाम् ' इति।

तन्निशम्य व्यथाविक्लबो नरपतिरतिमात्रचिन्तार्णवनिमग्नमना इतिकर्तव्यतामुग्धोऽवतस्थे। तथाविधमेनं समाश्वासयितुकामास्सचिवास्समुपेत्य ' सार्वभौम! विमुञ्च वृथा विचारम्; कणिकृष्णोऽपि दिव्याचिन्त्यमहाद्भुतोत्तमशक्तियुक्त इति प्रथते; अमृतवागेष कविवरो यथा यथा कवयति तथा तथा संपद्यन्ते सुबहून्यद्भुतानीति विश्वप्रसिद्धमिदम्; अतश्चामुमेव साक्षादभ्यर्थयस्व; तेनोपश्लोकितस्त्वं सिद्धकामनो भविताऽसि ' इति अथ कथञ्चिदधिगताश्वासो भूपतिरपरेद्युरागतं कणिकृष्णं सप्रश्रयमयाचत स्वात्मानमनपाययौवनमुपश्लोकयितुम्। नारायणैकस्तोताऽहं नरस्तोता न कदाऽपि भवेयमिति प्रत्याचचक्षे कणिकृष्णः अथापि सम्राडतीव निर्बबन्ध। निर्बद्धोऽयं महान् द्राविड्या गिरा भगवद्विषयिणीं नरस्तुतिविरक्तिसूचिनीं च कामपि गाथां कवयामास कथयामास च। ततश्च प्रकुपितः प्रभुः 'नेतः परं त्वमस्मिन्नगरे निवस्तुमर्हसि; क्षिप्रमन्यतो निष्क्रामतात ' इति शास्तिस्म।

तदनु कणिकृष्ण आचार्यपादपादारविन्दपरिसरं प्रतिपद्य प्रवृत्तमुदन्तं विज्ञाप्य देशादस्मान्निष्क्रमिष्यन्तमिमं जनमभ्यनुजानन्तु गुरुचरणा इति प्रार्थयत। ' तर्हि त्वामृते किमत्राहं करिष्यामि; अहमपि भगवस्सनाथस्त्वामेवानुसरेयम् ' इति निगद्य, भक्तिकीर्तिं भक्तवत्सलं भगवन्तमुत्थापयितुमन्तर्गत्वा,

> "कणिकृष्ण इमां नगरीं विजहत् कुहचिद्गमनं ननु कामयते।
> तमनुव्रजतो मम भो भगवन् फणितल्पयुतोऽनुचरो भवतात्॥"

इति [ द्राविडगाथया ] व्यजिज्ञपद्भक्तिसारो महामुनिः। यथोक्तकारीति व्यपदेशं प्रेप्सुस्स भक्तपराधीनो भगवान् तस्मिन्नेव क्षणे स्वकं फणिपुङ्गवतल्पं समुत्थाप्य विहाय योगनिद्राम् अतीत्य चार्चावतारसमाधिं स्वयमपि प्रतस्थे। त्रयोऽप्यमी यदा तस्मान्नगरान्निश्चक्रमुस्तदैव तत्र मंदिरान्तरेषु विराजमाना अपि भगवन्तः स्वं स्वं तेजोऽन्तर्हितमकार्षुः। अथ कृत्स्नाऽपि काञ्चीपुरी विलीनप्रभा विवृद्धतमश्छटा विवस्वतोऽपि प्रभामनुद्वहन्ती कालरात्रिकल्पाऽभवत। ईदृश्या दुरवस्थाया निदानं विजानन् महीपतिरतीव विह्वलस्सहामात्यस्सद्यः प्रस्थाय प्रयासतः कणिकृष्णाद्यवस्थितिस्थलमभ्येत्य स्वापराधं क्षन्तुमर्थयतेस्म। अथ प्रसन्नचेताः कणिकृष्णो भक्तिसारमुनेस्सविधे व्यजिज्ञपत्प्रतिनिवृत्तिरुचितेति। मुनिवरश्च तथेत्युररीकृत्य, भगवन्तं स्वानुचरं प्रणम्य,

> "कणिकृष्ण इतो विरतो गमनात् पुनरेव पुरीं प्रतियाति हरे।
> तमनुव्रजतैव मया सहितः पुनरेत्य पुरीमधिशेष्व सुखम्॥"

इति [ द्राविडगाथया ] प्रार्थयत। सर्वथा भक्तविधेयो भगवानथ यथास्थानमुपागतः फणिनमधिशिश्ये, भक्तवरौ च यथायथमाजग्मतुः। राजसचिवादयश्च प्रहृष्टचेतसो बभूवुः। ततः प्रभृति स वेगासेतुभगवान् यथोक्तकारीति व्यपदिदिशे, यतो हि भक्तपरवशो यथोक्तमकुरुत। काञ्ची च हततमस्काण्डा प्रचकाशे। विज्ञातभक्तप्रभावो राजा च मदान्धतां विहाय मुनिशिष्यतां प्रतिपेदे।

अथ मुनिवरेण्यः श्रीकुम्भघोणक्षेत्रमभिजिगमिषुः प्रस्थितो व्रजन् पथि महाव्याघ्रपुरीति प्रसिद्धेऽग्रहारे कस्यचन द्विजन्मनो गृहद्वारवितर्दिकायां विश्राम्यन्निव निषसाद। भस्मच्छन्नस्येव जातवेदसोऽस्य मुनेः प्रभावमजानानास्तत्रत्या वेदाध्ययननिरता विप्राः ' जघन्यजातीयोऽयं वेदवाक्यश्रवणानर्हः ' इति

मन्वाना विरेमुर्वेदपाठात् तेषामभिसन्धिमवगच्छन्मुनिवरस्ततस्समुत्थायान्यतः प्रययौ। अथ यथाक्रमं पुनराम्नायमध्येतुमारिप्सवस्ते कतमं वाक्यमारम्भणीयमिति भृशं विचिन्तनेनाप्यप्रतिपद्यमाना श्रमविह्वला इव जोषमासत। हा हन्त किमत्र कारणमिति मिथो विचारयन्तस्ते 'अत्रागते परमभागवते या विप्रतिपत्तिरुदैदस्माकं सैव महापचारः, तत्फलमेवैतत्' इत्यवधारयन्तस्ततस्तं मुनिवरमनुवर्तमानाः क्षान्तिमार्थयन्त। स च तत्र वीथ्यां शोषणाय प्रकीर्णेषु कृष्णव्रीहिकदम्बकेषु कतिचन व्रीहीरुद्धृत्य नखतो निर्भिद्य चिक्षेप। सद्य एव ते श्रोत्रियास्तादृशक्रियार्थकं वेदवाक्यं स्मरन्तस्तदेव स्वेषामध्ययने प्रारम्भणीयमिति च प्रतिपन्नाः * कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणेत्यादिवाक्यमुपाक्रंसत। [ तदिदं वाक्यं तैत्तिरीययजुस्संहितायां प्रथमकाण्डे अष्टमे प्रपाठके, तैत्तिरीययजुर्ब्राह्मणे प्रथमाष्टकसप्तमप्रपाठके च श्रूयते। ] अथ ते श्रोत्रिया अप्रतिमप्रभावोऽयमृषिसार्वभौम इति निश्चिन्वानाः प्रदक्षिणप्रणामादिभिस्तमिमं सत्कृत्य कृतकृत्या अभूवन्।

तत्रैवाग्रहारे अन्ये केचिदग्रजजन्मानो महान्तः क्रमयि यज्ञमनुतिष्ठन्त आसन्। भक्तिसारमुनेरप्रतिम प्रभावमगतवन्तः कतिपये महनीयास्तमिमं यज्ञस्थलीं प्रापय्य बहुमानयितुं दीक्षिताय सूचनामदुः। सोऽपि सद्यस्ससंतोषमुपसृत्य सविनयं प्रार्थ्य भक्तिसारमध्वरशालामुपगमय्य सादरभरमग्रिमपूजामकार्षीत्। पुरा धर्मसूनुनाऽनुष्ठिते राजसूयाध्वरे सत्कृतं नन्दनन्दनं भगवन्तमधिकृत्य परुषपरुषरूक्षाक्षराणि प्रयुक्तवतः शिशुपालस्य सोदरा अत्रापि केचिदासन्निव; तत्तादृशा असूयवस्सपदि सुबहूनि कर्णकठोराणि परुषभाषितानि प्रायुञ्जत। तन्निशमनेन क्षुभितहृदयो दीक्षितो भक्तिसारपादपद्ममूले प्रणिपतन् प्रार्थयतेस्म—भगवन्निमान् पापिनो ध्वस्तावलेपानाकलयतु क्षिप्रं तत्रभवानिति। ओमित्यङ्गीकृतवान् परमकारुणिको भक्तिसारयोगीन्द्रः—

असूयावशानाममीषां च दर्पं समूलं निहन्तुं हरे चक्रपाणे।
यथा वर्तसे मे मनोन्तस्तथैव प्रकाशीभव क्षिप्रमाश्चर्यशक्ते॥

इति [ द्राविडगाथया ) स्वान्तर्यामिणं सर्वस्वामिनमच्युतमभ्यर्थयतेस्म। अर्थिकल्पक आपत्सखो भगवान् भोगिभोगशयनीयशायिनमात्मीयमतिमानुषमप्रमेयं दिव्यमङ्गलविग्रहं पद्माधात्रीव रकमलपरिचरितचरणयुगलं महामनेरस्य दिव्ये वपुषि सर्वसाक्षात्कारयोग्यमाविश्चकार तूर्णमव्याजकृपया। सर्वेऽपि साधु संसेव्य मन्दतरमोदभरितमानसा विस्मयविवशाश्च मुनिवरस्य पादारविन्दयोः प्रणिपतन्तः क्षमां प्रार्थ्य तदीयनिरवग्रहानुग्रहभाजनभूतास्तत्त्वोपदेशं च लब्ध्वोदजीवन्।

अथ योगीन्द्रः * कुम्भघोणक्षेत्रमधिगत्य तत्र फणिनमधिशयानं परमं पूरुषमासेवमानः काञ्च्यां यथोक्तकारिभगवत इवात्रापि शार्ङ्गपाणेरपर्याप्तामृतभगवतो भक्तवात्सल्यभूमानमन्वभवत। तथा हि—

त्रिविक्रमावतारकालसंभवश्रमान्नु किं महावराहमूर्तिभाक्कलिकश्रमान्नु किम्।
मरुद्वृधाटऽत्र दिव्यकुम्भघोणपत्तने शयान एव वर्तसे! समुत्थितोऽद्य संलप॥

इति [ द्राविडगाथया ] प्रार्थयमाने भक्तिसारे, अर्चावतारमपि विभवावतारपर्यायमाकलयन्निव सोऽयमपर्याप्तामृतभगवान् यथाप्रार्थनं सद्यस्समुत्थातुमैहत; तदवलोक्य मुनिसार्वभौमो " जयतु जयतिवदमाश्रितसौलभ्यमत्रभवत " इति मङ्गलाशासनेन भगवन्तं शयनोन्मुखमेव व्यदधात्। अत एव स भगवानद्यापि सर्वैरुत्थानशायी संसेव्यते ।

तमेवापर्याप्तामृतदिव्यमङ्गलविग्रहमनुध्यायन् तत्रैव चिरं योगे मनो युञ्जान आस्त मुनिप्रवरः । एवं सप्तशताधिकचतुस्सहस्रसंवत्सरावधि भूतले तस्थिवानेष भक्तिसारो योगिवरो भक्तसमुज्जीवनकामनया " नान्मुकन्तिरुवन्दादि, तिरुच्चन्दविरुत्तम् " इत्याम्नातं दिव्यप्रबन्धद्वितयं च द्राविडभाषयाऽनुगृह्य तत्रैव क्षेत्रो दिव्यं धाम प्रपेदे ॥

इति भक्तिसारमुनिवर्यसत्कथाम् अतिमात्रभक्तिभरवर्धनक्षमाम् ।
इह ये पठन्ति कथयन्ति भावयन्त्यथ ते भजन्ति दिवि योग्यसत्क्रियाः ॥

॥ इति श्रीभक्तिसारमुनिवैभवं समाप्तम् ॥

श्रीपराङ्कुशपरकालश्रीभक्तिसारमहायोगियतिवर वरवरमुनीन्द्रेभ्यो नमः ॥

श्रीकाञ्ची प्रतिवादिभयङ्कर—जगदाचार्यसिंहासनाधीश—अण्णङ्गराचार्यप्रणीत

संस्कृतविवर्तसमेतः

# ॥ तिरुच्चन्दविरुत्तदिव्यप्रबन्धः ॥

## श्रीभक्तिसारयोगीन्द्रैरनुगृहीतः ॥

——:०:——

( व्याख्यानावतारिका ) श्रीभक्तिसारयोगीन्द्रानुगृहीते दिव्यप्रबन्धद्वितये द्वितीयोऽयं प्रबन्धः तिरुच्चन्दविरुत्तनामा । प्राथमिकः प्रबन्धस्तु नान्मुकन्तिरुवन्दादिनामकः; स तु * इयर्पासमाख्ये तृतीयसहस्रे चतुर्थप्रबन्धत्वेन परिगणितः । एष तावत प्रथमसहस्रे षष्ठप्रबन्धत्वेन परिगण्यते । प्रथमादि पञ्चमान्ताः प्रबन्धास्तु—तिरुप्पल्लाण्डु, पेरियाळ्वार्तिरुमोळि, तिरुप्पावै, नाच्चियार्तिरुमोळि, पेरुमाळ् तिरुमोळि—इत्येते; तेऽमी संस्कृतवाण्या विवर्तिता अभूवन् । अधुना तिरुच्चन्दविरुत्तसमाख्य एष प्रबन्धो विवर्त्यते विव्रियते चावश्यकस्थलेषु ।

दिव्यप्रबन्धस्यास्य तिरुच्चन्दविरुत्तमिति संज्ञा केन हेतुना प्रथितेति चेदुच्यते । संस्कृतभाषायां यथा स्रग्धरा, शार्दूलविक्रीडितम्, वसन्ततिलकम् इत्यादिनामभिः प्रथितानि सन्ति वृत्तानि, तथा द्राविड्यामपि आशिरियविरुत्तम्, कलिविरुत्तम् इत्यादिनामभिः प्रथितानि सन्ति तानि । सोऽयं प्रबन्धः छन्दवृत्तसमाह्वय-वृत्तविशेषग्रथित इति हेतुना उपचारार्थक 'तिरु' शब्दपुरस्कृतस्सन् तिरुच्चन्दविरुत्तमिति व्यपदेशमाश्रित । श्रीशठकोपमुनीन्द्रप्रणीतेषु दिव्यप्रबन्धेषु द्वैतीयीकः प्रबन्धो यथा * तिरुवाशिरियमिति व्यवह्रियते तथा ह्येतत । द्राविडसंकेतरीत्या अत्र वक्तव्यं बहुलमस्ति नाम; अनावश्यकताधिया तदुपेक्ष्यतेऽत्र । द्राविड्याम् आशिरियवृत्तमितिवत छन्दवृत्तमिति प्रत्येकशः किमपि वृत्तं नास्ति; आशिरियवृत्तविशेष एवैषः; कर्ण-श्राव्यतातिशययुक्तश्छन्दोबन्धः छन्दवृत्तमित्यभिधीयत इति परमार्थः । इतरप्रबन्धापेक्षया प्रबन्धस्यास्य कर्णश्राव्यतातिशयस्तावदध्यापकगोष्ठ्यामनुभवैकवेद्यः ।

तत्त्वार्थप्रतिपादनपरेषु प्रबन्धेषु प्राथम्यमाधिवहति सोऽयं दिव्यप्रबन्धः । संश्लेषविश्लेषप्रकाशन-दूतप्रेषणादिरूपा वाग्विन्यासा अस्मिन् प्रबन्धे नैवावकाशमलभन्त । अतिगहनवेदान्तार्थतत्त्वानामाविष्करणमेवात्र प्राधान्येन क्रियत इति प्रतिपत्तव्यम् । देवतान्तराणामवरत्वप्रतिपादने परदेवतापारमार्थ्यप्रकाशने च दिव्सूरि-वरस्यास्य गरीयसी श्रद्धा प्रथिता; सैव अदसीयदिव्यप्रबन्धद्वितयेऽपि विशेषतः प्रकाशते । किञ्च भगवतः श्रीमतो नारायणस्य सर्वान्तर्यामित्वानुसन्धाने विशेषतस्समिन्धानोऽस्य दिव्यसूरेरुत्साह एतस्मिन्दिव्य-प्रबन्धे प्रचुरतमः । भगवतो दिव्यात्मस्वरूपम् ज्ञानशक्तिमुखाननन्तसद्गुणगणान् तत्परीवाहरूपान् विविध-धानवतारान् अवतारचेष्टितानि दिव्यमङ्गलविग्रहम् दिव्यभूषणदिव्यायुधयोगम् दिव्यमहिषीजनसम-न्वयम् परिजनपरिबर्हवैशिष्टयमन्यदन्यच्च साक्षात्कृत्यानुभूय तादृशानुभवपरीवाहात्मना प्रादुर्भावित एष दिव्यप्रबन्धः सर्वातिशायीति तदिदमनुभवैकवेद्यम् ॥ ... ... *

( अवतारिकान्तरम् ) कर्णश्राव्यं छन्दोबन्धविशेषं द्राविडाः कथयन्ति शन्दविरुत्तमिति संस्कृत-भाषायामपि कतिपयवृत्तविशेषनिबद्धानि पद्यानि विशिष्य कर्णश्राव्यानि भवन्तीत्यनुभवरसिका विदन्ति * लघुर्गुरुर्निरन्तरं यदा स पञ्चचामरः * इत्युक्तलक्षणकपञ्चचामरवृत्तग्रथितानां पद्यानां श्रवणकाले विल-

त्मणो ह्यानन्दो वोभवीति जगतः । तथाविधपञ्चचामरसधर्मा वृत्तविशेष एव द्राविड्यां शन्दविरुत्तमिति व्यवह्रियते; वृत्तविशेषेणापि ग्रन्थनामविन्यसनं दृष्टम् ।

एतत्प्रबन्धप्रणेता भक्तिसारमुनीन्द्रो नानादर्शनेषु प्रविश्य सकलदर्शनसारतत्त्वविदामग्रणीरासीदिति, अन्ततो नारायणपरत्वनिर्धारणेन सुरभिहृदय आसीदिति, नारायणपरत्वप्रतिपादन एकस्मिन्नेव असाधारणवैयग्रीविभूषितहृदयश्चेति सुप्रसिद्धमेतत् । ततश्च अदसीय दिव्यप्रबन्धद्वितयमपि श्रीमन्नारायणपरत्वप्रतिपादने विशेषतः प्रावण्यशालि वेदितव्यम् । नान्मुहन्तिरुवन्दादिनामा दिव्यप्रबन्धः प्राथमिकः; एष तु दिव्यप्रबन्धो द्वैतीयीकः । भगवतः स्वरूपरूपगुणविभूतीनां यथायथं प्रतिपादने प्रावीण्यशाली सोऽयं सूरिवर एतस्मिन्दिव्यप्रबन्धे भगवत्स्वरूपादिकमातततरां वैलक्षण्येन प्रतिपादयति । परव्यूहविभवान्तर्याम्यर्चारूपेण पञ्चधाऽवस्थितस्य भगवतोऽर्चावतारे प्रावण्यं सर्वेषामपि दिव्यसूरीणां समानम्; सूरिवरस्यास्य तु अन्तर्यामिरूपे विशिष्य प्रावण्यं प्रथते; तच्च दिव्यप्रबन्धेऽस्मिन् बह्वीषु गाथासु विशदं भवति ॥ इत्यवतारिका ॥ ... ... *

## ❋ अथ प्रबन्धोपक्रमः ❋

—— x ——

१. ( पूनिलायवैन्दुमाय्. ) भो भगवन् ! पृथिवीनिष्ठगन्धादिगुणपञ्चकात्मकम्, सलिलनिष्ठरसादिगुणचतुष्टयात्मकम्, तेजोनिष्ठरूपादिगुणत्रितयात्मकम्, वायुनिष्ठस्पर्शशब्दोभयात्मकम्, व्योमनिष्ठशब्दगुणात्मकम् परस्परविलक्षणादेवादिपदार्थान्तरात्मानं च त्वां स्वप्रयत्नेन को वा विचिन्त्य विज्ञातुं प्रभवति ॥ [ विवरणम्;—भगवतो भूतपञ्चकान्तरात्मतयाऽवस्थितिरनुसन्धीयते गाथयाऽनया । यद्यपि पृथिव्या गन्धगुणकत्वम् अपां रसगुणकत्वम् अग्नेः रूपगुणकत्वम् वायोः स्पर्शगुणकत्वम् आकाशस्य शब्दगुणकत्वं च प्रथते शास्त्रविदां व्यवहारे, तथाऽप्यत्र पृथिव्या ; पञ्चगुणाश्रयत्वम् अपां गुणचतुष्टयाश्रयत्वम् अपां गुणचतुष्टयाश्रयत्वम् अग्नेः गुणत्रितयाश्रयत्वम् वायोः गुणद्वितयाश्रयत्वं चाभिधीयते; तदिदं कथमितिचेदवधेयम्; * कारणगुणाः कार्ये संक्रामन्तीतिन्यायात् इदमभिधीयते । तैत्तिरीयोपनिषदि ' आकाशाद्वायुः, वायोरग्निः, अग्नेराप, अद्भ्यः पृथिवी ' इत्याम्नायते; आकाशाद्वायोरुत्पत्तिः, वायोस्तेजस उत्पत्तिः, तेजसोऽपामुत्पत्तिः; अद्भ्यः पृथिव्या उत्पत्तिरिति एष क्रमोऽत्राभिहितः । आकाशस्तावत् शब्दगुणकोऽवतिष्ठते; आकाशादुत्पद्यमानो वायुः स्वकीयगुणभूतस्पर्शेन सह स्वकारणगुणं शब्दमपि बिभर्तीति तस्य गुणद्वयाश्रयत्वमुपपन्नम् । अथ वायोरुत्पद्यमानं तेजः स्वकीयगुणभूतरूपेण सह स्वकारणभूतवायुनिष्ठगुणद्वितयमपि बिभर्तीति तस्य गुणत्रितयाश्रयत्वमुपपन्नम् । अथ तेजस उत्पद्यमानं सलिलं स्वकीयगुणभूतरसेन सह स्वकारणभूततेजोनिष्ठगुणत्रितयमपि बिभर्तीति तस्य गुणचतुष्टयाश्रयत्वमुपपन्नम् । अथ च सलिलादुत्पद्यमाना पृथिवी स्वकीयगुणभूतगन्धेन सह स्वकारणभूतसलिलनिष्ठगुणचतुष्टयमपि बिभर्तीति तस्या गुणपञ्चकाश्रयत्वमुपपन्नम् । यद्यपि तन्मात्रात्तन्मात्रोत्पत्तिः, भूतात्तन्मात्रोत्पत्तिरित्येवं प्रकारान्तराण्यपि सन्ति ; अथ च पञ्चीकरणप्रक्रियया पञ्चस्वपि भूतेषु पञ्चानामपि गुणानां न्यूनातिरिक्तभावेन सद्भावप्रकारश्चास्ति, तथाऽपि * आकाशाद्वायुरित्युदाहृतश्रुतिच्छायया अत्रानुगृहीतमिति वेदितव्यम् सैषा । प्रक्रिया श्रीविष्णुपुराणेऽपि प्रथमांशे द्वितीयाध्याये (५०) * आकाशवायुतेजांसि सलिलं पृथिवी तथा । शब्दादिभिर्गुणैर्ब्रह्मन् ! संयुतान्युत्तरोत्तरैः ॥ * इत्यस्मिन् श्लोके प्रथिता ।

( १ ) भूम्यां शब्दस्पर्शरूपरसगन्धाः । ( २ ) अप्सु शब्दस्पर्शरूपरसाः । ( ३ ) तेजसि शब्दस्पर्शरूपाणि । ( ४ ) वायौ शब्दस्पर्शौ । ( ५ ) आकाशे शब्द एकः । इत्युक्तं भवति । नन्वस्तु नामैवम् ; इदा-

नीमत्रैतदभिधानं किमर्थमिति चेत्; भूतानामिव भूतगुणानामपि भगवानेव नियामक इति कथनमुखेन कश्चन प्रभावातिशयो भगवतः प्रपञ्चितो भवतीति वेदितव्यम् ॥ ... ... (१)

२. ( आरुमारुमारुमाय् ) अध्ययनाध्यापनादिषट्कर्मनिर्वाहक ! पूर्वोक्तकर्मानुष्ठानौपयिक-वसन्तादिषड्तुनिर्वाहक ! आग्नेयादियज्ञषट्कसमाराध्य ! पञ्चमहायज्ञाराध्य ! पञ्चाहुतिसमाराध्य ! गार्ह-पत्यादिपञ्चाग्निशरीरक ! अतिशयितज्ञानविरक्तिरूपद्वितयानुग्राहक ! परभक्तिपरज्ञानपरमभक्तिरूपत्रितय-प्रदायक ! विवेकादिसप्तकनिर्वाहक ! ज्ञानशक्त्यादिषाड्गुण्यघन ! अपहतपाप्मत्वादिगुणाष्टकप्रचुर ! बाह्य-कुदृष्ट्यादिनानासमयप्रवर्तक ! यथार्थज्ञानिनां यथार्थभूत ! अयथार्थज्ञानिनामयथार्थभूत ! स्पर्शशब्दादि-विषयपञ्चकप्रवर्तक ! गोपालसजातीयतयाऽवतीर्ण भगवन् ! [ के वा भवन्तं परिच्छेत्तुं प्रभवन्ति ? सत्यम-परिच्छेद्यभूमाऽसि । ] विवरणम्—मूले तावत् प्रथमपादे षट्कत्रयं पञ्चकत्रयं च निर्दिष्टम्; द्वितीयपादे द्विकं त्रिकं सप्तकं षट्कमष्टकं च निर्दिष्टम्; यथायोग्यमर्थनिर्वाहः कर्तव्यो भवति । प्रथमतः षट्कत्रयमेवं निर्वाह्यम् : (१) अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहरूपाणि यानि षट्कर्माणि ब्राह्मणोचितानि प्रथितानि तानि परमात्मपरिकल्पितानि । (२) वसन्तग्रीष्मशरद्वर्षहेमन्तशिशिरात्मकमृतुषट्कमपि तथा । (३) आग्नेयः, अग्नीषोमीयः, उपांशुयाजः, ऐन्द्रं दधि-ऐन्द्रं पय इत्यैन्द्रद्वन्द्वम्, ऐन्द्राग्नः इति यागषट्कं वेदितव्यम् । अत्र आग्नेयादि त्रितयं पौर्णमास्यामनुष्ठीयत इति हेतुना पौर्णमासशब्दाभिलप्यं तत्; उत्तरमै-न्द्रादि त्रितयम् अमावास्यायामनुष्ठीयत इति हेतुना दर्शशब्दाभिलप्यं तत् । द्विकं चैतत् स्वर्गरूपस्यैकस्यैव फलस्य साधनं दर्शपौर्णमासशब्देन व्यपदिष्टं वेदितव्यम् । अत्र यागषट्कप्रतिपादनमितरेषां च यागानामु-पलक्षणं मन्तव्यम् । आराध्याराधकभावनिबन्धनोऽत्रत्यस्सामानाधिकरण्यनिर्देशः । * अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चेति भगवानपि हि स्वयमाह । अथ पञ्चकत्रिकं विव्रियते । (१) दैवयज्ञः पितृयज्ञो भूत-यज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति पञ्च महायज्ञाः प्रथिताः । (२) प्राणापानव्यानोदानसमानसमाख्याः पञ्चाहुतयः * प्राणाय स्वाहेति पञ्चवाक्प्रथिता अन्तर्यामिपरमात्मसमाराधनरूपा वेद्याः । (३) गार्हपत्य-आहवनीय-दक्षिणाग्नि-सभ्य-आवसथ्य समाख्याः पञ्चाग्नयः : सत्याषाढो भरद्वाजश्च गार्हपत्यादित्रितयमेव श्रौताग्नित्वेन व्यपदिशतः; अन्ये सूत्रकाराः सभ्यमावसथ्यं च संमेल्य पञ्चाग्नित्वेन व्यपदिशन्ति । ब्राह्मणानां गार्हपत्याद्यग्नित्रितयमेवेति हिरण्यकेशिमतम् ॥ ( अथ द्वितीयपादे विवरणम् । ) ज्ञानं वैराग्यं च द्विकम्; एतस्मिन्नेव शास्त्राणां मुख्यः कटाक्षः; अत एव * नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये * इति स्तोत्र-रत्नोपक्रमे एतदुभयविशेषणम् । अथ त्रिकशब्देन-पूर्वोक्तज्ञानवैराग्यफलभूताः परभक्तिपरज्ञानपरमभक्तयो विवक्षिताः । अथवा, उपासनफलभूता ऐश्वर्यकैवल्यभगवत्प्राप्तयः । आसां प्रदायको भगवानित्युक्तं भवति । अथ सप्तकशब्देन - विवेक - विमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षा उच्यन्ते; एते हि पूर्वोक्तकर्मयोगा-दिपरमभक्तिपर्यन्तनिष्ठासमुत्पादकमनोनैर्मल्यहेतुभूताः । विवेकादीनां विवरणमेवम्; – जात्याश्रयनि-मित्तादुष्टादन्नात्कायशुद्धिः विवेकः; त्रिविधदोषविवर्जिताहारविवेचनफलभूतायां कायशुद्धौ विवेक उपचर्यते । विविक्ताहारसेवया राजसतामसाहाराप्यायितदेहात् स्वदेहविवेचनं विवेक इत्यप्याहुः । विमोको नाम कामक्रोधानभिष्वङ्गः । अभ्यासो नाम आलम्बनसंशीलनं पुनःपुनः । शुभाश्रयमङ्गलविग्रहस्य मुहुर्मुहु-रनुध्यानमिति यावत् । क्रिया नाम पञ्चमहायज्ञादीनां नित्यकर्मणां यथाशक्त्यनुष्ठानम् । कल्याणं नाम सत्यार्जवदयादानाहिंसानभिध्याः । षट्कस्यैतस्य कल्याणमिति नाम शास्त्रीयम् । अनवसादो नाम शोक निमित्तेषु सत्स्वपि शोकाननुभवः । अनुद्धर्षो नाम संतोषनिमित्तेषु सत्स्वपि शान्तचित्तत्वम् । तस्यैतस्य विवेकादिसप्तकस्य भगवाननुग्राहक इत्युक्तं भवति । अथ षट्कमिति ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि । अष्टकं तु—छान्दोग्योपनिषदि ( अष्टमप्रपाठके ) * एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्प इत्याम्नातं गुणाष्टकम् । स्पष्टमन्यत् ॥ ... (२)

३. (ऐन्दुमैन्दुमैन्दुमाहि) भूतपञ्चकात्मन् ! ज्ञानेन्द्रियपञ्चकात्मन ! कर्मेन्द्रियपञ्चकात्मन् ! पञ्चतन्मात्रात्मन् ! प्रकृतिमहदहङ्कारात्मन ! मनोनिर्वाहक ! [ आहत्य चतुर्विंशतितत्वनिर्वाहकेति यावत ] चेतनानामप्यन्तर्यामिन् आदिदेव ! श्रीवैकुण्ठमधितिष्ठन् ! अप्राकृतपञ्चशक्ति - पञ्चज्ञानेन्द्रिय - पञ्चकर्मेन्द्रियनिर्वाहक ! शब्दादिभोग्यपञ्चकस्वरूप ! भोगस्थान - भोगोपकरण - वैकुण्ठामर । वैकुण्ठमुनि - मुक्तरूपपञ्चकनियामक ! परमपुरुष ! एवंभूतं भवन्तं हन्त ! के नाम ज्ञातुमीशते ? ॥ (३)

४. ( मून्नुमुप्पदारिनोडु ) त्रयस्त्रिंशतो हलक्षराणां षोडशानामजक्षराणां ळकारादीनां पञ्चानामक्षराणां च निर्वाहक ! ऋग्यजुस्सामाख्यवेदत्रयस्वरूप ! द्वादशाक्षरीप्रतिपाद्य ! वर्णत्रयात्मकप्रणवप्रकाशमानज्योतिर्मय ! शाश्वतप्रदीपायित—अकार वाच्य ! अरमन्निरुपाधिकशेषिन् ! भगवन ! मदीयं सर्वं भरं स्वस्मिन्नावाह्य हृदि मम प्रविष्टवानसि: हन्त ! किमिदं सौशील्यम् । [ विवरणम्—ककारादिहकारान्ताः त्रयस्त्रिंशत हल्वर्णाः प्रथिताः । अकारादिविसर्जनीयान्ताः षोडश अज्वर्णाः प्रथिताः । ळकार क्षकार ज्ञकार जिह्वामूलीयोपध्मानीयानि पञ्च वेदितव्यानि । क्षकार ज्ञकारयोः संयुक्ताक्षरत्वादपूर्वाक्षरत्वेन गणना कथमिति शङ्का माभूत; चिरादनुवर्तमाना अक्षराभ्यासंसंप्रदायपरम्परा सेषा ॥ ] (४)

५. ( निन्नियडङ्गुमोन्नला ) स्थावरजङ्गमात्मकेषु उच्चावचेष्वशेषेष्वपि शरीरेषु आत्मत्वेनावस्थाय सर्वत्रापि परिसमाप्यवर्तमान भो भगवन् ! तावकीनस्वभाव एवंविध इति कार्त्स्न्येनतयेऽपि न कस्यापि परिच्छेत्तुं शक्यम् । जगदादिकारणभूत स्वामिन ! पुरा निजनाभीनलिने समुत्पादितचतुर्मुख आदिदेवः खल्वसि त्वम् ॥ ... ... ... ... (५)

६. ( नागमेन्दुमेरुवेप्पै ) भोः फणिपतिधृतदिव्यमङ्गलविग्रह ! [ भोगिभोगशयनीयशायिन ! ] स्वर्गलोक धारकं मेरुगिरिम् , दिग्दन्तिधृतामवनीम् , परमं पदम् , व्योमप्रवाहिनीं जाह्नवीम् , नभस्तलविसृत्वरं मेघमण्डलम्, वैश्वानराग्निम पञ्चवृत्तिप्राणविशेषं च सुष्ठु परिपालयन्वर्तसे; ' एकमेवाद्वितीयं वस्तु समस्तचराचरधारकं विराजत ' इत्युपनिषद्भिराम्नातः प्रभावः त्वय्येव हि प्रतिष्ठितः ॥ ... (६)

७. ( ओन्निरण्डुमूर्त्तियाय् ) ब्रह्मरुद्रयोः शरीरित्वेन नियामकतयाऽवस्थित प्रधानमूर्ते ! विमतानां स्वस्वरूपयाथात्म्य प्रकाशनविरहेण तमोभिवर्धक ! भक्तानां तत्प्रकाशनेन समिचीनज्ञानविकासकारिन् । भूतभविष्यद्वर्तमानाख्यकालत्रयप्रवर्तक ! ( यद्वा ) सत्त्वरजस्तमोभिधगुणत्रयाभिवृद्ध्यौपयिकराजसतामसकालत्रयनिर्वाहक ! सागरपरीतकृत्स्नाभूमण्डलनियामक ! आहवनीयगार्हपत्यदक्षिणाग्निसमाख्याग्नित्रितयसमाराध्य ! गोपालसजातीयतयाऽवतीर्ण दिव्याद्भुत भगवन ! ललाटलोचनोऽपि हन्त ! न त्वां स्तोतु क्षमः ॥ ... ... ... ... (७)

८. ( आदियान वानवर्क्कुम् ) भगो आदिकालनिर्वाहक ! जगत्सृष्ट्यादिकारकाणां प्रजापति प्रभृतीना ममर्त्यानाम् , दिव्ये धाम्नि विराजमानानां नित्यसूरीणां च नियामकस्त्वमेव ननु भवसि । जगदधिपतित्वेन प्रथामश्नुवानानां ब्रह्मादीनामपि अवसानकालं प्रकाशयामासिथ त्वं शास्त्रेषु । ईदृशं त्वां हन्त ! के वा परिच्छेत्तुं प्रभवितारः ? ... ... (८)

९. ( तादुलावुकोन्नैमालै ) किञ्जल्काञ्चितवन्यकुसुमालंकृत कपर्दभरित कपर्दिवन्दित पादपद्म ! विमलस्वरूप भगवन् विविधोत्कर्षशालिवेदधनैर्वैदिकैः, सामगानोज्ज्वलयज्ञप्रवर्तकैर्याययजूकैः, शास्त्रीयश्रवणमननादिनिरतैर्महात्मभिश्च नियतमभिवन्दनीयता सत्यं त्वय्येकस्मिन् प्रतिष्ठिता ॥ ... (९)

१०. ( तन्नुळे तिरैत्तॆळुम् ) भो भगवन् ! यथा हि तरङ्गमालिकासंकुले महति पयोनिधौ ऊर्मिमाला स्समुद्भूय पुनस्तत्रैव लीयन्ते तथा स्थावरजङ्गमात्मकं प्रपञ्चजातमशेषं त्वय्येव जनित्वा त्वय्येव लीयत इत्याम्नातः प्रभावविशेषस्त्वदैकांतिकः खलु ॥ ... ... (१०)

११. ( शोल्लिनाल् तोडर्च्चिनी ) भगवन् वेदान्तशास्त्रमुखेन परमैकान्तिनां संबन्धज्ञापकोऽसि त्वम्; कतिपयेषु पुराणेष्वाश्रयणीयतया प्रतिपाद्यमानानां देवानामन्तरात्मा चासि त्वम् । वेदैरप्यपरिच्छेद्यं तेज इति प्रतिपादितं वस्तु च त्वमसि । वेदोक्तरीत्या जगत्सृष्ट्यर्थं भवता सृष्टानां ब्रह्मादीनां संक्षिप्ताया अपि स्तुतेरनर्हान् कल्याणगुणान् हि धत्ते भवान् ॥ ... ... (११)

१२. ( उलहुतन्नै नीपडैत्ति ) भगवन् ! भुवनान्यखिलानि भवानेव सृजति ; नित्यनैमित्तिकादिप्रळयापन्नानि त्वमेव हि जठरे निधायाभिरक्षसि । सर्वजगच्छरीरकोऽपि त्वम् असाधारणविग्रहविशिष्टस्सन् व्यावृत्तो विराजसे । हन्त ! त्वदीयानद्भुतप्रकारान् को नाम वेद ? ॥ ... (१२)

१३. ( इन्नैयेन्रु शोल्ललावदु ) त्वमेवंविधोऽसीति निष्कृष्य वक्तुमनर्होऽसि भगवन् । त्वद्विषयकमर्वोदन्तवेदिनस्तत्त्वज्ञा महान्तः कृशोदर्या नीलादेव्या वल्लभं त्वामाहुः । त्वदीयं सर्वविलक्षणदिव्यमङ्गलविग्रहयाथात्म्यं दिव्यनामतति दिव्यस्थलानि विग्रहपरिग्रहनिदानं च केचिदेव विज्ञातुमीशते त्वत्कृपाभृत्राः त्वत्कृपाविदूरगास्तु चिन्तयितुमपि नार्हन्ति ॥ ... ... (१३)

१४. ( तूयनागमायिनाय् ) संसारिणां मलीमसदेहनिवर्तन पूर्वकम् अप्राकृतदेहमनुगह्णन् भो भगवन् ! तुलसीस्रगलंकृत ! गभीरे पारावारे दिव्यकूर्मरूपितया शयित देवाधिदेव भो ! भवदीय शुभनामवाच्यानि गुणचेष्टितादीनि विविच्य वर्णयितुं वयमसमर्था एव स्मः । सामवेदगीतस्वरूपो चक्रपाणिश्च खलु भवान् ॥ .... ... ... ... (१४)

१५. ( अङ्गमारुम् वेदनान्गुम् ) वेदाङ्गभूतशीक्षादिषट्कप्रवर्तक ! अङ्गिभूतवेदचतुष्टयनिर्वाहक ! तेषु साङ्गेषु वेदेषु सुप्रतिष्ठितस्वरूपस्वभाव ! महाब्धौ रक्तविलोचनफणिफणशायिन ! सम्पत्समृद्ध ! गुणगणाढ्य ! कृतयुगे शंखसमानवर्णतयाऽवतीर्ण भगवन् ! शार्ङ्गपाणिः खलु भवान् ॥ (१५)

१६. ( तलैक्कणत्तुहळ्कुळम्बु. ) मुख्यतां प्राप्तवत्यां देवजात्याम क्षुद्रे स्थावरगणे मिश्रयोनिभूतमनुष्यतिर्यग्जातौ च अप्राकृततेजसा सह प्रादुर्भूय स्थावराणामपि वस्तूनामनुभवयोग्यतया यद्यपि तिष्ठसि तथाऽपि नित्यविपुलवेदादिशास्त्रसमूहा अभिधानवृत्त्या तात्पर्यवृत्त्या च त्वदीयं प्रभावं मनसाऽपि ध्यातुमशक्तास्सन्तः पर्वतसमूहवदपरिच्छेद्यतां केवलमवबोधयन्तीति यत् तदिदं तव महिमवैजात्यम् ॥ १६

१७ ( एकमूर्तिमून्रुमूर्ति ) सर्वकारणभूत भगवन् ! परमपदनिलयपरवासुदेवमूर्तिः संकर्षणप्रद्युम्नानिरुद्धमूर्तिः प्रधानपुरुषाऽव्यक्तकालशरीरकः विभवावताररूपविलक्षणभोगमूर्तिः * रामो विग्रहवान् धर्मः * कृष्णं धर्मं सनातनम् * इत्युक्तरीत्या रामकृष्णात्मकधर्ममूर्तिः एवमसंख्येयमूर्तिस्सन् क्षीरार्णवे भोगिभोगशयनीयशायी च सन् अर्चामूर्तिश्च विराजसे ; सर्वमिदमप्रमेयं नः ॥ ... (१७)

१८. ( विडत्तवायोरायिरम् ) भगवन्नुदधिसवर्ण ! विषाढ्याद्वदनसाहस्रान्नयनद्विसहस्राच्च सुतीक्ष्णमग्निं वमति निरन्तरत्वदनुभवशालिनि निरवधिकज्योतिषि वितानरूपतेजःपुञ्जसंभृते शयनरूपिणि शेषेऽम्बुधजलनिधि यच्छेते भवान् तदिदमप्रमेयं नः ॥ [ विवरणम् ॥ सुतीक्ष्णाग्निवमनं शेषस्य * स्नेहादस्थानरक्षाव्यसनित्वप्रयुक्तम्; मङ्गलाशासनपरेष्वग्रगण्यो हि सः । ] ... ... (१८)

१९. ( पुळ्ळदाहि वेदनान्गुम् ) तेजस्विचक्रपाणे भगवन् ! हंसरूपी सन् चतुरोऽपि वेदानुपादिशः; अथ च बकासुरवक्त्रं विदारयामासिथ; पक्षिराजं ध्वजत्वेन स्वीचकर्थ; तमेव वाहनत्वेन चाद्रियथाः। एवं बहुमुखमाश्रितरक्षणं कुर्वन्नपि भवान् जलनिधौ शेषमधिशयानस्सन् इतोऽपि रक्षणचिन्तां कलयति, हन्त ! किमेतत् ? ... ... ... (१९)

२०. ( कूशमोन्नुमिन्नि ) प्रागर्णवे फणिपतिं तल्पतया निर्भय स्वीकृत्य स्तुत्यभिमुखैर्देवैस्स्तुतस्सन् यदकरोः शयनम्, समुद्रमथनसमये जलचरकमठरूपमास्थितवान् केशवेति अविवेकिजनपरिहासपात्रं यदकरोः शयनम् तदिदमुभयमधिकृत्य भगवन्मह्यमुदीरय तत्त्वम् ॥ [ विवरणम्—परत्वशाली भवानेव हन्त ! नीचत्वमपि स्वीकरोति; कोऽत्र हेतुरिति जिज्ञासेऽहमित्युक्तं भवति ॥ ] (२०)

२१. ( अरङ्गने तरङ्गनीर् ) पुरा वानरवर्गकैङ्कर्यं स्वीकृतवन् श्रीरङ्गनाथ ! पुरा सागरस्य कालुष्यं समुत्पाद्य मन्दराद्रिप्ररूढमहीरुहाणां शैथिल्यं चोत्पाद्य वासुकिनागं रज्जुतया परिवेष्ट्य यदा त्वं मथनमकरोः, तदा शूरत्वेन प्रथिताः पार्श्वस्थिता देवासुरप्रभृतयः किमकुर्वत ? कथय तावदिदं विशिष्य ॥ ... ... ... ... (२१)

२२. ( पण्डुमिन्नुमेलुमाय् ) मधुपमुखरशिशिरतुलसीस्रगलंकृत ! परमसौन्दर्यनिधिसरसिजवासिनीसनाथवक्षस्क भूमिवल्लभ ! भूतभविष्यद्वर्तमानात्मककालत्रितयेऽपि यतो हि त्वमप्रच्युतरक्षादीक्षः ततस्त्रैलोक्यमपि हृदि निगुह्य वटदलमधिशयितवान् मूलपुरुषोऽसि ॥ ... (२२)

२३. ( वानिरत्तोर्शीयमाय् ) पाण्डरविग्रहनरहरिवर्ष्मणाऽतीव वक्रदंष्ट्रस्य हिरण्यकशिपोर्वक्षसि पाणितलनखाग्रप्रवेशनपटो ! भगवन् ! अप्रतिमवैभवशालिचतुर्वेदविभासुरजिह्वाग्रैः श्रोत्रियैः सदुपायपरिग्रहपूर्वकं वन्दनीयः क्षीराब्धौ शयानः पद्मनाभश्च खलु त्वमसि ॥ ... ... (२३)

२४. ( गंगैनीर्पयन्दपाद ) गङ्गातीर्थसमुत्पादकपादारविन्द प्रभो ! पञ्चहेतीपरिकर्मितसुन्दरपाणितल ! नरसिंहमूर्ते देवदेव ! मधुस्यन्दिसरसीरुहवासिनीनित्यसंश्लेषास्पदवक्षस्स्थल ! अर्णवसवर्ण भगवन् जय विजयी भव ॥ ... ... ... ... (२४)

२५. ( वात्तिनिल् शिरत्तैमिक ) ब्रह्मप्रदत्तवरबलावलिप्तस्य भयानकदंष्ट्रस्य हिरण्यकशिपोरुरसि करं विन्यस्य नखानि निखाय तं हतवन् ! एतादृशप्रभावशाली त्वं कदाचिद्याचकश्च भवसि ; आः किमेतदिन्द्रजालम् ! याच्ञालब्धां जगतीं कदाचिदुदरे निगूढं निदधासि ; भगवन् कृष्ण ! तव संकल्पशक्तिं को वाऽवगन्तुं शक्तः ? ॥ ... ... ... ... (२५)

२६. ( आणिनोडु पेण्णुमाहि ) स्त्रीपुंसोभयजातिप्रवर्तक ! क्लीबजातेरपि प्रवर्तक ! निरुक्तजातित्रयमध्ये अत्यन्तमभ्यर्हितवस्तुभूत ! रसशब्दस्पर्शादिविषयनियामक ! प्राकृतसकलपदार्थमूलभूतायाः प्रकृतेरपि निर्वाहक ! गोवर्गरक्षणनिरतगोपालजातीय ! नास्तिकानामसद्भूत ! आस्तिकानां सद्भूत ! भूमिभिक्षुकभिक्षुवर्ष्मणा महाबलिसविधे प्रच्छन्नगतवर ! कृत्रिमपटो हरे ! कस्य वा त्वं परिच्छेद्योऽसि ? (२६)

२७. ( विण्कडन्द शोदियाय् ) विभुभूतां मूलप्रकृतिं स्वसंकल्पैकदेशवशंवदां कर्तुं समर्थ ! ज्योतिःपुञ्जमय ! स्वयंप्रकाशजीवात्मशरीरक ! वेदानामपि वेदेशिके दिव्ये धाम्नि नित्यवास्तव्य ! हेयप्रत्यनीक सर्वेश्वर ! अप्रमेयाश्चर्यशक्तियुक्तवामनमूर्तिस्सन् भिक्षुको भूत्वा यत्त्वं त्रैलोक्यमाक्रान्तवानसि, तत् कस्य नाम बत ! परिच्छेद्यम् ॥ ... ... ... (२७)

२८. ( पडैत्त पारिडन्दुळन्दु ) अण्डकारणभूतमेकार्णवमुत्पाद्य अथ सृष्टाया भुवो जातां विपदं वराहवपुषा वामनवपुषा च व्युदस्यसि स्म ; संवर्तसमये भुवं निगीर्य ततः परमुद्गिरसि स्म ; समयविशेषे जलधौ सेतुं निबध्य तत्रैव जलधौ शयनं मथनं च विरचयसि स्म ; युद्धोन्मुखमालिसुमालिप्रमुखयातुधानानां मृत्युमुखप्रवेशनाय हेतिगणं प्रेरयसि स्म भगवन् विविधायुधभासुरबाहो ॥ ... (२८)

२९. ( परत्तिलुम् परत्तैयादि ) नाथ ! ज्ञानस्वरूपिन् ! परात्परोऽसि ; श्रिया नित्यसंश्लिष्टवक्षा असि ; जलधौ योगनिद्रामुद्राकृदसि अत्यन्तहेयमनुष्यादिजातिष्वपि जायसे ; भगो ! भवदनुग्रहप्रकारान् न कोऽपि विज्ञातुमीष्टे ॥ ... ... ... ... (२९)

३०. ( वानहमुम् मण्णहमुम् ) उपरितनलोकस्थान् सुरान् भूतलस्थान्नरान् सप्तकुलाचलान् सप्त सागरांश्च जठरे निधाय वटदलमधिशयितवन् ! पुण्डरीकसवर्णदिव्यावयव ! मधुभरितशिशिरसुरभितुलसीस्रग्विभूषित ! कुब्जावक्रभावनिरासको जैत्रकोदण्डपाणिः खलु भवान् ॥ ... (३०)

३१. ( कालनेमिकालने ) कालनेमिनामकदैत्यमृत्यो भगवन् ! असंख्येयकीर्तिमूर्ते ! पुरा सप्तलोकीं निगीर्य धृतबालाकृतिक ! आश्चर्यशील ! * सागरं शोषयिष्यामीत्यमर्षेण महता नम्रितशार्ङ्ग महावीर ! स्वाश्रितभक्तवाञ्छानुगुणं मुक्तिप्रदानशील प्रभो जय विजयीभव ॥ ... ... (३१)

३२. ( कुरङ्गिनप्पडैकोडु ) वानरवीरसेनाभिस्सह उत्तरङ्गसागरोपरि गत्वा दारुणान् सायकान् प्रयुज्य लङ्कानिलयरावणादिराक्षसमारणं कृतवान् खलु भवान् भगवन् । याच्नामात्रे भूमिदानं कृतवति महाबलौ निर्घृणतां प्रदर्श्य विक्रम्य लोकानशेषान् पादपद्मतः स्वायत्तीकृतवान् खलुभवान् ॥ (३२)

३३. ( मिन्निरैत्तेयित्तरक्कन् ) विद्युत्सन्निभदशनश्रेणिभीषणदशाननहननाय शरानाशीविषोपमान् प्रयुज्य, अथ तदनुजे विभीषणे अकम्पामनुकम्पां परिचय्य साम्राज्यधुरं तस्मिन्निक्षिप्तवन् भगवन् ! परमसुन्दर्या मधुरवाण्या मुग्धाया नीलादेव्या वल्लभ ! हरे, नित्यसिद्धकल्याणगुणशाली रुक्माभदिव्यविग्रहः पुण्डरीकाक्षस्त्वमेव ननु भोः । ... ... ... ... (३३)

३४. ( आदियादियादिनी ) उपादानकारणं निमित्तकारणं सहकारिकारणमित्युच्यमानं त्रिविधमपि कारणं जगतस्त्वमेव ननु भवसि ; अण्डान्तर्वर्तिसमस्तवस्तुजातनिर्वाहकश्च त्वमेवासि । अतश्च निष्कृष्टपरमतत्त्वं त्वमेव भवसि । अनन्याधीनस्वयंप्रकाशविशिष्टोऽसि । वेदात्मा सर्वयज्ञाराध्य उदयविभूतिनियामकस्सर्वकारणभूतश्च सन् भवान् गोपजन्मा संवृत्त इति यत्तदिदमद्भुतादप्यद्भुतमहो ॥ (३४)

३५. ( अम्बुलावुमीनुमाहि ) अस्मदीश्वर भगवन् ! हेतिराजधरः परमपुरुषोऽपि सन् भवान् जलचरमत्स्यकूर्माकृतिर्भूत्वा तत्राप्यतिशयमेव नन्वधिगतवान् । आश्रितवात्सल्यं च परममाविष्कृतवान् । अथ च वल्लीतुल्यवलग्नशालिन्या गोपाङ्गनाया यशोदाया अर्भको भूत्वाऽपि अप्रच्युतसर्वस्वामिभावो ननु विराजसे; हन्त किमिदमद्भुतम् ॥ ... ... ... (३५)

३६. ( आडहत्त पूणमुलै ) हिरण्मयभूषणभूषिताया यशोदायास्स्तनन्धयो भूत्वा पादक्षेपेण शकटमुपमर्द्य बालारिष्टजनकपक्षिविशेषस्वरूपिण्याः पूतनायाश्च विषदिग्धस्तन्यपानेन तां पञ्चतां प्रापय्य, हाटकमयकरवलयशालिनीनां वल्लवीनामधरसुधामास्वादितवानसि । भोः किमेतत ॥ ... (३६)

३७. (कायृत्तनीळ् विळङ्गनि) यशोदास्तन्यपायिन् ! नवनीतोपभोगनिरत ! पूतनास्तन्यपानसमुत्सुक कल्पान्ते महीनिगरणनिपुण ! वराहरूपेणावतीर्ण ! परिगृहीतवामनमूर्ते भगवन् ! शलाटुभरित-

समुत्तुङ्गकपित्थानोकहसमुत्थफलोपमर्दिनम् असुरावेशविशिष्टकुन्दमहीरुहभञ्जनदक्षिणं वाजिवेषधरकेशिदैत्यनिषूदननिपुणकरतलं च त्वामामनन्ति कवयः कृष्णम् ॥ ... .. (३७)

३८. ( कडुङ्कलन्दवन्कारि ) कंसप्रेरितमत्तवारणप्रवीण ! यमुनाह्रदे कालियविषधरमस्तकमण्डलकृतनिस्तुलनर्तन ! नाथ ! कुम्भनर्तनतत्पर ! कालमेघसवर्ण ! सुभगतुलसीमालालंकृतवक्षस्क ! कालनेमिकाल ! भगवन् ! जय विजयी भव ॥ ... ... ... ... (३८)

३९. ( वर्पेडुत्तु वेलैनीर् ) मन्दराद्रिणा जलनिधिं कलुषीचकर्थ ; महीधरैर्जलनिधौ सेतुं बबन्धिथ; जलदुर्गपरीतां शैलमयप्राकारपरिवेष्टितां लङ्कापुरीं विध्वंसयामासिथ: गोवर्धनाद्रिमुद्धृत्य महावृष्टिविपन्निवारणमारचयामासिथ । एवंविधो भवान् भगवन् ! ननु कालमेघनिभदिव्यगात्रस्सन् मादृशां मनो हरति ॥ ... ... ... ... ... ... (३९)

४०. ( आनैकात्तोरानैकोन्नु ) भगवन् ! गजेन्द्रं ररक्षिथ: गोपालकुमारस्सन् कुवलयापीडकरीन्द्रं जघन्थ; गाश्चारयामासिथ; गव्यमाशिथ ; अङ्गच्छत्रीकरणेन गाः पालयामासिथ । अञ्जनालंकृतदृशो नीलायाः कृते तत्पुरतः समर्षभौद्धत्यमपाचकर्थ : हन्त ! किमिदमद्भुतचेष्टितबृन्दम् ! ॥ ... (४०)

४१. ( आयनाहियायर्मङ्गै ) अयि भो आश्चर्यभूत भगवन् ! गोपालबालो भूत्वा गोपालबालिकाया नीलादेव्यास्संश्लेषमकामयथाः [ नीलादेवीसंश्लेषकामनया गोपालतामास्थितवानसीति भावः । ] दिव्येषु भौमेषु च महामतिषु को वा भवन्तं यथायथं वेद ? सत्यं नैकोऽपि वेद । इदम् अवेदनं न तावत्प्रकृतिप्रयुक्तेनाज्ञानेन; स्वतःसर्वज्ञानाप्यवेद्यमहो तव स्वरूपम् । आस्तामिदम् । स्वाराधनोपकरणभूतकरचरणाद्यवयववितरणे त्वया कृतेऽपि सति प्रनष्टान् संसारिचेतनान् विलोक्य तदनर्थासहिष्णुतया संहरणमेवैतेषां श्रेय इति मत्वा तान् तमसि लीनांश्चकर्थ; सर्वोऽपि ते संकल्पः परमाद्भुतः ॥ [ विवरणम्—"गोपालबालो भूत्वा गोपालबालिकाया नीलादेव्याः संश्लेषमकामयथाः" इत्यत्र * हे सुन्दरैकतरजन्मनि कृष्णभावे द्वे मातरौ च पितरौ च कुले अपि द्वे । एकक्षणादनुगृहीतवतः फलं ते नीला कुलेन सदृशी किल रुक्मिणी च ॥ * ( सुन्दरबाहुस्तवे ) इत्येषा श्रीकूरनाथगुरुवरदिव्यसूक्तिरनुसंधेया ॥ ] ... (४१)

४२. ( वेरिशैन्दशेङ्कमॅनि ) नीलादेव्यर्थं निर्भयलेशं निरस्तसमर्षभौद्धत्य भगवन् ! संहारकृत्योचितवह्निकल्पवपुषा भस्मधारिणा चन्द्रावतंसितकपर्दशालिना च कपर्दिना करभृतं ब्रह्मकपालं वक्षस्स्थलस्रुतरुधिरधारया यदपूरयः तत् कुतो नु भोः ॥ [ विवरणम्:—ब्रह्महत्याशापग्रस्तेन रुद्रेण भिक्षुणा करे भृतं कपालं बदरिकाश्रमस्थो नारायणो भगवान् प्रयाचितस्सन् स्ववक्षस्स्थलतो रुधिरधारामुत्पाद्य प्रक्षिप्तया तया पर्यपूरयदिति तावत्पौराणिकी कथा; कुत एवमपूरय इति प्रश्नस्य कोऽभिप्राय इति चेदवधेयम्; भगवन् ! भवान् सर्वस्मात्परः ; रुद्रस्तु सर्वथा भवतः शेषभूतः ; तस्मात्स याचकोऽभूत्त्वयि; त्वया च सोऽनुगृहीतोऽभूत; तदिदं तव सर्वशेषित्वानुगुणम् प्रणतार्तिहरत्वप्रथानुकूलं चेति सर्वे वयं मन्महे: एवं नाम भवदीयपरत्वप्रकाशनमेवात्र फलतीति सिध्यति ; यदि कारणान्तरं किमपि स्यात्तर्हि तदभिधीयतामित्युक्तं भवति ॥ ] ... ... ... (४२)

४३. ( वेञ्जिनत्तेळवेण् ) उग्रकोपशालिकुवलयापीडदन्तिदन्तभञ्जक ! क्रुद्धमहाबलकंसघातुक ! स्तन्यपानच्छलवियोजित विप्रलम्भकपूतनाप्राण ! लोकविक्रान्तचरण भगवन् ! अञ्जनसवर्णस्त्वमेव खल्वादिदेवोऽसि ॥ ... ... ... ... (४३)

४४. ( पालिनीर्मै शेम्बोनीर्मै ) क्षीरसवर्णतां रुक्मसवर्णतां हरिद्वर्णतां रिङ्गन्मधुकरपटलनीलोत्पलसवर्णतां च क्रमशश्चतुर्षु युगेषु स्ववपुषा प्रकाशयतो महाविष्णोस्सौलभ्यं यदेष लोकस्तिरस्कुरुते हन्त ! किमेतन्मौर्ख्यम् ! ॥ ... ... ... (४४)

४५. ( मण्णुळायुहोल् विण्णुळाय् ) अनन्तशायिन ! मूर्तसुकृतस्वरूप ! भगवन् ! सम्मृद्धतुलसीमालयालंकृत ! परमपावन ! लीलाविभूत्यामवतीर्णोऽसि, नित्यविभूत्यां विराजसे, भुवि विपरीतज्ञानिनां संसारिणां चिन्ताया अप्यभूमिरसि ; अनन्यप्रयोजनानां चक्षुर्विषयोऽसि ; इतरेषां दवीयानसि : हन्त ! किमिदमद्भुतं नाम ! ॥ ... ... ... (४५)

४६. ( तोडुपेत्ततण्डुळाय् ) शिशिरतुलसीमालालंकृतमकुटतट ! श्रीपाञ्चजन्यधर चक्रपाणे तार्क्ष्यवाहन भगवन, लौकिकैरन्यैर्जनैर्यदवाप्तं श्रेयः तदहं नाविन्दिषि; क्षोदीयानहं यथा हि मुक्तिमवाप्य संसृतिमुन्मूलयेयम् तथा नाम कमप्युपायमनुगृहाण ॥ [ विवरणम्:—" लौकिकैरन्यैर्जनैर्यदवाप्तं श्रेयः तदहं नाविन्दिषि" इत्यत्र किं हृदयमिति चेत; लौकिकाः खलु जनाः शब्दादिविषयप्रवणा भगवद्विषयविमुखाः अविज्ञातभगवद्विश्लेषव्यसनाः सांसारिकसुखानुभवतृप्ताः सुखेन कालं क्षिपन्ति ; तादृशी स्थितिर्ममापि नन्वस्ति चेत अहमपि सुखी सन् कथञ्चित्कालं नयेयम् । तादृशं श्रेयो नास्ति मम ; भगवद्विषयप्रावण्यधारणेन खलु एवं क्लेशा अनुभोक्तव्या भवन्ति मया ; एष क्लेशो मुक्तिदशायामेव विलयमुपैष्यतीति हृदयम् । संसारिणां दुरवस्थितेः श्रेयस्त्वेन कथनं तेषां धिया ॥ ... ... (४६)

४७. ( कारोडोत्तमेनि ) नीलमेघनिभ गोपालकृष्ण नित्यसूरिनाथ त्वं खलु क्षीरपयोनिधौ शेषशय्यामधिशयानोऽसीत्याहुः प्राज्ञाः ; किन्तु ' इदं स्थलं तव स्थलम् ' इति तावद्वक्तुं न शक्यम् ; अनन्यधिकानि ते निवासस्थलानि इत्यप्याहुः ; क्षोदीयानहं कुत्र समागत्याश्रयेयम् ? तदिदमाचक्ष्व भोः ॥ (४७)

४८. ( कुन्निलन्निन्नु वानिरुन्दु ) श्रीवेङ्कटाद्रिमधितिष्ठसि ; दिव्ये धाम्नि निषीदसि ; क्षीराम्बुधिमधिशेषे ; त्रिविक्रमस्सन् भुवमाक्रामसि ; कदाचिद्भुवं निगिरसि ; जातुचिद्वराहरूपी तामभिरक्षसि ; प्रतिक्षणं नानाजन्तुजातं सृजसि ; तत्तद्गुणानुगुण्येन तेषां तेषामाश्रयणीयानि दैवतानि च व्यवस्थापयसि ; एवं नाम महोपकारकः परमपुरुषस्त्वमेव हि ॥ ... ... ... (४८)

४९. ( कोण्डकोण्डकोदैमीदु ) भ्रमरमुखरचिकुरबन्धायाः ( कंसकिङ्कर्याः ) कुब्जायाः काये कुटिलतां सदुपायेन निनिवर्त्य प्रहृष्टेन प्रभुणाऽधिष्ठितो दिव्यदेशः ( क इति चेत );—कुलीरभक्षिबलाकामन्दगतिदन्तुरं, बलाकाचकितशफरवितति भासुरं, नीलोत्पलच्छायानिलीनक्षुद्रमीनं च तीर्थनिकरं दधाना श्रीरङ्गनगरी ॥ [ विवरणम्—कावेरीसलिले बलाकाः कुलीरं भक्षयित्वा मन्दमन्दं चरन्ति ; ता अवलोक्य महामत्स्या भीतभीता उत्प्लवन्ते, तेभ्योऽपि भिया क्षुद्रा मीना निलीयन्ते इति वर्णनेनानेन द्योत्यमानो ध्वन्यर्थ एषः—बलाकास्थाने अहंकारः ; कुलीरस्थाने संसारी; महाशफरस्थाने उपासकः ; लघुमीनस्थाने प्रपन्नश्च ग्राह्याः । बलाका कर्कटमश्नातीत्यनेन अहंकारः संसारिणं कबलीकरोतीत्ययमर्थो द्योत्यते; तदवलोक्य महामत्स्यः अन्यत्रापसरतीत्यनेन—अहङ्काराच्चकित उपासकः संसारिभिस्सह संगं विहाय विविक्तदेशमन्विष्यतीत्ययमर्थः स्फोर्यते । ततोऽपि भीता लघुमीना उत्पलच्छायायां निलीयन्त इत्यनेन उपासकसङ्काकातराः प्रपन्नाः पुरुषकारभूतलक्ष्मीकटाक्षवीक्षापेक्षिणो वलन्ते इत्ययमर्थः स्मार्यते ] ॥

५०. ( वेण्डिरैकरुङ्डल् ) कदाचित शरणागतितोऽप्रसन्ने दक्षिणाम्बुमालिनि क्रोधवशात शार्ङ्गतः शरानाशीविषोपमान प्रयुक्तवता महावीरेणाधिष्ठितो दिव्यदेशः ( क इति चेत );—अष्टाभ्योऽपि दिशाभ्यस्समागताभिर्जनताभिरवगाह्यमानैः पुण्यतीर्थैर्विभासुरं भ्रमरमुखरोद्यानपरीतमभिरामं श्रीरङ्गनगरम् ॥ ... ... ... ... (५०)

५१. (शरङ्गळैतुरन्दु) शार्ङ्गमवनमय्य सायकान् प्रयुज्य लङ्काधीशस्य शिरसां दशकं विलूनवता श्रियः पत्या नित्यमध्युषितो दिव्यदेशः (क इति चेत्); * चञ्चच्चामरचन्द्रचन्दनमहामाणिक्यमुक्तोत्करान् लहरीकरैः प्रवाहयन्त्या कावेर्या दिव्यसरिता परीतं चतुर्मुखसंसेवितं च श्रीरङ्गक्षेत्रम् ॥ [ विवरणम्—" चतुर्मुखसंसेवित " मित्यत्र * सर्गाभ्यासविशालया निजधिया जानन्ननन्तेशयं भारत्या सहधर्मचाररतया स्वाधीनसंकीर्तनः । कल्पानेव बहून् कमण्डलुगलद्गङ्गाप्लुतोऽपूजयत् ब्रह्मा त्वां मुखलोचनाञ्जलिपुटैः पद्मैरिवावर्जितैः ॥ * इत्येतत् श्रीरङ्गराजस्तवोत्तरशतकश्लोकरत्नमनुसन्धेयम् ॥ ] ... (५१)

५२. (पोत्तियुत्तमुत्तल्याने) शैलेषु चिरं स्वच्छन्दविहरणेन मदमुदितस्य बलिष्ठस्य च कुवलयापीडगजराजस्य (मथुरायां कंसप्रासादमुखे) अभिभवितुमुपनतस्य दन्तभञ्जनं कृतवता प्रभुणा दामोदरेणाधिष्ठितो दिव्यदेशः (क इति चेत्); परिपक्ववेणुनिर्मितत्रिदण्डधारिभिरेकान्तिभिर्विरक्तैः परीतं शिशिररमणीयतीर्थपरिवृतं श्रीरङ्गनगरम् ॥ ... ... ... (५२)

५३. (मोडियोडिलच्चेयाय) * नन्दिन्यानन्दशून्ये गलति गणपतौ व्याकुले बाहुलेये चण्डे चाकिंत्यकुण्ठे प्रमथपरिषदि प्राप्तवत्यां प्रमाथम् * इति सुदर्शनशतकोक्तरीत्या ) लज्जावहशापलक्ष्यभूते विषमविलोचने परिजनपरिवारैस्समं समराङ्गणात्पलायिते सति बाणासुरस्य दोस्सहस्रमुच्छिन्नं कृतवता परमपुरुषेणाधिष्ठितं स्थलं सुमहितं सह्यजापरिवृतं श्रीरङ्गक्षेत्रम् ॥ ... (५३)

५४. (इलैत्तलैच्चरन्तुरन्दु) शिताग्रसायकप्रयोगतो लङ्कावधिविततिविध्वंसकारी रामचन्द्रः, सह्यमहीधरात्प्रवहन्त्या पाटीरतरूनुत्खाय समानयन्त्या प्रशिथिलितकुङ्कुमलताप्रसूनकुङ्कुमपुञ्जकरम्बितया समुत्तुङ्गतरङ्गया मरुद्वृधया परीतं श्रीरङ्गक्षेत्रमधिशयानः परमपुरुषः ॥ ... ... (५४)

५५. (मन्नुमामलर्क्किळत्ति) पद्मवनालयायाः श्रीदेव्या भूदेव्याश्च वल्लभ ! नीलादेवीदोस्संश्लिष्ट ! परमकृपया मम मनसि विनिहितस्वचरणारविन्द ! भगवन् ! त्वं हेमापगापरिवृतश्रीरङ्गशायी परमभोग्यः खलु ॥ ... ... ... ... ... (५५)

५६. (इलङ्गैमन्नन्) लङ्काधीश्वरशीर्षदशकनिपातननिपुण विजयराघव महावीर ! यज्ञसूत्राश्रितवक्षस्कैः ! वेदाक्षरोद्भासिजिह्वाग्रैर्बहुश्रुतैर्महात्मभिराराध्यस्सन् श्रीकुम्भघोणक्षेत्रमधिशयानस्सर्वेश्वरो भवान् खलु ॥ ... ... ... ... ... ... (५६)

५७. (शङ्गतङ्गमुन्कैनङ्गै) भगवन्नित्यसंश्लेषशालिन्यां साक्षात् श्रीमहालक्ष्म्यां सीतादेव्यां कामुकस्य दशकन्धरस्य समूलविनाशमारचितवान् सिन्धुसवर्णश्रमहरशुभदिव्यविग्रहो दाशरथिः सुरभिचिकुरप्रकरललनामणि [ दिव्याप्सरस्समुदय ) विगाहनविभासुरदिव्यतीर्थपरीतं श्रीकुम्भघोणक्षेत्रमधिशयानस्सर्वाङ्गसुन्दरः ॥ ... ... ... ... ... (५७)

५८. (मरङ्गेडनडन्दउत्तु) यमलार्जुनभञ्जनचरणगतिविशेषाभिराम ! कुवलयापीडमत्तवारणगर्वनिर्वापणनिपुण ! तच्छिरसि प्रहरणेन भञ्जिततद्दन्त ! परमपुरुष ! केशिवक्त्रविदारणविचक्षण भगवन् ! लोकविक्रान्तचरण स्वामिन् ! वैदिकजनाभीष्टपूरकस्सन् श्रीकुम्भघोणक्षेत्रमधिशेते हि भवान् ॥ (५८)

५९. शालिवेलितण्वयल् ) शालिसंभृतसुभगकेदारपरीतं पुष्पोद्यानपरिवृतं समुत्तुङ्गसौधाश्रितं च श्रीकुम्भघोणपुरमधिशयान भगवन् ! कृष्ण ! कालनेमिदन्तवक्त्रमुराणां मृत्युमुखप्रवेशहेतुभूतशार्ङ्गपाणे ! जयविजयीभव ॥ ... ... ... ... (५९)

६०. (शेळुम कोळुम पेरुम्पनि) हिमधारासंपातसन्नतानाम् अथ सूर्यकिरणपतनतम्समुन्नतानां च व्योमस्पृशां वेणुदण्डानां मण्डलेन मण्डिते श्रीवेङ्कटाद्रौ तिष्ठसि भगवन्!; भ्रमरझङ्कारपरीतपुष्पोद्यानपरिवृते समुल्लसत्तटाके च श्रीकुम्भघोणक्षेत्रे शेषे; एतादृशो भवान् हि साक्षान्नारायणः॥ (६०)

६१. (नडन्दकाल्हळनोन्दवो) पर्वतनिकरादीनतिलङ्घ्य प्रवहन्त्याः कनकापगायाः कूले चिरात्क्रियमाणमिदं ते शयनम् अखिलभुवनविक्रमणकालिकचरणश्रान्तिपरिहृतये वा? भूमिदेव्यवसादपरिहारकमहावराहावतरणकालिकश्रमपरिहाराय वा? भगवन् केशव! समुत्थाय संभाषस्व, जय विजयस्व भोः॥ ... .... ... ... (६१)

६२. (करण्डमाडुपोयगैयुळ) करण्डकविहारास्पदतटाकविशेषे निपत्य लुठितानि बृहत्तरतालफलानि विलोक्य (स्वभक्षकजलचरकाकभ्रमेण) चकितानां शफराणां वैयाकुलीं बिभ्रति वैष्णववामनक्षेत्रे विराजमान भो महाप्रभो! भुजबलाढ्यस्य हिरण्यकशिपोर्मात्सर्यमनमुज्ज्वलमद्वितीयकर्कशदेहं विदारितवान् नरहरिरिति त्वामेव खल्वाचक्षते महान्तः॥ [विवरणम्; पाण्ड्यमण्डलललामभूतस्य तिरुक्कुरुङ्गुडिनामकक्षेत्रस्य वैष्णववामनक्षेत्रमिति साम्प्रदायिकी प्रथा प्रथते; तत्र मन्दिरान्तश्चकासतस्तटाकस्य 'करण्डमाडुसरसी' इति चिरन्तनं नाम जागर्ति। तत्तीरे तालद्रुमविशेषोऽपि चिरन्तनः। श्रीरङ्गक्षेत्रे पुन्नागतल्लजस्येव क्षेत्रेऽस्मिन् तालद्रुमविशेषस्यास्य प्रशस्तिरवगन्तव्या॥ ... (६२)

६३. (नन्निरुन्दु योगनीति) योगसंसिद्धिमवाप्नवतां योगिनां हृदयकुहरमाविश्य तान् विधूतकल्मषानाकलयन् भो देवदेव! शैलोपमेयप्राकाराश्रिते पाण्डवक्षेत्रे उरगक्षेत्रे वेगाक्षेत्रे च क्रमश उपवेशनमवस्थानं शयनं च ते परमकृपां व्यनक्ति॥ [विवरणम्—पाण्डवक्षेत्रादित्रितयं काञ्चीपुरे विराजमानम्। पाण्डवदूतभगवदालयः पाण्डवक्षेत्रमित्युच्यते; त्रिविक्रमभगवदालय उरगक्षेत्रमित्यभिधीयते यत्र भगवानुरगरूपी च विराजते; यथोक्तकारिभगवदालयो वेगाक्षेत्रमिति व्याह्रियते॥] ... (६३)

६४. (निन्नदेन्दैयूरहत्तु) भगवत उरगक्षेत्रेऽवस्थानम् पाण्डवक्षेत्रे उपवेशनम् वेगाक्षेत्रे शयनं च मम सत्तायाः प्राक्तने काले; तदात्वे न मया ज्ञानजन्म लब्धमासीत्; तल्लाभादनन्तरं नाहं विस्मृतवानस्मि; ततस्स भगवान् ममैव मनसि स्थित्युपवेशनशयनानि वितनुते॥ [विवरणम्—तेषु दिव्यदेशेषु यावानभिनिवेशो भगवतः तावान् परमभक्तानां हृदयेऽपि भवतीति व्यञ्जना परमतात्पर्यमिह॥] ... ... ... ... ... (६४)

६५. (निर्पदुमोर्वेर्पहत्तु) अद्भुतज्ञानशक्त्यादिकः फणिपतिशायी जगत्कारणभूतो माधवः श्रीवेङ्कटाद्रौ तिष्ठति, परमव्योमशब्दाभिधेये श्रीमति वैकुण्ठे निषीदति; महत्तरतरङ्गमालासंकुले क्षीराब्धौ शेते इति यत् तदिदं मम सत्ताविरहकाले समभूत्; अधुना तु ममैव मनसि स्थित्युपवेशनशयनानि संपद्यन्ते तस्य॥ ... ... ... (६५)

६६. (इन्नुशादल निन्नुशादल) जगति सद्यो म्रियन्ते केचित्; कियन्तंचन काल स्थित्वा म्रियन्तेऽपरे; किन्तु न केऽपि सुदीर्घकालजीविनः इत्येतत्प्रत्यक्षमाणा अप्यविवेकिनो जना लोकविक्रान्तचरणारविन्दचिन्ताविमुखा अर्चिरादिमार्गप्राप्यपरमपदप्रवेशभाग्यविधुराश्च ताम्यन्तीति हन्त किमेतत्॥

६७. (शण्डमण्डलत्तिनूडु) भास्करमण्डलमध्यसरण्या दिव्यं धाम निषेव्य तत्र भक्तिफलभूतशाश्वतानन्दं लिप्समाना भो मुमुक्षुजनाः! पुण्डरीकपादस्य भगवतः पुण्यकीर्तीः कर्णकुहरतोऽनुभूय प्रबलपापफलदुःखानुभवदूरगास्समुज्जीवत॥ ... ... ... (६७)

६८. ( मुत्तिरत्तु वाणियत्तु ) सात्विकराजसतामसफलमध्ये सात्विकव्यतिरिक्तफलद्वितयकामुका जघन्यजना लोकविशेषेषु तादृशफलानुभवानन्तरं पुनरपि गर्भवासतो भूलोकमाविश्य देहात्मभ्रमशालिनो व्यामुह्यन्ति ; तेषां तु * गतागतं कामकामा लभन्ते * इत्युक्ताल्लाभादन्यत्र किमपि ; यदि यूयमुज्जीवितुमिच्छथ, शिशिरस्तुलसीस्तबकालंकृतं परमं पुमांसं संकीर्तयत ॥ ... (६८)

६९. ( काणिलुमुरुप्पोलार् ) दृष्टिविषभूतवैरूप्यभरितानि कर्णारुन्तुदापख्यातियुक्तानि भक्तानामभीष्टपूरणायोग्यतादरिद्राणि च दुर्दैवतानि शरणं प्रपद्यमाना भो विवेकान्धा जनाः ! जगन्निदानभूतं परमपुरुषं प्रतिपद्य संसाराख्यमहत्तागुल्मच्छेदनकुशला भवत ॥ ... ... (६९)

७०. ( कुन्दमोडुशूलम् ) कुन्तशूल दण्डलोह मुसलगदासि प्रमुखहेतिभिस्सह दिविषन्निवहे जङ्घाबलं प्रदर्श्य स्वं स्वं स्थानमासेदुषि सति, अथाप्यभिभवितुमागतस्य बाणासुरस्य बाहुसहस्रच्छेदनावसरे जातां वैयाकुलीं हन्त ! त एव देवा वदितुमीशते ॥ ... ... ... (७०)

७१. ( वण्डुलावुकोदैमादर् ) भ्रमरमुखरचिकुरप्रकराया उषायाः ( निजसुतायाः ) साहसमवगत्य कोपमावाह्य अभिभवितुमायातस्य बाणासुरस्य दोस्सहस्रलवनावसरे मुण्डितशिरसि भस्मधारिणि महादेवे तदपत्येषु ज्वरदैवते दुर्गायामग्नौ च पलायितेषु, एतादृशैः कान्दिशीकैस्सह योद्धुं बाऽहमागतोऽस्मीति ह्रिया भगवानद्भुतशक्तियुक्तो मुकुन्दो हि बाणे परमकृपां प्राचीकशत ॥ ... (७१)

७२. ( पोदिल्मङ्गैपूदल ) भगवतो हरेः पद्मा च धात्री च देव्यौ स्तः ; सरसिजासनसंनिविष्टश्चतुर्मुखस्तनूभवः; अर्धनारीश्वरो वृषभवाहनस्तु पौत्रः ; एवं नाम वेदशास्त्रं यद्यदाह तत्परमार्थः ; अन्यथा कैश्चन यदुच्यते शिवपारम्यं तदसत्यम् ॥ ... ... ... ... (७२)

७३. ( मरम्पोदचरन्तुरन्दु ) पुरा कदाचित्सप्तसालनिष्पत्रीकरणाय शरमेकं प्रयुक्तवता, वालिवक्षो विक्षोभणक्षमरूक्षसायकक्षेपकृता च देवाधिदेवेन भगवता स्वकीयान्तरङ्गे विषयीकृता ये त एव शाश्वतपरिपूर्णदिव्यभोगभागिनो भवितारः; स्वर्लोकपालनसामर्थ्यजुषामप्यन्येषां न तादृशभोगभागिता भवित्री ॥ ... ... ... ... ... ... (७३)

७४. ( अरिन्दारिन्दुवामनन् ) वामनस्य भगवतः पादद्वंद्वमुपायोपेयधिया नमस्यतां सतां सुप्रशस्तं ज्ञानं भक्तिसम्पच्च समृद्धे स्याताम्; उत्तरङ्गकलशजलनिधिनिकेतनस्य तस्य भगवतो मङ्गलाशासने निरतानां नृणां सकलदुरितसवासनक्षयो निष्प्रत्यूहः ॥ ... ... ... (७४)

७५. ( ओन्निनिन्नुनत्तवम् ) चित्तस्थेमानमालम्ब्य भूयसीषु जन्मपरम्परासु कर्मयोगमनुष्ठाय भगवतो गुणगणांश्च क्रमशोऽनुसन्धाय मनसः कल्मषाणि व्यपोह्य श्रवणमनननिदिध्यासनपर्वाण्यधिरुह्य अथ परभक्तिपरज्ञानपरमभक्तियुक्तानामेव सतां पुण्डरीकाक्षस्य भगवतो दर्शनं घटेत ; देवदेवानामपि सतां नेतरेषाम् ॥ ... ... ... ... ... ... (७५)

७६. ( पुन्पुलवलियडैत्तु ) इन्द्रियाणां क्षुद्रविषयावगाहनमार्गं प्रतिरोधाय विषयमार्गद्वारे लाक्षामुद्रणमारचय्य सन्मार्गद्वारं समुद्घाटितमाकलय्य ज्ञानरूपां विलक्षणप्रभां प्रज्वाल्य, अस्थिनिकेतनभूतं शरीरमुपशोष्य हृदयमार्द्रमारचय्य परिपक्वविलक्षणप्रेमसम्पदं गाहमाना एव सन्तश्चक्रपाणिं भगवन्तं सदा पश्यन्ति नान्ये ॥ ... ... ... ... ... (७६)

७७. ( एट्टुमेट्टुमेट्टुमाय् ) चतुर्विंशति तत्वनिर्वाहकम् सप्तद्वीपसप्तकुलाचलसप्तसागर-नियामकम् द्वादशादित्यान्तरात्मानं च परमं पुमांसं साष्टाङ्गनमस्कारलक्ष्यमाकलय्य तस्यैव भगवतः परम-मन्त्रभूतामष्टाक्षरीमनुसन्दधते ये ते खलु दिव्यभोगभाजो भवितारः॥ ... ... (७७)

७८. ( शोर्विलादकादलाल् ) कलशजलनिधावहीन्द्रतल्पमधिशयानस्य निखिलहेयप्रत्यनीकस्य भगवतः पादारविन्दे सप्रेमभरमाश्रित्य, विषयान्तरव्यासङ्गासहभक्तिभरितमेकाग्रं मनो दधाना दिव्यमष्टा-क्षरमन्त्रं दृढाध्यवसायपरिकर्मिता ये खल्वधीयते ते दिव्यधामशासनायापि कल्पेरन ॥ ... (७८)

७९. ( पत्तिनोडुपत्तुमाय् ) दशानां दिशानां दशानां च दिशापालकानामन्तर्यामिणि, सप्तानां स्वराणां नवानां च नाट्यरसानां प्रवर्तके चतुर्दशभुवनवर्तिजनतानां श्रेयसे भूयसे दशावतारान कृतवति च भगवति क्षमार्णवे ये भक्तास्तेषामेव मुक्तिपुरुषार्थो निष्पद्यते, नापरेषाम् ॥ ... ... (७९)

८०. ( वाशियाहिनेशमिन्नि ) भगवन ! रासभवर्ष्मणाऽभिभवितुमागतं प्रमदरिद्रं धेनुकासुर व्यपगतजीवितं विधातुमुत्तुङ्गदोर्भ्यां तं स्वादुतालफलोपरि क्षिप्तवतस्तव पादाब्जभक्तेभ्योऽन्येषामलभ्यमेव ह्यमरत्वम् ॥ ... ... ... ... (८०)

८१. ( कडैन्दपार्कडलकिडन्दु ) कदाचिन्मथिते क्षीरपयोनिधौ शयितवतः, कालनेमिनामकं दैत्यं विनाशितवतः, दाशरथिभावे भयविह्वलस्य वाल्यनुजस्य सुग्रीवस्य प्रत्ययकृते सान्द्रसप्तसालतरुनिष्प-त्रीकरणनिपुणस्य श्रीवेङ्कटाद्रिनिवासरसिकस्य च भगवतः पादावेव नित्यमाश्रित्य समुज्जीवत भो जनाः ॥

८२. ( एत्तिरत्तुमोत्तिनित्रु ) अवतारेषु तत्तज्जातीयसाजात्ये सत्यपि गुणविशेषैरत्युच्छ्रितमाहा-त्म्यशालिन ! क्षीरार्णवे फणिपतितल्पमधिशयानस्य भवतो विषये प्रेमभूमभासुरमानसानां विषयान्तरवि मुखानां च सताम् अत्रामुत्र सर्वत्र च सर्वविधं सुखं सुलभं भवेन्ननु ॥ ... ... (८२)

८३. ( मट्टुलावुतण्डुळाय् ) मधुस्यन्दिशिशिरतुलसीस्रगलंकृत भगवन ! अस्यामेव

विभूत्यां विलक्षणभवत्पादारविन्दानुभूतिरूपं भाग्यमुपेक्ष्य, दिव्यं धाम निषेव्य शाश्वतदिव्यभोगाननुभोक्तुं न मे स्पृहा ; अस्यामेव विभूत्यामवस्थाय भक्तिसमाख्यया दाम्ना हृदयं निबध्य निरन्तरनिर्मलानुभवविव-र्धनेन य आनन्द आसाद्यते स परमपदानन्दादप्यभ्यधिको हि ॥ .. ... (८३)

८४. ( पिन्पिरक्कवैत्तनन्कोल् ) हेतिराजविभूषितपाणितलः परमः पुमान् इतोऽपि किं नु मम जन्मसन्ततिं संकल्पयति ? उताहो स्वपादारविन्दयोरेव स्थेयसीं प्रेमसंपदमनुगृह्य नित्यकिङ्करं मां किमु कर्तुं संकल्पयति ? स्वविषयकभक्तिलवलेशदुर्विधस्य विवेकदरिद्रस्य पापीयसो मम विषये भगवच्चि-कीर्षितमिदमिति न जाने हन्त ॥ ... ... ... ... (८४)

८५. ( नच्चरावणैक्किडन्द ) आश्रितविरोधिपूद्वान्तगरलमुरगराजमधिशयान भो नाथ ! त्वत्पादारविन्दयोर्निवेशितं मामकं मानसं निवर्त्य विषयान्तरेषु विगाहयितुं निरङ्कुशस्वतन्त्रस्त्वं समर्थो-ऽसीति जाने ; अद्भुतशक्तियुक्त भगवन ! अर्थये त्वाम् — स्वातन्त्र्यभूम्ना प्राकृतपाशेषु मां प्रवेश्य मास्म व्यामोहय इति ॥ ... ... ... ... ... (८५)

८६. ( शाडुशाडुपादने ) कृष्णभावे शकटशिथिलीकरणनिपुणचरणारविन्द ! यामुने ह्रद-विशेषे कालियविषधरस्य मूर्धनि कलितनर्तन नाथ ! श्रीपाञ्चजन्यालंकृतपाणितल ! मुकुन्द भगवन् ! तव चरणारविन्दद्वन्द्वमनारतं ध्यायतो मम कथमिवाद्यापि नित्यकैङ्कर्यसम्पद्वितरणविरहः ? ... (८६)

८७. ( नेत्तिपेत्तकण्णन् ) ललाटलोचन - सुराधिनाथ - सरसिजासनप्रमुखैरखिलैरपि दिविषद्भिस्सक्रममभिवन्दितपाद ! नाथ ! वेदमय ! एष एव मम द्रढीयानध्यवसायो यद्भवन्तमृतेऽन्यं नकमपि शरण्यं मन्ये ॥ ... ... ... ... ... (८७)

८८ ( वेळ्ळैवेलैवेर्प्पुनाट्टि ) क्षीरपयोनिधौ मन्दराद्रिं मन्थानमारचय्य, तत्र सितदशनराशि वासुकिमहिं मथनदामतया परिवेष्ट्य यदा भगवन्नुत्तरङ्गजलधिमथनमकारि भवता, तदानीमतिकर्कशमहीधर धारककमठरूपमास्थाय दारिद्र्यव्याधिनिवर्तनक्षमौषधभूतां सुधामनुगृहीतवन्तं भवन्तं परमोदारं परमपुरुषमृते नान्यद्दैवतमहं विभावये ॥ ... .... ... (८८)

८९. ( पार्मिहुत्तपारमुन् ) पुरा समिद्धं भूभारमपवारयितुमर्जुनसारथिभावमङ्गीकृत्य सुबहून्याश्चर्यचेष्टितान्यारचय्य प्रतिभटवर्गं व्यापाद्य जैत्रम्मन्यान् महारथान् कौरवान् वीरस्वर्गभाजो विधाय कृत्स्नमाधिराज्यं पञ्चपाण्डव सात्कृतवतो यशस्विनो भवतोऽन्यं देवं नाह माद्रिये भगवन् ! ... (८९)

९०. ( कुलङ्गळायवीरिरण्डिल् ) परमपावन परमपुरुष ! ब्राह्मणादिवर्णचतुष्टये नैकस्मिन्नपि वर्णेऽहमजनिषि; सन्मार्गप्रदर्शकसच्छास्त्रभूतवेदाध्ययनकलामपि न जाने , जितेन्द्रियतायाः अपि दवीयानस्मि-शब्दादिविषय वागुराबद्धोऽस्मि हन्त । अतश्च त्वदीयौ दिव्यपादौ विना नान्या गतिरस्ति मे सत्यम् ॥ ... ... ... ... ... ... (९०)

९१. ( पण्णुलावुमेन्मोळि ) मधुरालापाया असितेक्षणायास्सीतायाः कृते असंख्यान् यातुधानानग्निसात्कृतवन् भगवन् ! त्वदन्यं कमपि रक्षकमहं न जाने ; बन्धुश्च मे नास्ति त्वत्तोऽन्यः कोऽपि इचिरः ; अनन्ताद्भुतशक्तियुक्त स्वामिन् ! नाहं कदाऽपि त्वद्वियोगदुःखं लम्भयितुमर्हः ॥ ... (९१)

९२. ( विडंकुङ्गलळेळडर्त्तु ) ❋ अप एव ससर्जादावित्युक्तरीत्या प्रथमतो जलतत्व मुत्पादितवतः, अथ रामावतारे सिन्धौ सेतुबन्धमारचितवतः, आर्तत्राणपरायणतया सिन्धुमधिशयितवत , कदाचित्सिन्धुं मथितवतः, सप्तर्षभौद्धत्यविध्वंसनपूर्वक मसितेक्षणाया नीलादेव्याः पाणिग्रहणमारचितवतश्च गोपालकृष्णस्य तव पादौ शरणं प्रपन्नं माम् अभयदानेनानुगृह्णातु भवान् ॥ ... (९२)

९३. ( शुरुम्बरङ्गतण्डुळाय् ) इक्षुरससारवत्परममधुर ! क्षीरसागरशयन केशव ! अतिकठिनहृदय रक्षोगणविनाशकसायकप्रेरक शार्ङ्गपाणे ! दाशरथे श्रीरङ्गनाथ ? मधुपभरितशिशिरतुलसीमालाश्रितौ भवतः पादावेव सादरं प्रणमतिमयि परमकृपां प्रकाशययेथाः ॥ ... ... (९३)

९४. ( ऊनिन्मेयवाविनी ) भगवन् रामचन्द्र ! शरीरवर्तिनः प्राणा भवदधीनाः ; ज्ञानमज्ञानं च त्वदधीनम् ; पञ्चगव्यमपि त्वमेव ; तन्निष्ठा परिशुद्धिरपि त्वद्यायत्तते ; नित्यविभूतिर्लीलाविभूतिश्च त्वदधीने ; सागर सारभूतसुधारत्नादिकं च त्वमेव ; अहमपि ननु त्वमेव ; किं भूयसा प्रलपितेन ? सर्वेश्वरस्त्वमसि भोः ॥ ... ... ... ... (९४)

९५. ( अडक्करुम्पुलन्गुळ ) अस्मत्स्वामिन् ! दुर्निग्रहाणि पञ्चेन्द्रियाणि निगृह्य विषयान्तर प्रावण्यं सवासनमपहाय समुपेत्य भवत्कैङ्कर्यैकनिरतं मां यद्यपि भवानुपेक्षितुं कामयमानो मदुज्जीवनार्थकृषिविरतस्सन् विषयान्तरप्रावण्यमेवपुनरुपजनयेत्तथाऽपि क्षीरसागरशायिनं त्वामृते नान्यं कमपि शरण्यं मन्येय ॥ ... ... ... ... ... (९५)

९६. ( वरम्बिलादमायमाय ) स्वाधीननिरवधिकप्रकृतितत्व ! आश्चर्यशक्तियुक्त ! सप्तलोकस्थैरपि जनैस्संमिलितैरनवधिककल्पावधि स्तुतौ कृतायामप्यदृश्यसीमकीर्ते ! भगवन्पुण्डरीकाक्ष !

संसृतिचक्रभ्रमणमद्यैव विनाश्य, तव पादौ प्रपद्य यथाऽहं तत्प्रावण्यैकनिरूपणीयस्स्याम्, तथा त्वं पुष्कलमनुग्रहमाकलयेथाः ॥ ... ... ... ... ... (९६)

९७. (वेय्यवाळिशङ्गुतण्डु) सुतीक्ष्णसुदर्शनपाञ्चजन्य कौमोदकी शार्ङ्गनन्दकालंकृतसुन्दरपाणे! पद्मालयानित्यसंश्लिष्टवक्षस्क! सर्वस्वामिन् श्लेष्माद्याकरशरीरसंबन्धवदेशिकस्सन् भवन्तमनुप्रपद्य यथाऽहमुज्जीयेयम् तथानाम कमप्युपायं त्वमेव मह्यमनुगृहाण ॥ .... ... (९७)

९८. (मरन्दुरन्दुवञ्जमान्ति) अद्भुतशक्तियुक्त परमपुरुष! क्रोधवैवश्यं दूरतःपरिहृत्य विप्रलम्भादिकमवद्यं च सुदूरतो विसृज्य पञ्चानामिन्द्रियाणां विषयान्तरप्रवणतां च परिहृत्य समेधमानत्वत्पाद भक्तिर्दासजनोऽयम् जननमरणरूपमहादुःखमयसंसरणान्निवृत्तः परमानन्दभागी यथा नाम भवेत्तथा नियतमनुग्राह्यः ॥ ... ... ... ... (९८)

९९. (काट्टिनान्शेय्वल्विनै) अतसीगुच्छसच्छाय! नीलावल्लभ भो भगवन्! यमकिङ्करास्तावदुपरितनलोके मदीयानि प्रबलपातकानि संस्मार्य तत्फलानुभवं चावर्जनीयमुद्बोध्य दुस्सहानि हिंसनानि चिकीर्षन्तीति शृण्वतो मे भीर्निर्यथा नाम मोघतां व्रजेत्तथा मदात्मानं त्वया सह संश्लेषितवन्तं मां नित्यसंश्लिष्टमेव कलयेथाः ॥ ... ... ... (९९)

१००. (पिरप्पिनोडुपेरिडरु) अभक्तदुर्ग्रह भगवन्! गर्भवासादिनानादुःखनिवर्तनौपयिकतत्त्वज्ञानदरिद्रान् प्राज्ञम्मन्यान् नीचानपि यथाऽहं समुत्तारयेयम् तथानाम मे भक्तिपोतं प्रयच्छ ॥ [विवरणम्—यद्यपीदानीं मे भक्तिरस्ति, तथाऽपि नैव पर्याप्तिरनया; अधोऽधः पतितान् परानप्यहं यथा भक्त्या समुत्तारयेयम् नादृशीं भक्तिमनुगृहाणेति प्रार्थितं भवति ॥] ... .... (१००)

१०१. (इरन्दुरैप्पदुण्डुवाळि) सागरसवर्णस्वामिन् भगवन्! जयविजयीभव; प्रार्थनापूर्वकमावेद्यमानमिदं मे वचोऽवधेहि; अर्थितार्थपरिदानदीक्षा यदि पुनरस्ति तव; तर्हि प्रदेय एष मे वरः; विषयवीथीषु विसृत्वरं मे मनो यथा स्थैर्यमवाप्य त्वदीयमेव पादपङ्कजं निरन्तरं निध्यायेत्तथा नाम संकल्पय तावत् ॥ ... ... ... ... (१०१)

१०२. (विळिवलादकादलाल्) उत्तरङ्गजलनिधिमधिशयान सर्वेशान! दिव्यवराहमूर्ते जैत्रमहावीर! महति जलनिधौ शिलोच्चयसञ्चयसंपादितसेतुबन्ध! भगवन्! अकृत्रिमप्रेमबन्धेन हृदयं तव पादपद्मे निधाय तदेव नियतं निध्यायतो मम कर्मवासनारुच्छित्त्यापायोपायं कमप्यनुगृहाण ॥ (१०२)

१०३. (तिरुक्कलन्दुशेरुमार्पं) इन्दिरानित्यसंश्लिष्टवक्षस्क! देवदेवदेव! वेदैकसमधिगम्य निर्मलभगवन्! सुवर्णगर्भकालमेघसवर्णविग्रह गोपालकृष्ण! त्वदीयं दिव्यं नाम दिव्यं वपुश्च येनोपायेन सन्ततमहं संकीर्तयितुं प्रभवेयम्, तदनुगृहाण ॥ ... ... (१०३)

१०४. (कडुङ्गवन्दन् वक्करन्) दारुणकबन्ध-दन्तवक्त्र-खर-मुरादीनां शिरोलवनचतुर! विविधायुधपरिकर्मितबाहो भगवन्! शयनासनावस्थानपर्यटनादिषु सर्वास्वप्यवस्थासु भवत्पादारविन्दप्रावण्यनैरन्तर्यरूपमनुबन्धमनुगृहाण ॥ ... ... ... (१०४)

१०५. (मण्णैयुण्डुमिळन्दुपिन्) भुवं संवर्तसमये निगीर्य परस्तादुद्गीर्य महाबलेरवलेपं विलोप्य 'जगतोऽस्य मत्कटाक्षाते धारकमन्यन्नास्ती'ति धिया समयेषु सर्वविधान्यपि रक्षणानि कृतवन् भगवन्! सर्वकालनिर्वाहक अतिमधुरवाचा महालक्ष्म्या नित्यसंश्लिष्ट पुण्डरीकाक्ष! भवतो दिव्यमङ्गलविग्रहादन्यन्न मे किमप्यस्ति ध्येयं वस्तु ॥ ... ... ... (१०५)

१०६. ( करुत्तेदिन्द कालनेमि ) पुरा युद्धोन्मुखं कालनेमिनामानमसुरमुज्जृम्भितं मृत्युमुखं प्रापितवन् ! पञ्चहेतीलसत्पाणितल भगवन् ! व्रजे संजातां महतीं वृष्टिविपदं सद्यस्समुद्धर्तुं गोवर्धनाद्रिमुद्धृतवतस्तव यशसोऽन्यत्र न मे हृदयं मुह्यति ॥ ... ... ... (१०६)

१०७. ( कायृशिनत्त काशिमन्नन् ) भो अस्मत्स्वामिन् ! क्रोधवशंगतः काशीराजो (रुक्मिणीपरिणयावसरेऽभिभवितुमागतो ) दन्तवक्त्रः पौण्ड्रकवासुदेवो माली सुमाली केशी धेनुक इत्येते यथा समूलं व्यनश्यन् तथा नाम कृतवतस्ते पादयोरन्यत्र न कुत्राप्यहं प्रेमभागी भवेयम् ॥ ... (१०७)

१०८. ( केडिलशीर्वरन्ननाय ) सुप्रसिद्धवरबलशालिनोऽश्वतुमुखपश्चमुखयोर्जनपदाभ्यां सह सहस्राक्षजनपदस्यापि साम्राज्यभोगे सङ्कुटिते सत्यपि साक्षान्मुक्तिरूपमहैश्वर्यलाभे समुपस्थितेऽपि भवदनुबुभूषामात्रे मम स्पृहा नान्यत्र ॥ [ विवरणम्—अनुभवदशातोऽप्यनुबुभूषुदशा समुत्कृष्टेति कोऽपि सिद्धान्तो वर्तते ; * दुर्गतावपि जातायां त्वद्गतो मे मनोरथः। यदि नाशं न विन्देत तावताऽस्मि कृती सदा ॥ * इति हि चतुर्मुखोऽप्याह । तदनुसारेण भगवदनुभवकामनादशायामाशातिशयः प्रकटितोऽभूदनया गाथया ॥ ] ... ... ... ... (१०८)

१०९. ( शुरुक्कुवारैयिन्नियै ) अपक्षयहेतुभूतकर्मविरहेऽपि वामनवर्ष्मणा संकुचितमूर्ते ! वृद्धिहेतुभूतकर्मविरहेऽपि त्रिविक्रमवर्ष्मणाऽभिवृद्धमूर्ते ! अवलिप्तानां महाबलिप्रमुखानाम् अहङ्कारममकारादिद्वयगुणनिरासनिपुण ! भो देवदेवेति भवन्तं वेदधना महान्तो महर्षयस्स्तुवन्तीति हेतुना अज्ञोऽहमप्यस्तौषम् ॥ .. ... ... ... (१०९)

११०. ( तूयनायुमन्नियुम् ) मधुपानोत्सुकमधुपभरितशिशिरतुलसीस्रगलंकृत ! विचित्रशक्तिनिधे ! क्षीरसागररूपया शय्यया च सह भक्तचित्तमधिवसन्नम्भोधिसवर्ण ! भगवन् ! जघन्योऽहं पवित्रोऽपवित्रोऽपि वा यत्त्वां संसेव्य संकीर्तये तदिदं सर्वसहिष्णुस्त्वं क्षान्तिलक्ष्यं विरचयन् दयेथाः ॥ ११०

१११. ( वैदुनिन्नै वल्लवा ) सर्वेश्वर भो ! त्वद्विषये यावच्छक्ति निन्दनानि दूषणानि च प्रयुक्तवतां शिशुपालादीनाम् , असमं युद्धमाचरय भवतः कोपान दाहले गतानां च त्वत्पादोपसर्पणं घटत इत्याचक्षते महर्षयः; ततश्च सर्वस्वामिन् ! क्षोदीयसा मया कलितानि दुरितानि गुणतया गृहाण ॥ [ विवरणम्—श्रीविष्णुपुराणे शिशुपालस्य पञ्चतां प्रतिपादयन् पराशरः परमर्षिरेवमाह— ' भगवच्चक्रेण व्यापादितः तत्स्मरणाद्दग्धाखिलाघसञ्चयो भगवता अन्तमुपनीतस्तस्मिन्नेव लयमुपययौ '' इति । तदत्रानुसन्धेयम् ॥ ] ... ... ... ... (१११)

११२. ( वाळ्हळाहि नाळ्हळ् ) हे हृदय ! वासरा अस्मज्जीवितकृन्तननिपुणकृपाणनिर्विशेषमतिपतन्ति ; विविधैर्व्याधिभिश्शीर्यते शरीरम् ; जरा च संवृद्धा ; मुमूर्षुदशा च सन्निहिता; ततश्च भगवत्कैङ्कर्यमेव श्रेय इति द्रढीयांसमध्यवसायमावाह्य भगवन्तं प्रणिपत्य कीर्तयतावत ॥ ... (११२)

११३. ( शलङ्कलन्दशेञ्जडै ) अयि हृदय ! जयजय ; गङ्गाधारिशोणकपर्दशालिनः कालकण्ठस्य कपालपाणेर्भिक्षोर्घोरपातकिनो रुद्रस्य शापप्रशमनाय तुलसीस्रगश्रितस्वकीयवक्षस्स्वकीयवक्षस्स्थलात् सुरभिबिन्दुमनुगृहीतवतः कल्याणगुणनिधेरानन्दमयस्य परस्य पुंसो भजनप्रकारमेव ननु विचिन्तयेथा ... ... ... ... ... (११३)

११४. ( इनर्मायवेट्टुनीक्कि ) अयि भो हृदय ! अवद्यावहमविद्याकर्मवासनारुचिप्रकृतिसंबन्धतापत्रयाख्यमष्टकं विनिवार्य सांसारिकदुःखानि विधूय अर्चिरादिसरण्या च गत्वा दिव्यधामभोगा-

नुभवकुतूहलं यदि वहसि, तर्हि बाह्याबाह्यान्धकारक्षपणनिपुणस्य दंष्ट्राग्रोद्धृतमहीमण्डलस्य महावराहमूर्तेरस्मत्स्वामिनः पादौ विचिन्त्य प्रणिपत्य स्तुहि तावत॥ ... ... (११४)

११५. (अत्तनाहियन्नैयाहि) संसृतिसंबन्धविदूरगो मुक्तिभूमिप्रदश्च भगवान् उच्चावचानेकजन्मसन्ततिविच्छेदनेनास्मत्समुज्जीवनाय पिता च माता च शेषी च सन् अस्माभिस्सह संश्लिष्टोऽभूत्; एवं च सति हे दीनमानस! किमिति त्वं शोकसागरे निमग्नमवतिष्ठसे? [गाथा सैषा * सर्वधर्मानित्यादिचरमश्लोकार्थविवरणरूपेति संप्रदायः॥] ... ... (११५)

११६. (मारुशेयुद वाळरक्कन्) महापचारनिरतस्य राक्षसराजस्य जीवितक्षतये पुरा लङ्कामुपेत्य तां श्मशानभूमिनिर्विशेषामारचय्य प्राप्तविजयो महावीरो भगवान् यन्मामन्तरङ्गकिङ्करसङ्गीचकार, ततश्च यमो न मे प्रभवति—न मत्पापफलप्रदाने स शक्नोति॥ ... ... (११६)

११७. (अच्चनोयोडल्ल) अनन्तकीर्तिराद्यन्तरहितो मङ्गलाशासनपरफणिपतिकृतशयनो वेदगीतश्च भगवान् अच्युतो भीतिमाधिव्याधी बह्वपायास्पदजरां विविधानि जन्मानि तदनुकूलं मनश्च शरीरं च विनिवर्त्यास्मान् दिव्यं धाम ननु कृतसङ्कल्पो विराजते॥ ... ... (११७)

११८. (शोल्लिनुम तोळिर्कणुम्) अयि भो सरसिजवासिनीसहाय! मम नु हृदयं वाग्वृत्त्या कायिकव्यापारेण च मनागपि भेदमविन्दमानम् अविच्छिन्नप्रेमास्पदं सत रात्रौ सायंप्रातरहनि च त्वत्पादारविन्दैकसंसक्तं विषयान्तरस्पृहाविमुखं प्रतिष्ठितं विराजते॥ ... ... (११८)

११९. (पोन्निशूळरङ्गमेय) हेमापगापरिवृतश्रीरङ्गक्षेत्रनिवासरसिक! अतसीकुसुमसुकुमार भगवन्! आकर्णय तावत: मदात्माभिधाने प्रबलपापराशौ त्वद्विषयकानुरागरूपा वल्ली काचिदङ्कुरिता सती त्वत्पादसमाह्वयप्रशस्तपुष्पेण सह संगता तत्रैव स्थेमानमधिगत्य ग्लानिलेशविरहिता विद्योतते॥ ... ... ... ... (११९)

१२०. इयक्करादपलपिरप्पिल) अस्मादृशां संसारिणामुज्जीवनैकतत्परः कालमेघनिभो भगवान् अविच्छिन्नसंसृतिमण्डलादद्य मामुद्धर्तुकामो मत्सविधमुपेत्य स्वात्मना अविनाभूते मयि स्वकीयनित्यज्योतिर्मयदिव्यमङ्गलविग्रहं समाश्लेषयत; अतश्च तदात्मवस्तु चिरन्तनाविद्याग्रन्थिविनिर्मुक्तं सदगाहत महानन्दसन्दोहम्॥ ... ... ... ... (१२०)

इति श्रीभक्तिसारमुनीन्द्रानुगृहीतस्य तिरुच्चन्दविरुत्तसमाख्यस्य दिव्यप्रबन्धस्य

श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यविरचितः संस्कृतविवर्तः समाप्तः॥

श्रीभक्तिसारमुनीन्द्रचरणौ शरणम्॥

श्रीशठकोप यतिवर वरवरमुनीन्द्रेभ्यो नमः॥

॥ श्रीरस्तु ॥

श्री पराङ्कुशपरकालयतिवरवरवरमुनीन्द्रेभ्यो नमः ॥

श्रीभक्तांघ्रिरेणुदिव्यसूरये नमः ॥

सरोयोगिसमारम्भां श्रीपराङ्कुशमध्यमाम् ॥
परकालान्तिमां वन्दे दिव्यसूरि परम्पराम् ॥

श्रीभक्तांघ्रिरेणुदिव्यसूरिप्रणीते दिव्यप्रबन्धद्वितये प्रथमः प्रबन्धः

## श्रीमाला दिव्यप्रबन्धः

# – तिरुमालै –

[ श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यप्रणीत संस्कृतविवर्तसमेतः ॥ ]

[ तनियन् ॥ * मत्तोलुम् वेण्डा मनमे स्तुतिपद्यस्य संस्कृतविवर्तः—पद्यात्मकः ॥ ]

प्राकारावृतरङ्गपत्तनपतेर्गोपालबालात्मनो गोसञ्चारणकृत्यकौतुकभृतः पादारविन्दे शुभे ।
श्रीमालाख्यकृतिं समर्पितवतो भक्तांघ्रिरेणोर्मुनेः भो भो चित्त कुरुष्व कीर्तनमितो
नान्या क्रिया काङ्क्ष्यते ॥

( प्रबन्धव्याख्यानावतारिका ) श्रीभक्तांघ्रिरेणुमुनिवरेण [ तोण्डरडिप्पोडियाऴ्वारसमाख्येन ] दिव्यप्रबन्ध द्वितयमनुगृहीतम् । तत्र प्राथमिकोऽयं श्रीमालाप्रबन्धः; द्वैतीयीकस्तु * तिरुप्पळ्ळियेऴुच्चिनामा प्रबोधनप्रबन्धः । आद्यस्यास्य दिव्यप्रबन्धस्य प्रभावस्सत्यं वाचामभूमिश्चतुस्सहस्रदिव्यप्रबन्धमध्ये । "श्रीमालां यो न जानाति श्रीपतिं नैव वेद सः" इति सुप्रसिद्धेनाभाणकेन प्रभावोऽस्य परिज्ञेयः । [ "तिरुमालैयरियादवन् पेरुमाळै यरियान्" इति द्राविडी प्रथा ॥ ] सोऽयं दिव्यप्रबन्धश्चतुस्सहस्रदिव्यप्रबन्धवर्गे प्रथमसहस्रे सप्तमत्वेन परिगणितः । एकमेव विषयमधिकृत्य बहुगाथाकीर्तनं यस्मिन् प्रबन्धे भवति स मालाशब्देन व्यवह्रियतइति द्राविडसंकेतः । श्रीरङ्गनाथविषयकश्चायाम् । श्रीशब्द उपचारार्थे प्रयुक्तः श्रीरामायणम् श्रीभागवतम् श्रीभाष्यमित्यादाविव । भगवतः पुष्पमालावत्परमभोग्यत्वाच्च श्रीमालेति नाम सुतरामुपपद्यते । संस्कृत भाषामयस्य श्रीविष्णुधर्माभिधानस्य पुराण ग्रन्थस्य सारसंक्षेपरूपोऽयं दिव्यप्रबन्ध इति पूर्वाचार्या आशेरते । * हरेर्नामैव नामैव नामैव मम भेषजम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ * इत्याद्यनेक प्रमाणानुसारेण भगवन्नामसंकीर्तनमेव कलियुगेऽस्मिन्नप्रतिममुज्जीवनसाधनमिति सिद्धान्ताविष्करणमस्य दिव्यप्रबन्धस्य परमं प्रमेयम् । पाण्डवेभ्यः पश्चात्तनः शतानीको नाम नरपतिः सत्कुलप्रसूतत्वेन परमसात्त्विकस्सन् भुवं पालयन् कदाचित् शौनकभगवतस्सविधमुपेत्य 'उदरम्भरीणां संसारिणामुज्जीवनोपायः कश्चिदव्यभिचारी प्रकाशयितव्यः' इति विज्ञापयन् भगवन्नामसंकीर्तनमेव समुत्तङ्गं साधन मिति तेन प्रतिबोधितोऽभूदित्यमुमंशं प्रकाशयता श्रीविष्णुधर्मेण सह दिव्यप्रबन्धस्यास्य साम्यं सूपपन्नम् ॥ पञ्चचत्वारिंशद्गाथात्मकोऽयं दिव्यप्रबन्धः श्रीरङ्गनाथैकविषयकः प्रबन्धः परमं पातिव्रत्यं प्रख्यापयति; इतरदिव्यदेशाधीशस्य भगवतो मनसाऽप्यस्मरणात् ॥

— इत्यवतारिका —

---

# भक्ताङ्घ्रिरेणुसूरिप्रभावः

धनुर्मासि शुभे ज्येष्ठाभेऽवतीर्णस्य भूतले । भक्ताङ्घ्रिरेणोर्महिमा कथ्यते भक्तमुक्तये ॥

चोलमण्डले * पुळ्ळम्पूदङ्गुडिनामकदिव्यदेशसन्निकृष्टे मण्डङ्गुडिनाम्नि महिते स्थले धनुर्मासि ज्येष्ठोडुनि शुभे पुरश्चूडवैदिकब्राह्मणोत्तमसन्ततौ संजज्ञे कोऽपि महान् । भगवत्कटाक्षवीक्षामहिम्ना समुत्पन्नोऽसौ दिव्यशिशुः पितृपादैर्विप्रनारायण इति कृतनामा कालेकाले चौलोपनयनादिसंस्कृतः साङ्गोपाङ्गवेदाध्ययनसंपन्नः शुद्धसत्त्वैकनिधिः विज्ञानवैराग्यशेवधिश्च सन् विश्वतोविसृत्वरविपुलख्यातिर्विरराज ॥

रहस्यत्रयार्थनिष्ठागरिष्ठोऽयं महात्मा भगवद्भागवतवरिवस्यैव परमं श्रेय इति प्रतिपद्यमानो गृहस्थाश्रमस्वीकारविमुखः प्रथमाश्रमैकप्रावणचेताः श्रीरङ्गनगरीमधिगत्य तत्र भोगिभोगशयनीयशायिनं माधवं संसेव्य तदीयनिस्समाभ्यधिकसौन्दर्यभूमसमाकृष्टचेतास्तत्रैव नित्यवासं सङ्कल्प्य श्रीविष्णुचित्तसूरिवदेव नित्यं भगवते पुष्पमालिकासमर्पणकैङ्कर्यसमुत्सुकः पुष्पोद्यानमतिहृद्यं परिकल्प्य तत्र संवर्धिताभिस्तुलसीपुष्पमालिकाभिरच्युतं प्रीणयन् स्वाश्रमोचितभिक्षाचर्यया देहयात्रां निर्वहन् सर्वजनप्रशस्यसदनुष्ठानवैभवो विरराज भक्तानां भागवतानामनवधि मोदमावहन् ॥

एवमतिपतति पावनः कालो भक्तप्रवरस्यास्य । अथ कदाचिद्देवदेवीनाम्नी काचन निरवधिकसौन्दर्यलावण्यशालिनी पण्यस्त्री श्रीमदुत्तमभगवदालयान्तिकनिवासिनी सह सखीभिर्निचुलापुरीमुपेत्य तत्र चोलभूपतेस्सदसि स्वकीयं नृत्तगीतादिप्रागल्भ्यमप्रतिमं प्रदर्श्य व्यामोह्य भूयसीं बहुमतिमुपलभ्य सावलेपं प्रतिनिवर्तमाना विप्रनारायणस्यास्य हृद्यमुद्यानं पथि समालोक्य तदीयरामणीयकेन प्रसभमन्तराकृष्टा संनिवेशानुपवनस्य तस्य सुमनोहरानवलोक्य तत्रैव नित्यवासं कामयमाना स्वातन्त्र्येण पुष्कलेन निवासाय तत्स्वामिनं स्वाधीनं चिकीर्षन्ती ततस्ततः सविभ्रमगति चक्रे । प्रैक्षत च तत्रैव क्वापि कोणे आलवालपरिष्करणसलिलसेकादिकार्यव्यग्रं द्वादशोर्ध्वपुण्ड्रविलसद्दिव्यगात्रं तुलसीनळिनाक्षमालाविलसदुरस्कं तेजसां राशिमूर्जितमिव स्थितं विप्रनारायणम् । प्रेक्ष्य च सरभसमन्तिकमुपसृत्य स्वदेहसौन्दर्यातिशयं तस्मै प्रदर्श्य विभ्रमांश्च विविधान् विदधती सा जितेन्द्रियाग्रगण्येन तेन तृणवत्कृता नैव मनागपि वीक्षिताऽभूत् । अथापि सेयं स्वकीयामुत्कण्ठां न लेशतोऽपि विजहौ । कथञ्चिदप्येनं स्वाधीनयेयमेव त्वरमिति सुदृढाभिनिवेशा बभूव । स तु महान् कैङ्कर्यष्वेव गाढावगाढकरणग्रामश्चास्तमितान्यभावश्च विलसतिस्म ॥

अथ सा स्वकीयान्याभरणानि सर्वाण्यवमुच्य सखीवर्गाय प्रदाय भगिनीप्रमुखं सर्वमपि जनं स्वस्वावसथगामिनं कृत्वा स्वयमेकाकिनी काषायाम्बरधारिणी सती सूरिवरस्यास्य सन्निधिमुपसृत्य पादाब्जयोश्च प्रणिपत्य, कात्वम् ? किमर्थमिहागतेति तेनानुयुक्ता ' पूर्वजन्मकृतदुष्कृतभूम्ना साऽहं गणिकाकुले समुत्पन्ना; तत्कुलानुरूपवृत्त्यवलम्बनाय जनन्या निर्बद्धाऽहं सर्वथा तत्र विहतस्पृहा सर्वमपि बन्धुवर्गमपहाय परमभागवताग्रेसराणां तत्रभवतामेव पादारविन्दपरिसरे स्थित्वा स्वरूपानुरूपवरिवस्यां विधाय समुज्जीवेयमिति समिन्धानकुतूहला समागममिह । तदपारकरुणावरुणालयास्तत्रभवन्तः अनाथामिमां मामकम्पानुकम्पापात्रतां नेतुमर्हन्ति ननु । अत्र च आलवालपरिष्क्रिया सलिलसेचनं कुसुमापचयो माल्यग्रथनमुद्यानपालनमित्यादिषु कर्मसु यथार्हं दासीमिमां नियोक्तुं प्रभवन्ति श्रीमन्तः। पदारविन्देन प्रेरितं कर्म शिरसा प्रतिगृह्य सादरं सुष्ठु निर्वर्तयितुमस्मि सज्जा समुत्सुका च । अवश्यमनुग्राह्योऽयं जनः; अन्यथाशङ्कागन्धोऽपि मा भून्मयि महानुभाव ! ' इति सविनयभरं व्यजिज्ञपत । आकर्णितैतद्वचा विप्रनारायणोऽस्याः कपटमयं मानसमजानन् प्रकृतिसिद्धेन निजेनार्जवेन तस्या वचस्सूनृतं प्रतियन् अस्या

इहावस्थितिरुपवनकैङ्कर्यसौकर्याय कल्पेतेति कलयन् तत्प्रार्थनाम् ओमित्यङ्गीकृत्य कैङ्कर्येषु नियुङ्क्तेस्म; सा च स्वामिनोऽस्य भुक्तशिष्टं भुञ्जाना समुचितानि वरिवस्यनानि वितन्वाना श्रद्धाभक्तिसंपत्समृद्धिमाविष्कुर्वाणा उपवनसंस्कारमसमाभ्यधिकमुपबृंहयन्ती स्वात्मानमतिमात्रविस्रम्भभाजनतामनैषीत। कालक्रमेण तं लक्ष्यतां निनाय मम माया दुरत्ययेति प्रथितायाः मायायाः। अथ च स्वगृहं गता सा विस्मृतवती विप्रनारायणम्।

अस्यामवस्थायां श्रीरङ्गराजदिव्यमहिषी स्वात्मनाथमभिवीक्ष्य संजगादैवम्;—'भगो प्रियवल्लभ! बहुतिथं कालमावयोरनुपमानि कैङ्कर्याणि कृतवान् विप्रनारायणो हन्त स्ववृत्तिं विसृज्य वर्तते हि विगत विप्राचारः; हा बत! काम्विदियं ते विचित्रा लीला? हा हन्त परमभक्तानपि किमेवं मायया बध्नासि? अलमियता कालेन प्रपञ्चितया मायया। अथेदानीं यथापुरमनुग्रहैकभाजनं तमाधाय नित्यकैङ्कर्यैकनिरतं स्वीकुरुष्व सद्यः' इति प्रार्थयतेस्म। श्रियःपतिश्च मन्दं स्मयमानो भवतु तावदिति प्रतिभाष्य सद्यः कामपि विचित्रघटनामजीजनत्।

अयमेव स्वयं मानुषं वपुरास्थाय स्वकीयदिव्यालयीयपात्रेषु कमप्यनर्घं सौवर्णकलशमादाय तस्या देवदेव्या सदनमासाद्य कवाटमुद्घाटयेति कण्ठनादमदर्शयत। तया चाथ कस्त्वं कुतस्त्यः कुतस्त्यः किमर्थमत्रागत इत्यनुयुक्तोऽसौ मायामानुषः 'रङ्गशायिदासनामाऽहमस्मि; विप्रनारायणेन प्रेषितोऽत्रागतोऽस्मि सोपहारः; क्षिप्रमुद्घाटय कवाटम्' इत्युदैरिरत॥ सा चागत्य कवाटमुद्घाट्य को विशेष इत्यनुयुञ्जाना तेन सौवर्णकलशमुपलम्भिताऽभूत, अशृणोच्च विप्रनारायणस्येदमुपायनमिति वचनम्। श्रुत्वा चैतदत्यादरेण सा पप्रच्छ कुत्रेदानीं वर्तते स इति। प्रत्युवाच स एवं स्वमावसथमधिवसति स इति। तर्हि तमिहाहमाह्वयामीति कथयेत्यभिधाय सहैमकलशा विवेशान्तः। भक्तसुलभो मानुषरूपी भगवानथ न्यलीयत; रात्रिश्च सा व्यपयाय। प्रभाते यथायथं श्रीरङ्गनाथभगवन्मन्दिरे प्रोद्घाटिते सौवर्णकलश एकः प्रमुषित इति वार्ता व्यजम्भत। देवालयाधिकृतो अन्ततो राजद्वारेन्यवेदयन् स्तेयविचारणायै। राजभटाश्च सद्यो भगवदालयमभ्येत्य पूजकपरिचारकादीन प्रसभमवस्कन्द्य भृशमपीडयन। सर्वथा ते निरपराधा इति सिद्धे, बहिस्तत्र तत्र शोधनाय रहस्यभटा न्ययुज्यन्त। प्रनष्टं तत्सौवर्णपात्रं देवदेवीसदनमुपागतमस्तीति तच्चेटीमुखादाकर्ण्य तत्रागत्य तदुपलभ्य तद्गृहस्थितान् सर्वानपि जनानागस्विभावेन राज्ञः पुरत उपस्थापयामासुः।

अथ राजाऽन्वयुङ्क्त देवदेवीं भगवतः पात्रमिदं कथमिव त्वयाऽपहृतमिति। सा प्रत्युवाच—महाप्रभो! नाहं जानामि कस्येदं पात्रमिति; विप्रनारायणेनोपहृतमिति कथयन् रङ्गशायिदासनामा कोऽपि दूतस्समानीय मद्धस्ते प्रादात्। एतावदेव जानाम्यहम्, नेतोऽधिकमन्यत्किमपीति। अथ परिबृढो विप्रनारायणं पप्रच्छ वस्तुतस्त्वमेव खलु तस्करोऽसीति। सोऽपि बाष्पपर्याकुलमुख आह—नाहं किमपि वेद्मि। अकिञ्चनस्य मम दूतोऽपि नास्ति कश्चिदिति। शुश्रुवानेतत्सर्वं भूपतिः पर्यालोच्य वेश्याया उचितदण्डं विधाय अथ विप्रनारायणस्य च समुचितं दण्डं विधित्सुस्तं कारागारबद्धमकार्षीत।

अथ निशायां श्रीरङ्गेश्वरी स्वं प्रेयांसमवलोक्य 'भगवन्! लीलाविषयो माभूत्तव विप्रनारायणः केवलं कृपायाः पात्रं भूयात्' इत्यर्थयते स्म। भगवान् रङ्गरमणस्तथेत्यङ्गीकृत्य सद्यो भूपतेस्तस्य स्वप्ने दर्शनं दिशन् "विप्रनारायणस्य कर्मक्षयाय वयमेव सौवर्णकलशं तद्दासनाम्ना तद्वनिताहस्तं प्रापयाम; वस्तुतो नायं तस्करः, परिशुद्धममुं विद्धि" इत्यबोधयत्। अथ जागरितो जगतीपतिः स्वप्नोदन्तमिमं सचिवप्रमुखेभ्यो विस्मयविवशो विनिवेद्य विप्रं बन्धनाद्विसृज्य विधाय चोपचारान् प्रजिघाय निकाय्यम्।

संसारनिगलबन्धाद्विमोकस्य पिशुनेनेन कारागारमोक्षेण सन्तुष्यन्नपि विप्रो हा हन्त महीयान् कालो मुधा व्यतीत इति भृशं विषीदन् अनुशयानश्च सन् * अनुतापाकुपरमात्प्रायश्चित्तोन्मुखत्वतः। तत्पूरणा चापराधास्सर्वे नश्यन्ति पादशः * इति शास्त्रार्थमनुचिन्तयन् ज्ञानानुष्ठानशेवधीनां महानुभावानां परिसर-

मुपसृत्य स्वात्मनो दोषानशेषानाविष्कृत्य समुचितप्रायश्चित्तविधानं प्रार्थ्य, परमभागवतश्रीपादतीर्थनिषेवणमेव निरुपमं प्रायश्चित्तमिति प्रतिपद्यमानस्तथैव निर्वर्त्य विशुद्धिं विजगाहे । अथ च यथापुरं भगवद्भागवतपरिचर्यासु प्रवणो भगवद्दास्यादपि भागवतदास्यमेव परमं श्रेय इति सुदृढमवधारयन् अनुष्ठानमुखतश्च तामेव निष्ठां गरिष्ठां विश्वतः प्रख्यापयन् नाम्ना च भक्तांघ्रिरेणुरिति पप्रथे । यतोऽयमहेतुकाप्रतिमभगवत्कटाक्षभूम्नैव करतलामलकीकृततत्त्वहितपुरुषार्थस्सर्वज्ञ आसीत्तत एव श्रीपराङ्कुशादिदिव्यसूरिगोष्ठीगणनामपि लम्भितोऽभूदसौ भगवदाज्ञया । भक्तानां नित्यानुसन्धेयं विश्वप्रसिद्धवैभवशालि दिव्यप्रबन्धद्वितयं चानवगृह्णादसौ दिव्यसूरिवरः तिरुमालै, तिरुप्पळ्ळियेळुच्चि इतिप्रथितम् ॥

भक्तांघ्रिरेणुसूरेर्वैभवमिदमादरेण हृदि दधताम् ।
भगवद्भागवतांघ्रिषु भक्तिर्विपुलाऽमलाऽतुला विलसेत् ॥

इति श्रीभक्तांघ्रिरेणुसूरिवैभवं समाप्तम् ॥

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ।

## ॥ श्रीभक्तांघ्रिरेणुदिव्यसूरिप्रणीता श्रीमाला ॥

१. (कावलिल् पुलनै वैत्तु) त्रैलोक्यनिगरणोद्गरणजगन्निदानभूत परमात्मन् ! श्रीरङ्गमहानगरी नाथ भो! भवदीयनामसंकीर्तनप्रभावनिबन्धनमस्मदीयमवलेपभूमानमाकर्णयैथाः; इन्द्रियाणि कारागारे स्थापयित्वा कल्मषराशिं सुदूरतस्समुत्सार्य यमकिङ्कराणां मूर्धसु ताण्डवमारचयामो जयघोषणापूर्वकम् ॥ [ विवरणम्—इन्द्रियाणां कारागारे स्थापनं नाम स्वच्छन्दचारिणां तेषां वशीकरणम् । विषयवीथीषु निरर्गलं परिभ्रमत इन्द्रियाश्वान्निर्जित्येति जितेन्द्रियत्वमुक्तं भवति । "इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया । स्मरद्भिरिव तद्वैरमद्य तैरेव निर्जितः ॥" इति मन्दोदरीवचसा रावणस्य इन्द्रियकर्मकजयः पुरस्तादासीत्; तत्कर्तृकजयः परस्तादासीदिति बोध्यते; अस्य तु सूरिवरस्य इन्द्रियकर्तृकजयः पूर्वम्; तत्कर्मकजयः पश्चादिति प्रतिपत्तव्यम् । तदिदमदर्शायेन चरित्रेण सुगमम् । यानीन्द्रियाणि पुरा मां कारागारे स्थापयित्वा परिभवमुदपादयन् तान्येवेन्द्रियाण्यहमधुना कारागारे निधाय तेषामवज्ञामुत्पाद्य विधूतकिल्बिषोऽभूवमिति तावदाह सूरिवरोऽत्र । मूले "कावलिल् पुलनै वैत्तु" इत्यस्य वाक्यस्य 'इन्द्रियाणि जित्वा' इत्यर्थ इव, 'इन्द्रियाणि स्वच्छन्दं विसृज्य' इत्यर्थोऽपि भवितुमर्हति । इन्द्रियाणां यथा रक्षा न भवेत्तथा नाम समुपेक्ष्य. इत्यर्थ इह मूलस्थशब्दसन्निवेशतः क्लिष्टोपलब्धिकोऽपि तात्पर्यस्वादुताभूम्ना परिग्राह्य इत्याचार्या आशेरते । जितेन्द्रियत्वबलेन लभ्यं पुरुषार्थमहं तद्विपर्ययेणापि लब्धवानस्मीति हि तात्पर्यं सिध्यति; एतेन च भगवन्नामसंकीर्तनप्रभावातिशयः प्रतिपादितो भवति । पथ्यनियमपूर्वकमौषधसेवां चक्रुषामप्यनिवृत्तमामयमहं पथ्यनियमलेशविधुरोऽपि सन् न्यवर्तयमिति यदि कश्चिदभिदध्यात्तर्हि वचसाऽनेन भेषजस्य वैभवातिशयः खलु प्रख्यापितस्यात्; एवमेतत ॥ * अथ च "यमकिङ्कराणां मूर्धसु ताण्डवमारचयाम" इत्यनेन—* स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ * * रमादयित ! रङ्गभूरमण ! कृष्ण विष्णो हरे त्रिविक्रम जनार्दन त्रियुग ! नाथ नारायण । इतीव शुभदानि यः पठति नामधेयानि ते न तस्य यमवश्यता

नरकपातभीतिः कुतः ॥ * इत्यादि प्रमाणशतप्रतिपन्नं श्रीवैष्णवानां यमवश्यतादवीयस्त्वं प्रतिष्ठापितं भवति । "ताण्डवमारचयाम" इति बहुवचनम्—भगवन्नामसंकीर्तनफलं न केवलं स्वात्मनैकाकिनैव प्राप्तम्; अपितु साक्षात्परम्परया च स्वानुबन्धिभिरपि तत्प्राप्तमिति द्योतनाय ॥ ]

अस्या गाथायास्तात्पर्यसारसंग्राहकोऽयं श्लोकः—

यैरिन्द्रियैः परिभवं गमितोऽभवं प्राक् तान्येव संप्रति विजित्य विधूय पापम् ।
श्रीरङ्गनाथ ! यमकिङ्करमूर्ध्नि नृत्तं कुर्वे त्वदीयशुभनामकथावलेपात् ॥ १ ॥

२. ( पच्चैमामलैपोल्मेनि ) मरकतमहाचलसन्निभदिव्यमङ्गलविग्रह ! विद्रुमाभदिव्याधर ! सरसीरुहाक्ष ! अच्युत ! नित्यसूरिनाथ ! गोपालकुलडिम्भ ! इत्येवमुच्चारणरूप परमभोग्यानुभव एव मे शाश्वतिको भूयात्; अर्चिरादिसरण्या परमपदानुभवसाम्राज्ये लब्धेऽपि न तत्र मे स्पृहा भगवन् श्रीरङ्गनाथ ! ॥ [ विवरणम्—भगवन्नामसंकीर्तनप्रभावातिशयमधस्तनगाथया विज्ञापितवन्तं सूरिमेनमुद्दिश्य भगवता प्रोक्तम्—आर्य ! मन्नामसंकीर्तननिरतेभ्यः परम भक्तेभ्यो मया वैकुण्ठो नाम दिव्यलोकः प्रदीयते; तमधुना तुभ्यमपि दित्सामीति; तत्र प्रत्युक्तिगाथा सैषा । * स्नेहो मे परमो राजन् ! त्वयि नित्यं प्रतिष्ठितः । भक्तिश्च नियता वीर ! भावो नान्यत्र गच्छति ॥ * इति श्रीरामभक्ताग्रगण्येन मारुतिना यथोक्तं तथैवोक्तमिहापि । भगवदनुभवापेक्षयाऽपि नानाविध प्रत्यूहप्रचुरे प्राकृतमण्डलेऽस्मिन्नेव स्थित्वा क्रियमाणोऽनुभवः श्रेयानिति द्योतितं भवति । * त्वं चेत्प्रसीदसि तवास्मि समीपतश्चेत त्वय्यस्ति भक्तिरनघा करिशैलनाथ ! संसृज्यते यदि च दासजनस्त्वदीयः संसार एष भगवन्नपवर्ग एव ॥ इत्यूचुषा निगमान्तगुरुणा चैतदेव विवृतं भवति ॥

श्लोकः ॥ मरतकगिरिनिभसुभगतनो ! सरसिजसुमसमनयन ! हरे ! ।
इति वच इह जहदुपरि गतिं न हि मम मन इदमभिमनुते ॥ २ ॥

३. ( वेदनूल्पिरायम् नूरु ). * शतायुर्वै पुरुष इति वेदोक्तप्रक्रियया मनुष्याः शतं हायनान् परिपूर्या प्राणन्तीति स्वीकारेऽपि पञ्चाशद्वत्सरात्मकमायुषोऽर्धं निद्रया व्यपैति; अवशिष्टमर्धं तु शैशवोचितेनाज्ञानेन बाल्योचितेन क्रीडनेन यौवनोचितेन धूर्तचेष्टितनिकरेण व्याधिक्षुधाजरादिविविधदुःखानुभूत्या च व्यपगच्छति; ततश्च पुनर्जन्म न कामये भगवन् श्रीरङ्गनाथ ! ॥ [ विवरणम्—अधस्तनगाथायां श्रीवैकुण्ठभोगे वैराग्यं विशदीकृतम्; तेन च " पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे पतनम् " इति गर्हमाणं संसरणं काङ्क्षितं भवति सूरिणाऽनेनेति केचन भावयेयुरपि; तादृशीं भावनामपासितुमवतरति सैषा गाथा । प्रतिबन्धगन्धविरहे सति लीला विभूत्यामस्यामेव भगवदनुभवः श्रेयानेव ; परंतु प्रतिबन्धकभूयस्त्वसद्भावात संसरणमत्यन्तहेयमेवेति वस्तुस्थितिः प्रतिपाद्यते गाथयाऽनया । यद्यपि वेदे * शतायुर्वै पुरुष इति मानुषाणां शतहायनजीवित्वमाम्नातमस्ति, तथाऽपि तथा नाम जीवन्तो जना अतितरां दुर्लभाः ; भाग्यभूम्ना केचन तथा जीवन्तीत्यभ्युपगमेऽपि, तस्मिन्नायुषि निष्फलतया विपरीतफलकतया च व्यपगच्छन् काल एव भूयानहह ! । * अर्धं निद्रा हरतीति तु सत्यमुक्तं प्रामाणिकैः ; दिवा निशि च भूयो भूयो निद्राविवशानां जनानामर्धमायुरपनीयते निद्रयेति न वितथम् ; तद्गच्छतु नाम ; अवशिष्टमर्धं श्रेयसे किमु कल्पत इति विमर्शे हन्त ! तदपि न ; ज्ञानभक्ति प्रवृत्तियोग्यतागन्धविरहितः शैशवबाल्यादिरूपावस्थात्मको व्यपैति भूयान् कालः यौवने वयसि समुपस्थिते विषयलोलुपतया अनर्थमयं तदतिपात्यते; एवं गच्छति काले अचिन्तितमुपनमति जरा नाम; मध्ये च क्षुधया व्याधिभिश्च मुधा नीयते भूयान् कालः ; सांसारिकैराधिभिश्च तथा; एवं च भगवद्भागवतप्रावण्येन श्रेयस्समार्जयितुमवकाशो दुर्लभ इति किमु वक्तव्यम् ? सर्वथा संसरणं मा भूदित्युपेक्षणमेव वरम्—इत्युक्तं भवति ॥

श्लो० वेदोक्तमायुर्यदि पूर्णमेव लभ्येत कैश्चिन्ननु रङ्गबन्धो ।
तदर्धमेति निद्राशिशुताजराक्षुद्व्याध्यादिभिस्तज्जननं न लिप्से ॥ ३ ॥

४. ( मोय्त्तवल्विनैयुळ् ) महापापिनामग्रगण्यः क्षत्रबन्धुरपि हि वर्णत्रितयशालि–नामविशेषानुसन्धानेन समुन्नतां पदवीमन्वविन्दत; स्वल्पानुकूल्यशालिनामस्मादृशामपि विषये परमकृपां प्रदर्शयितुं क्षमं श्रीरङ्गनाथाभिधानम् आश्रितव्यामुग्धं भगवन्तं शेषिणं लब्ध्वाऽपि हन्त! बहवस्संसृतिबद्धास्ताम्यन्तीति बहु शोचनीयमेतत् ॥ [ वि. एतद्गाथाप्रभृति भगवन्तं चतुर्दशगाथापर्यन्तमेकादशसु गाथासु भगवद्विमुखानधिकृत्य स्वकीयं निर्वेदमतिमात्रं प्रकाशयति सूरिवरोऽसौ। परदुःखासहिष्णुता हि दिव्यसूरीणां परमो धर्मः। भूमौ संसारिणो जना विविधदुःखभाजनभूताः परिक्लिश्यन्त इति प्रत्यक्षमेतत् ; तदनुसन्धानेन विकृतचेतसां महताम् कदाचित्तेषां गर्हणम् कदाचिदात्मनि विस्मयः कदाचिन्निर्वेदश्च समुपजायते। सैव प्रणाली दृश्यत उपरिष्टाच्च दशसु गाथासु । भगवद्विषये स्वयं प्रवणानां भक्तप्रवराणां पापपूरितात्मसंसारिजनविषयिणी चिन्ता कथमिव जायत इति शङ्का भवति केषाञ्चित ; श्रूयताम्। भगवदनुभवपरा महान्तस्तावत् अनुभवावसरे * एकस्स्वादु न भुञ्जीत भुञ्जीत बहुभिस्सह * इत्यनुसन्दधानास्सन्त इतरानवेक्षन्ते ; तदात्वे स्वसहयोगार्हास्सज्जना नोपलक्ष्यन्ते ; भगवद्भागवतविमुखाः पृथग्जना एव प्रायशो विलोक्यन्ते ; वैषयिकभोगसक्त्या दुःखमयानां तादृशां पामराणा मनुचिन्तनं मनोविकृतिमवश्यमुपजनयत्येव । तथाचैतादृशगाथावतारो भवत्यवर्जनीयः। भगवन्नामोच्चारणे अधिकारिनियमो नास्ति ; सर्वाधिकारिकं तदिति प्रकाशयितुं क्षत्रबन्धूपाख्यानमुदाहरति सूरिरस्यां गाथायाम्। ब्राह्मणाधमो ब्रह्मबन्धुरिति यथोच्यते तथा क्षत्रियाधमः क्षत्रबन्धुरित्यभिधीयते। क्षत्रबन्धोश्चरितसंग्रह इत्थम्—मूर्त इव पापराशिरसौ स्वकीयक्रौर्यातिशयेन जननीजनकजायापुत्रमित्रादिभिस्सुदूरतः परिहृतो वनेचरो भूत्वा विविधजीवहिंसया जीवन्नवर्तत । कदाचित्कोऽपि मुनिवरो वने व्रजन् मार्गभ्रमेण विपरीतं पन्थानमाश्रित्य क्षत्रबन्धोरस्य चक्षुषोर्गोचरतामविन्दत। सद्य एव तेन व्यापादनीयोऽप्ययं मुनिर्दैववशात् स्वादुवचसा भाषितोऽभूत् विदितमार्गविपर्ययोऽयं मुनिः पिपासातिशयेन तत्र स्थिते क्वचन तटाके निपपात। क्षत्रबन्धुरसौ तमुपचारैरुपच्छन्द्य तटाकादुद्धृत्य स्वास्थ्यमनयत् । स्वस्थश्चाथ मुनिस्तस्मिन् दयमानमनास्सन् तस्य सूर्यवंशीयविश्वरथात्मजत्वं च विज्ञाय तं समुज्जीवयितुकामः सन्मार्गे तस्य सर्वथा वैमुख्यं विदित्वाऽपि महत्या श्रद्धया सदुपदेशप्रपञ्चनेन कथञ्चित्तस्य आस्तिकभावमुत्पाद्य गोविन्दनाम्नः प्रभावमुपदिश्य " विपरीताचारेषु वर्तमानोऽपि त्वम् इदमेव भगवन्नाम कथयन् वर्तस्वे "ति व्याहृत्य निरगात्। महामुनेः कटाक्षवीक्षाया अमोघत्वबलात् सोऽपि गोविन्दनाम निरन्तरं संकीर्तयन्नवर्तत । काले मृत्युमुखं गतस्सोऽयं ब्राह्मणकुले समुत्पन्नः पूर्वजन्मवृत्तस्मरणशाली चासीत्। संसारे च महान्तं निर्वेदमविन्दत। गोविन्दनामसंकीर्तन प्रभावादेव स्वस्य ब्राह्मणकुले जननं पूर्वजन्मवृत्तस्मरणं च घटतेस्मेति विदन् गोविन्दमेव नियतमनुचिन्तयन्नाराधयंश्च सतीं गतिमविन्दतेति ॥

श्लो० क्षत्रबन्धुरपि पापिषु मुख्यः प्राप सद्गतिमहो लघुनाम्ना ।
सत्यपि प्रणतवत्सलरङ्गिण्येष संसरति हा बत लोकः ॥ ४ ॥

५. ( पेण्डिराल् ) ललनाभिस्सकलसुखानुभवो भवितेति भ्रान्तिभूम्ना प्रवृत्ता अपरिमितानि दुःखान्येव भृशमनुभवन्तो नक्तं भुक्त्वा शयनावसरेऽपि भगवच्चिन्तामकृत्वा शरीरपोषणार्थचिन्तयैवाभिभूतास्सन्तः संसारिणः शिशिरतुळसीस्रगलंकृतवक्षसो भगवतो रङ्गनाथस्य दास्यविमुखाः तदीयगुणगणगानपूर्वकनर्तने क्वचिद्वरिद्रा भगवच्छेषतामृतास्वादनभाग्यविधुरा उदरभरण एव कालं क्षिपन्तीति शोच्यमेतत् ॥ [ वि. वैषयिकसुखाभासोपभोग एव परमः पुरुषार्थ इति भ्रमविवशानां भगवद्दास्यरसानभिज्ञानां

शरीरपोषणैकनिरतानां संसारिणां विषये स्वकीयमतिमात्रं निर्वेदं प्रकाशयति सूरिवरो गाथयाऽनया। अग्निज्वालास्वादनेन पिपासाशामनं कामयमानानाम्, नृत्यतः फणिनश्छायामाश्रित्य श्रमापनोदनं चिकीर्षतां च विवेकान्धानां सधर्माणः खलु स्त्रीसेवया सुखमनुभोक्तुमिच्छन्ति इति परिहासः प्रथमतः स्फोर्यते ॥

श्लो० स्त्रैणतस्सुखधिया बहु दुःखं प्राप्य नक्तमपि दैहिकचिन्ताम् ।
विभ्रतो जठरपूरणलुब्धा रङ्गिदास्यविमुखा बत ! लोकाः ॥ ५ ॥

६. (मरुङ्गुवर्मदिळेडुत्तु) मदमात्सर्यरूपप्राकारपरिवृता आमुष्मिकचिन्तालेशदरिद्रा भोस्संसारिणः ! क्षणभंगुरस्यास्य देहरूपस्य कुड्यस्य धरायां पतनकालं हन्त नावगच्छथ। साक्षात्सनातनधर्मात्मकस्य भगवतः श्रीरङ्गनाथस्य कैङ्कर्यविमुखास्सन्तः नश्वरशरीरपोषणमात्रतत्परा यूयं कङ्कगृध्रोपभोगाय खलु हन्त ! वर्धध्वे ॥ [ विवरणम् ॥ दिव्यसूरिरसौ स्वात्मना आहूयमानान् संसारिजनान् मदमात्सर्यरूपप्राकारपरिवृतान् कथयति ; कोऽत्राभिप्राय इति चेत् ; लोके प्राकारान्तर्गतो जनो यथा खलु स्वस्य सर्वथा निर्भयत्वमभिमन्यते तथा संसारिणोऽपि मदमात्सर्यादिदुर्गुणबाहुल्येन स्वात्मनः सुरक्षितानभिमन्यते ; स्वस्मै विविधहितोपदेशान् कृतवन्तं करिष्यन्तं च हितपरं विभीषणं * त्वां तु धिक्कुलपांसनमिति विगर्हितवता रावणेन सधर्माणो जना एवात्र मदमात्सर्यरूपप्राकारपरिवृताः कथ्यन्ते । [ नश्वरशरीरमात्रपोषणतत्परा यूयम् ] इत्यादेरयं भावः—*असन्नेव स भवति असद् ब्रह्मेति वेद चेत् * इत्युपनिषदाम्नातरीत्या असत्कल्पतया स्थितमात्मानं सत्तां प्रापयितुं योग्ये पथि प्रवृत्तिं विहाय अशनाच्छादनसमृद्धिमात्रलोलुपतया शरीरपोषणं हि कलयथ यूयम् ; ईदृशानां युष्माकं शरीरं कङ्कगृध्रोपभोगाय केवलं कल्पेतेति ॥

श्लो० भो जडा मदनमत्सरपूर्णा नैव वित्थ वपुषो लयकालम् ।
रङ्गशायिवरिवस्यनरिक्ता गृध्रभक्ष्यतनवो भवितास्थ ॥ ६ ॥

७. ( पुलैयऱमाहि निन्न ) शास्त्राणि सम्यगधीतवन्तो महान्तोऽतिक्षुद्राणि बौद्धक्षपणादिमतानि मनसाऽपि न चिन्तयेयुः ; श्रवसाऽपि ननिशमयेयुः । तदास्तां नाम ; अहं तावत विलूनमस्तकोऽपि न गतासुर्भवेयम् । सत्यमेतत । भो महात्मानः ! प्रत्यक्षमेतदीक्षध्वम् । धनुषा विध्वस्तलङ्कापुरो देवदेवो रामचन्द्र एव सर्वेश्वरः ॥ [ विवरणम् :—' अहं तावद्विलूनमस्तकोऽपि न गतासुर्भवेयम् ' इति कथयतस्सूरिवरस्य हृदयमेतत ; सत्यं वचः कथयन्नेवाहं यदि गलतले निशितकृपाणधारां निपातयेयम्, तस्य सत्यवचसो बलेन कण्ठच्छेदो नैव भविता ; प्राणव्यपायस्तु सुतरां न भविता इति । भगवान् लक्ष्मीपतिरेव सर्वेश्वर इति स्वकीयस्सिद्धान्तस्सर्वथा पारमार्थिक इति कथनं फलितम् ॥

श्लो० अतिक्षुद्रबौद्धादिदुर्ग्रन्थवृन्दे दृशं वा श्रवो वा दिशेयुः किमार्याः ।
रघूत्तंस एको हि दैवं वरिष्ठं मदीयं वचो ह्येतदत्यन्तसत्यम् ॥ ७ ॥

८. ( वेरुप्पोडु शमणर्मिण्डर ) भो भगवन् श्रीरङ्गपृथ्वीपते ! भगवद्विषयप्रावण्यदरिद्राः क्षपणाः शैवा अभाग्योपहता बौद्धाश्च त्वद्विषये यदि कथयेयुरसहनीयानि दुर्वचांसि, तथाविधगर्हावचनश्रवणसमसमय एव तीव्ररोगाभिभूतस्यैवम म मरणं वरम् । अथ च, भगवद्विरोधिसत्तामात्रमप्यसहमानस्य मम भगवद्दूषकव्यक्तिरूपं लक्ष्यं यदि चक्षुर्गोचरतामियात, मम शक्तिभूमा च यदि घटेत सद्य एव तच्छिरश्छेदनमेव मे युक्तं कृत्यम् ।

श्लो० त्वयि यदि रङ्गनाथ ! विमताः क्षपणप्रमुखाः अभिदधते कटूक्तिमथ मे मरणं शरणम् ।
यदि मम शक्तिरस्ति यदिचेदृशधूर्तजनो मम दृशि संपतेदथ लुनामि तदीयशिरः ॥८॥

९. ( मत्तुमोर्दैवमुण्डे ) तत्त्वज्ञानदरिद्रा हे मूर्खमनुष्याः ! मयाऽभिधीयमानाद्देवाधिदेवादन्यः कोऽपि देवः शरण्यः किमस्ति ? नैवास्ति । युष्माभिः शरण्यतया परिगृहीतानां दैवतानां यदि कदाचिदापज्जायेत, तदैव हि अद्वितीयमीश्वरमवगमिष्यथ यूयम् । प्रमाणततीनां निष्कृष्टमर्थं न मनागप्यवगच्छथ यूयम् । पुनरपि कथयामि - तस्मादन्यत्र किमपि दैवतमस्ति । गोपालस्यैव भगवतश्चरणद्वंद्वं शरणं वृणीध्वम् ॥ [ विवरणम् ;—" युष्माभिः शरण्यतया परिगृहीतानां दैवतानां यदि कदाचिदापज्जायेत " इत्यादेरयं भावः ; देवतान्तराणाम् इतःपरं न कदाचिदापद्भविष्यति : तेषां तेषां दैवतानामापदः प्रागेव जाताः परमपुरुषेण परिहृताश्च । " आपन्नानां दैवतानामापदः परमपुरुषेणैव परिहृता इति यदा ध्यानं वा भविष्यति तदैव देवतापारमार्थ्यनिर्णयोऽपि वा भवितेति ॥ * वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदानैः । कोऽन्यः प्रजापशुपती परिपातीति स्तोत्ररत्नसूक्तिरिहानुसन्धेया ॥

श्लो० भोभो मूर्खजनाः किमस्ति भुवने तस्मात्परं दैवतं
श्रीनारायणवैभवं न सुगमं नोचेद्विपज्जायते ।
निष्कृष्टं कथयाम्यहं, न हि पुनस्तस्मात्परं दैवतं
गोपालस्य हरेः पदाम्बुजयुगं संश्रित्य संजीवत ॥ ९ ॥

१०. ( नाट्टिनान् देवमङ्गुम ) राजसतामसजनाश्रयणयोग्यानि दैवतानि सर्वत्रापि स्थापितवान् हरिः । उज्जीवनकाङ्क्षिणां सतामुज्जीवनाय परमकृपया श्रीरङ्गदिव्यधाम प्राचीकशत् । अयि पूर्णम्मन्या जनाः ! अपि नाम श्रूयते मदुक्तिः ? गरुडध्वजे भगवति सकलफलप्रदे विराजमाने सत्यपि देवतान्तरभजनप्रवणा यूयं ज्येष्ठासकाशे सम्पदं प्रेप्सथ ॥

श्लो० लक्ष्मीशो बहुदेवतानि भुवनेष्वस्थापयद्रङ्गराट्
कारुण्यातिशयेन रङ्गनिलयो जातो न उज्जीवयन् ।
एवं सत्यपि देवतान्तररतिर्जायते पापिनान्
तज्ज्येष्ठासविधे सुसम्पदभिवाञ्छैवेति निर्धार्यताम् ॥ १० ॥

११. ( ओरुविल्लालोङ्ग ) * चापमानय सौमित्रे * इति अद्वितीयशार्ङ्गविक्रमप्रदर्शनेन उत्तरङ्गे तरङ्गमालिनि सेतुबन्धमारचय्य सर्वलोकसमुज्जीवनाय समराङ्गणे राक्षसाधिनाथं दशाननं व्यापादितवता महावीरेणाधिशयितं महत्तरं मन्दिरं सप्तप्राकारपरिवृतं श्रीरङ्गधामेति कथयितुमप्यशक्ता भो गर्भदुर्भगजनाः ! भगवदनुभवोपयुक्तं कालं वृथा ह्यतिपातयथ हन्त ॥

श्लो० जलधौ विरचितसेतोर्लङ्केश्वरवैरिणो हरेस्सद्म ।
श्रीरङ्गदिव्यधामेत्यवदन्तो गर्भदुर्भगाः शोच्याः ॥ ११ ॥

१२. (नमनुम् मुद्गलनुम्पेश) नरके पापफलानुभवनिरतेषु पापिषु यममुद्गलसंवादं श्रुतवत्सु सत्सु तेषां स नरक एव स्वर्गनिर्विशेष आसीदिति वक्तव्यतानुगुणं प्रभावमधिवहद्भिर्नामभिर्विभासुरस्य सकलकल्याणगुणपरिपूर्णस्य भगवतो दिव्यं धामश्रीरङ्गक्षेत्रमिति एतावन्मात्रमप्यनभिधाय ह्यहन्त संसारिणस्तमसि अधोधः पतित्वा निजमज्जन्तीति बत भृशं दूये ॥ [ विवरणम् ;—मुद्गलोपाख्यानं श्रीविष्णुधर्मे

नवतितमेऽध्याये प्रोक्तम् । तदिह संक्षिपामः ! मुद्गलनामा कोऽपि महापातकिषु अग्रेसर आसीत् ; स कदाचित् गोदानं कुर्वन् कृष्णायेति कथयन् ददौ । काले मृतं तं यमकिङ्करा अतितरां क्लेशयित्वा यमसकाशं निन्युः; यम एनमभ्युत्थानप्रणामादिभिर्बहुमेने; अथ मुद्गलः पप्रच्छ - धर्मराज प्रभो ! त्वदीयैर्भटैरतितरामभिभूयमानोऽहं किमिति त्वया बहुमानपात्रतां नीयमानोऽस्मि ? इति । 'पूर्वं कदाचिद्भवता कृष्ण नाम प्रोक्तम्' इति यमः प्रत्यभाषत । एतावानेव संवादस्तत्र समजनि । संवादेऽस्मिन् नरके पच्यमानानां पापिनां कर्णमूलं प्रविष्टे सति, क्रियमाणदुःखानुभवानां तेषां तदात्वे यमकृतानुवादगोचरकृष्णनामश्रवणेन परमानन्दसंदोहानुभूतिरजनि - इति । अथ किमुच्यतां भगवान्नामवैभवम् ॥

श्लो० श्रुतयममुद्गलभाषणनारकिजनपावनस्वशुभनाम्नः ।
विष्णोर्निलयं रङ्गं ये हि न शंसन्ति ते भृशं शोच्याः ॥ १२ ॥

१३. ( एरियुनीर्वेरिहोळ् वेले ) उत्तरङ्गजलधिपरिवृतेऽस्मिन् विशङ्कटे भूतले वर्तमानास्सर्वेऽपि चेतनाः सुरभितुलसीमालालंकृतं देवाधिदेवं श्रीरङ्गनाथं स्तोतुमेव सृष्टाः; अज्ञा मनुष्या विशेषतः स्तोतुमसमर्था अपि रङ्गं रङ्गमित्येतावन्मात्रं यदि ब्रूयुः, ज्ञानिनां नरककल्पानि भुवनान्यमून्यखिलानि शून्यानि खलु भवेयुः ॥

श्लो० अम्भोराशिपरीतभूमिनिलयास्सर्वेऽपि च प्राणिनो
देवेशं तुलसीस्रजा सुरभितं स्तोतुं हि संकल्पिताः ।
अज्ञानान्ध्यजुषस्समेऽपि मनुजाः श्रीरङ्गधामेति चे-
दुद्घुष्येयुरथाखिलोऽपि नरकः शून्यो भवेदञ्जसा ॥ १३ ॥

१४. ( वण्डिनमुरलुम् शोलै ) भ्रमरावलीमुखरमहोद्यानपरिवृतं श्रीरङ्गम् ! बर्हिनिवहनृत्ताभिरामाराममहो श्रीरङ्गम् ! वषुकवलाहकमण्डलस्पर्शिमहोद्यानपरीतं श्रीरङ्गम् ! कोकिलकुलकूजिताभिराममहोद्यानपरिवृतं श्रीरङ्गम् ! देवाधिदेवश्रीरङ्गनाथयात्रोत्सवास्पदमहोद्यानविभूषितं श्रीरङ्गम् ! इत्येवमेवं वक्तुमनुत्साहिभिः कृतघ्नैर्मूर्खैः साभिनिवेशमद्यमानमन्नमाक्षिप्य कृतघ्नेभ्यः शुनकेभ्य उपहरत तत् ॥ [ वि. 'योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति । कल्पकोटिसहस्राणि स याति श्रेयसां पदम् ॥'' इति प्रमाणवचनमिहानुसन्धेयम् ॥ ]

श्लो० झंकुर्वद्भ्रमरावलीपरिवृतैः नृत्यन्मयूरोत्करैः
अभ्रस्पर्शिभिरद्वितीयकलकण्ठारावसंशोभितैः ।
आरामैर्वृतमस्मदीशनिलयं श्रीरङ्गमाहुर्न ये
तैः पापैरुपभुज्यमानमशनं हृत्वा शुने यच्छत ॥ १४ ॥

१५. ( मेय्यर्क्के मेय्यनाहुम ) श्रियःपतिर्गरुडध्वजो भगवान् , चिरं भगवत्कृपालाभौपयिकसुकृतविधुरदासजनवत् अद्वेषमात्रशालिनां स्वस्वरूपं याथातथ्येन प्रकाशयेत् । अद्वेषेणापि विहीनानां द्रोहिणां स्वस्वरूपं न कदापि प्रकाशयेत । उज्जीवनौपयिक विवेकशालिनां भगवदस्तित्वप्रकारकज्ञानसमनन्तरं संभावितान् सन्देहान् सवासनमुन्मूल्य तेषां दिव्यदर्शनं ददाति भगवान् ; तस्यावसथं श्रीमद्रङ्गम् ॥ [ वि. दैवस्य सत्तां सादरमनभ्युपयन्तोऽपि, दैवमस्तीति परैरुच्यमाने वचसि आक्षेपादिभिः द्वेषस्याप्रकाशनदशा - अद्वेषदशेत्यभिधीयते ; तादृशाद्वेषदशायां वर्तमाना अपि भगवद्भक्तकोटौ परिगण्यन्ते ; तेषां ! स्वात्मानं प्रकाशयति भगवान् । * मायाबलेन भवताऽपि निगुह्यमानं पश्यन्ति केचिदनिशं त्वदनन्यभावाः * इति स्तोत्ररत्नानुगृहीतरीत्या ते पश्यन्तीति विभाव्यम् । निरुक्तेन अद्वेषेणापि

ये दरिद्राः ते * नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् * इति तत्रैव स्तोत्ररत्ने प्रोक्तरीत्या कदाऽपि भगवद्दर्शनं न प्राप्नुवन्तीत्युक्तं भवति । अथ, उज्जीवनौपयिकविवेकशालिनामित्यादेरिदं हृदयम् ;—केचन भाग्यवन्तः उज्जिजीविषव आस्तिकाः संपद्यन्ते ; तेषां यदि भगवत्स्वरूपरूपगुणविभूतिचेष्टितादिविषये केचन संशया भवेयुः, तेषां निरासं भगवान् स्वसौन्दर्यप्रकाशनमात्रेण वितनोति । * संशयात्मा विनश्यतीति गीताप्रोक्तो विनाशो माभूदमीषाम् इति दयमानमनास्सन् स्वयमेव तान् विधूतसंशयाननुगृह्णातीत्यर्थः ॥

श्लो० अद्वेषात्मकभक्तिभाजनजने सत्यप्रतिज्ञो भवन्
विद्वेषाढ्यहृदां नृणामविषयः पक्षीन्द्रकेतुः प्रभुः ।
सत्ताप्रेप्सुभिरास्तिकैर्निजहृदा दृष्टोऽथ तत्संशयान्
सर्वांश्चापि विनाशयन् विजयते रङ्गे हरिस्सुन्दरः ॥ १५ ॥

१६. ( शूदनाय् क्कळ्वनाहि ) प्रथमतो द्यूतक्रीडासक्तः तदनु तस्करवृत्तिप्रवणो धूर्तैर्विषयान्तरप्रवणैस्सह संसर्गी भूत्वा यदाऽहं मवर्तिषि, तदा सुन्दरीणां शफरोपमेयनयनात्मकवागुराबद्ध आसम् । तथाविधं माम् अत्रागच्छेत्याहूय हृदये च प्रविश्य स्वस्मिन्नभिनिवेशमभिवर्धितवतस्सौन्दर्यस्य निकेतनं भगवान् यत्र वसति तद्धाम श्रीरङ्गसमाख्यम् ॥

श्लो० द्यूतस्तेयनिषेवणादिदुरितैरापूरितं, दुर्जनैः
संवासेन विदूषितं च सुदृशां दृग्वागुरायन्त्रितम् ।
मामेहीत्यवबोध्य मे हृदि बलादाविश्य च स्वात्मनि
प्रावण्यं ददतीं रुचं वहति यः श्रीरङ्गधामा हि सः ॥ १६ ॥

१७. ( विरुम्बिनिन्नेत्तमाट्टेन् ) साभिनिवेशं स्थेम्ना स्तोतुमशक्तोऽस्मि ; अञ्जलिबन्धादिकायिकव्यापारकरणेऽप्यशक्तोऽस्मि ; ईश्वरोऽस्तीति धियाऽपि दरिद्रोऽस्मि ; अयस्सधर्मकर्कशहृदयमपि शनैश्शनैर्द्रवीकुर्वन्तं भ्रमरमुखरारामपरिवृत श्रीरङ्गे शयानम् इक्षुरसवद्भोग्यभूतं भगवन्तं संसेव्य मदीयेन नयनद्वंद्वेनानुभूयमान आनन्दो हन्त ! वाचामभूमिः ॥

श्लो० सोत्कण्ठं स्तुतिमप्यहो न कलये कुर्वे न चाप्यञ्जलिं
बुद्धिश्चापि न मेऽस्ति, लोहकठिनं मन्मानसं द्रावयन् ।
भृङ्गासङ्गिमहावनावलिवृतश्रीरङ्गदेशाधिपो
भोग्योऽदर्शि मया ततो मम दृशोर्हर्षो न वाग्गोचरः ॥ १७ ॥

१८. ( इनिदिरै त्तिवलै मोद ) अतिसुभगवीचिशीकरपरिचयप्रवणायाः पयोधिसमरूपायाः कावेर्या मध्ये अद्वितीयनिद्रामुद्रया सह साम्राज्यमातस्थिवांसम् अम्बुजायतविलोचनमस्मत्स्वामिनम् बिम्बफलोपमेयदिव्याधरसुभगं परमदयालुं श्रीरङ्गनाथं सेवितवतो मम नयनद्वंद्वात् आह्लादशीतमश्रु प्रवहति हन्त । ततश्च विघ्नितपरिपूर्णावलोकनोऽहं पापी किं करवाणि ? ॥

श्लो० पारावारसमानहेमतटिनीतीरे तरङ्गोल्वणे
साम्राज्यं भुवि निर्वहन्तमनघं पद्मोपमाक्षं प्रभुम् ।

दिव्यस्वादुतमाधरं मुररिपुं संपश्यतो मे दृशौ
हाहन्ताश्रुनिपातनं कलयतः कुर्यामहं किं नु भोः ॥ १८ ॥

१९. ( कुडातिशै मुडियै वैत्तु ) अयि भो भौमा जनाः ! सिन्धुसवर्णदिव्यमङ्गलविग्रहोऽस्मत्स्वामी श्रीरङ्गनाथो भगवान् दिव्यमकुट विन्यसनेन प्रतीचीं दिशम् , दिव्यपादारविन्दप्रसारणेन प्राचीं दिशम् , अतिसुन्दरपश्चाद्भागप्रदर्शनत उदीचीं दिशम् , दिव्यकटाक्षवीक्षाप्रसारणेन विभीषणावसथलङ्कालङ्कारां दक्षिणां दिशं च धन्यां वितन्वन् भोगिभोगशय्यामधिशेते ; तदिदं शयनमवेक्षमाणस्य मम वपुरपि द्रवीभवति हन्त ! आः किमहं करवै ! ॥

श्लो० मूर्धानं विनिवेश्य वारुणदिशि प्राच्यां पदाब्जे प्रसा-
र्योदीच्यां दिशि दर्शयन् कटिपुटं पश्यन् दिशं दक्षिणाम् ।
अम्भोराशिनिभो हरिः फणिपतौ शेते, तदालोकनात्
गात्रं मे द्रवतीह हन्त ! किमहं कुर्यां जनाः पार्थिवाः ! ॥ १९ ॥

२०. ( पायुनीररङ्गत्तुळ् ) अनारतप्रसरत्सलिलकावेरीपरिवृते श्रीरङ्गधाम्नि भोगिभोगशयनीयमधिशयानस्य अत्यद्भुतशक्तिशालिनो भगवतो लक्ष्मीसनाथं विलक्षणं वक्षस्थलम् मरतकमणिनिभं दिव्यमङ्गलविग्रहं दिव्यभुजावलिं स्वच्छारविन्दसमानदृग्विततिम् दिव्याधरम् विद्रुमाभमास्यम् अतिसुन्दरं चूडावतंसं लावण्यं च विस्मृत्य किमवस्थातुमर्हन्ति भक्तजनाः ? ॥

श्लो० श्रीरङ्गे कनकापगापरिवृते भोगीन्द्रशय्याजुषो
लक्ष्मीभर्तुरुरस्थलं मरतकच्छायं वपुर्दोर्लता ।
अम्भोजोपममक्षियुग्ममधरो दिव्यं किरीटं तथा
लावण्यं च कदाऽपि भक्तनिवहैर्विस्मर्तुमर्हं न हि ॥ २० ॥

२१. ( पणिविनाल् मनमदोन्रि ) विद्रुमसमाधरे भगवति श्रीरङ्गनाथे कैङ्कर्यरुचिवैवश्येन दृढाध्यवसायेन च समुज्जीवितुमशक्त रे मूर्ख हृदय ! कथय तावत ; सौन्दर्यपरिपूर्णहिरण्मयशैलोपमेये दिव्यमन्दिरे नीलमणिनिर्विशेषं विभासमानस्य विभोः शयन परिपाटी किमहो चिन्तापथमेति ? ॥

श्लो० रङ्गेन्द्रे सुभगाधरे प्रवणतादूरस्थ हे मानस !
त्वं तावत्कथयाधुना मम पुनः प्रश्नस्य साधूत्तरम् ।
सौन्दर्याढ्यसुमेरुपर्वतनिभश्रीरङ्गदिव्यालये
रत्नाभस्य हरेरहीन्द्रशयनं किं चिन्तनार्हं तव ? ॥ २१ ॥

२२. ( पेशित्ते पेशलल्लाल् ) अयि भो विवेकान्ध हृदय ! पुराणैः पुण्यपुरुषैर्यदभाषि, तदेव खलु वयमप्यनुवादरूपेण भाषितुं प्रभवामः ; भगवतो वैभवं तु नास्मादृशां ज्ञानगोचरः ; उपायान्तरसङ्गविरहितेभ्यो निष्कल्मषचित्तेभ्यो व्यतिरिक्तानामवगन्तुमशक्यो हि स भगवान् ; वीतकलुषाणां हृदि विराजमाने भगवति श्रीरङ्गनाथे प्रणामसमर्पणादतिरिक्तं तदीय प्रभावप्रतिपादनं किमहो सुशकमस्माकम् ? वद ॥

श्लो० पूर्वैर्यत्कथितं तदेव कथयेमान्यन्न किञ्चिद्वयं
ज्ञातुं शक्नुम, एष रंगरमणो निर्दोषचित्तैः परम् ।
ज्ञातुं शक्यत, ईदृशस्य नमनादन्यन्न किञ्चित् क्षमम
किं वा भाषितुमस्ति शक्तिरिह नः ? चित्त ! स्वयं ब्रूहि भोः ॥ २२ ॥

२३. ( कङ्गैयिल्पुनिदमाय ) गङ्गातीर्थतोऽप्यभ्यधिकपावनत्वशालिन्याः कवेरकन्याया दिव्य-सरितो मध्ये तदीयदिव्यसलिलप्रवाह संवृद्धमहोद्यानभरिते श्रीरङ्गधाम्नि आश्रितव्यामुग्धस्य अस्मत्स्वामिनः सर्वनियन्तुः श्रीरङ्गनाथस्य सर्वजनमनोहरां शयन मुद्रां संसेव्यापि कथमहं तां विस्मृत्य स्वात्मानं धारयितुं प्रभवेयम् ? इतिकर्तव्यतामुग्धो ह्यवतिष्ठे ॥

[ विवरणम् ;—गङ्गातीर्थतोऽप्यभ्यधिकत्वं कावेर्या यदुक्तमत्र, तदधिकृत्य श्रीरङ्गराजस्तवे * तीर्थं शुन्धति पाति नन्दनतरूनित्यादिपद्यरत्नेन भट्टपादैः कृतं समर्थनमिहानुसन्धेयम् ॥ * फेनैर्हसन्तीव तद्गङ्गां विष्णुपदीत्वमात्रमुखरां हेमापगा * इत्येतत्तत्र प्रधानतमं वचः ॥

श्लो० गङ्गातिशायिविभवकवेरजापुलिनरङ्गसद्मपतेः ।
भक्तव्यामुग्धहरेः शयनं कथमहह ! विस्मरेयमहम् ॥ २३ ॥

२४. ( वेळ्ळनीर्परन्दु ) पयःपूरमेदुरकवेरकन्याप्रसरणपवित्रमहोद्यानपरीते श्रीरङ्गधाम्नि भक्तमनस्तस्करस्य भगवतः शयन प्रक्रियां वदनारविन्दसुषमां च संसेव्यापि भो हृदय ! कर्कशतामृद्ध-हसि हन्त ; तस्य परमपुरुषस्य अद्वितीयतां ननु न जानीषे । हन्त कृत्रिमभक्तिमेव प्रदर्श्य कृत्रिमचर्याभि-रेव कालं क्षिपसि धिक् ॥

श्लो० कावेरीवृतवनरङ्गधामभर्तुः वक्त्रं तच्छयनरुचं विलोक्य चापि ।
हे चित्त ! त्यजसि कठोरतां निजां त्वं सर्वं ते छलमयमेव वृत्तमस्ति ॥२४॥

२५. ( कुळित्तु मून्ननलैयोम्बुम् ) भो भगवन् श्रीरङ्गनाथ ! स्नानसन्ध्योपासनत्रेताग्निसमा-राधनादिभिः परिपालनीयं ब्राह्मण्यं हन्त विलोपितं मया ; आत्मविषयकज्ञानदरिद्रश्चास्मि ; त्वद्विषय-कभक्त्या च विरहितोऽस्मि ! भो सिन्धुसवर्ण ! परिपूर्ण हरे ! मम समाश्वासबीजभूतं वस्तु न किञ्चिदस्ति मयि । शोकक्षोभे हृदयस्य प्रलापैरेव धार्यत्वात प्रलपामि बत । मयि परमकृपां कुरुष्व भगो ॥

श्लो० स्नानेनाग्निसमर्चनेन च सदा संरक्षणीयं वरं
ब्राह्मण्यं बत ! लोपितं, मयि न तत , भक्तिश्च नास्ति त्वयि ।
भोभो सिन्धुसवर्ण रङ्गनृपते ! नाश्वासबीजं किमप्यास्ते
मे, विलपामि हन्त ! भगवन् ! सन्धुक्षय स्वां कृपाम् ॥ २५ ॥

२६. ( पोदेलाम्पोदु कोण्डु ) भगवन् रङ्गपते ! न कदाचिदपि पुष्पाणि संपाद्य त्वत्पादारविन्दयो स्समर्पयितुं शक्तोऽस्मि । निरवद्याभिः फणितिभिस्त्वदीयशुभगुणगणान् कीर्तयितुं च न प्रभवामि । प्रेमार्द्रं हृदयं च न मे वर्तते । ततश्च श्रीरङ्गेश्वरस्य तव न केनापि प्रकारेण स्पृहणीयो भवामि हन्त । अहह ! वराकोऽहं किमर्थमजनिषि; न जाने ॥

श्लो॰ स्वामिन् रङ्गपते ! कदाऽपि कुसुमैरर्चां न कुर्वे तव
श्रेष्ठाभिर्न च गीर्भिरुत्तमगुणान् शंसामि भोस्तावकान् ।
प्रेमार्द्रं हृदयं च नास्ति मम हा तस्मात् त्वदीयस्पृहा-
दूरस्थो हि भवामि, हा किमिति मे जन्माभवद्भूतले ॥ २६ ॥

२७. (कुरङ्गुकळ् मलैयै नूक्क) दक्षिणजलधौ सेतुबन्धकाले वानरवीरेषु शैलप्रक्षेपणप्रवणेषु सत्सु, जलधिकूलस्थसिकतासु लुठित्वा सागरमवगाह्य सिकताकणान् विधूय, एवं नाम यथाशक्ति किञ्चित्कारं कृतवद्भिः पुरुषाख्यजन्तुविशेषैरपि न साधर्म्यमुद्वहामि । काष्ठसमानकठोरताशालिहृदयः विप्रलम्भैकतत्परः कृपणश्चाहं श्रीरङ्गनाथस्य भावनावृत्त्याऽपि दास्यमकुर्वाणस्सन् अनर्थभागी भवामि हन्त ॥ [ पुरुषसमाख्यजन्तुः—अणिल् इति भाषानाम तस्य । ]

श्लो॰ ॥ अब्धौ सेतुकृतौ वलीमुखगणे शैलोद्धृतिव्यापृते
यच्चक्रुः पुरुषाख्यजन्तुनिवहाः तत्कर्तुमप्यक्षमः ।
सोहं वृक्षकठोरचित्तभरितो हा वञ्चकः चेतसा
कैङ्कर्यं न करोमि रङ्गनृपतेः सीदामि दुःखाकुलः ॥ २७ ॥

२८. (उम्बरालरियलाहा) चतुराननादीनाममराणामप्यपरिच्छेद्यमहिमा तेजोमयपरमपद-वास्तव्यो भगवान् गजेन्द्ररक्षणकृते क्षोदीयसि ग्राहेऽपि क्रोधमाहारयन् सरस्तीरमुपाययौ हन्त । एवमाश्रितरक्षणबद्धदीक्षे भगवति विराजमाने किमस्ति स्वात्मरक्षाभरोऽस्माकम् ? श्ववृत्तिनिरतामस्मादृशां जघन्यतां मनागपि मनस्यकलयतो भगवतो विषये किञ्चित्कारम् अकुर्वाणोऽहं हन्त ! किमर्थमजनिषि ॥

श्लो॰ देवानामपि गोचरो न भगवान् यस्सोऽयमीशो हरिः
हस्तीशावन हेतुना पिशितभुग्ग्राहाय कोपोल्बणः ।
आयातो हि, भरो न मादृशि जने, श्रीरङ्गशायी स तु
क्षुद्रेष्वप्यनुकम्पनः, किमिति मे वन्ध्यस्य जन्माभवत् ॥ २८ ॥

२९. (ऊरिलेन् काणियिल्लै) भगवन् श्रीरङ्गनाथ ! भूमाविह भवदभिमानभाजनभूतेषु दिव्यदेशेषु न कुत्रापि मे जननमघटत । कैङ्कर्यपराणामनुभाव्यतयोपकल्प्यमानं क्षेत्रमपि नास्ति मम । दिव्यदेशवास्तव्यैस्सह बन्धुताऽपि नास्ति मम । किं बहुना ? ययाकयाऽपि विधया नास्ति मे भवत्पादारविन्दपरिसरानुबन्धः । वर्षुकवलाहकसच्छाय गोपालकृष्ण ! अनन्यशरण्योऽहमाक्रन्दामि स्वामिन् ! कोऽस्ति मे त्वदन्यः प्रभुः ? ॥

श्लो॰ दिव्यक्षेत्रजनिर्न मेऽस्ति न च भूः नैवासते बान्धवाः
त्वत्पादाम्बुजमप्यशिश्रियमहो नैवात्र सर्वेश्वर ।
जीमूतोपमदिव्यविग्रह हरे क्रन्दामिगोपाल भोः
को मद्रक्षणदक्षिणस्त्वदपरो रङ्गप्रभो वर्तते ॥ २९ ॥

३०. (मनत्तिलोर्तूय्मै यिल्लै) सुसमृद्धतुलसीस्रगलंकृत ! कावेरीपरिवृतश्रीरङ्गधामन् ! मच्छेषिभूत स्वामिन् ! मनसि मे परिशुद्धिलेशोऽपि नास्ति ; मुखे स्वादुभाषणमपि नास्ति ; निष्कारण-

क्रोधद्रोहादिनिष्ठापिशुनजल्पितान्येव मम मुखत उद्भवन्ति हन्त । एवंविधदुर्गुणभरितस्य मम का गतिर्हन्त ! कथय भो अस्मत्स्वामिन् ॥

श्लो० रम्यश्रीतुलसीस्रगाढ्य भगवन् चित्ते न मे शुद्धता
वक्त्रे चापि न वर्तते मधुरवाग्वक्तृत्वगन्धोऽप्यहो ।
द्वेषद्रोहमुखैः शुभेतरगुणैः पूर्णः कटूक्तिं ब्रुवे
स्वामिन् ब्रूहि ममास्ति का गतिरहो श्रीरङ्गनाथ प्रभो ॥ ३०॥

३१. ( तवत्तुळार्तम्मिलल्लेन् ) भगवन् रङ्गनाथ ! तपस्विषु नाहमन्यतमो भवामि ! न च कैङ्कर्योपयुक्तधनसमृद्धेषु । मदादृतानां जनानामपि क्षारनीरवदुपेक्ष्य एवास्मि संवृत्तः । बिम्बफलोपमेयाधरशालिनीनां ललनानामपि वर्जनीयस्तस्करोऽभूवम् । ईदृशस्य मे जननं सर्वथा निरर्थकमेव हन्त-भवता निर्मितम् ।

श्लो० स्वामिन् रङ्गपते ! मया तु न तपस्तप्तं धनं नार्जितम्
मत्सम्बन्धजुषोऽत्र सन्ति खलु ये तैरप्युपेक्ष्योऽभवम् ।
स्त्रीभिश्चापि बहिष्कृतोऽहमभवं चौर्यादिदोषाकरः
हा हा जन्म वृथैव मेऽत्र भवता प्रादायि दूये ततः ॥ ३१ ॥

३२. ( आर्त्तु वण्डलम्बुम् शोलै ) द्विरेफविततिवितन्यमानकोलाहलभरितमहोद्यानालंकृत-श्रीरङ्गधाम्नि विराजमान ! मुदिरसमुदयसधर्मदिव्यमङ्गलविग्रहशालिन् दयालो ! भगवन् ! भवत्साक्षात्कारौपयिकसरणिविज्ञानदरिद्रेषु मनुष्येष्वन्यतम आत्मापहारचोरो मूर्खाग्रणीश्चाहमशरण्यस्तवाग्रे तिष्ठामि भोः । सर्वथा विगेयं मम मौर्ख्यम् ॥

श्लो० मुखरभ्रमरवनावृतरङ्गास्पद मुदिरसमुदयाभ हरे ।
भवदवलोकनमार्गानभिज्ञमूर्खोऽहमस्मि ते पुरतः ॥ ३२ ॥

३३. ( मेय्योल्लास् पोहविट्टु ) स्वामिन् श्रीरङ्गपृथ्वीपते ! पारमार्थिकानि मनोवाक्काय-कृत्यानि, सुदूरतो विधूय सुकेशिनीष्वेवाभिनिविश्य सकलविधानृतैर्भरितः कृत्रिमचर्यश्चाहं त्वदीयकृपाबल-विस्रम्भभूम्ना समागत्य तवाग्रतस्तिष्ठामि ; त्रिकरणतोऽपि मिथ्याचारोऽहं निर्लज्ज एव समागतोऽस्मि हन्त॥

श्लो० सत्याध्ववैदेशिकजारचोरोऽसत्याध्वनिष्ठोऽहमुपागतोऽस्मि ।
श्रीरङ्गधे ! त्वत्करुणाशयैव मिथ्यामयोऽहं पुरतोऽस्मि तेऽद्य ॥ ३३ ॥

३४. (उळ्ळत्तेयुरैयुम्माले) मदीयहृदयैकनिलयं भगवन्तं भवन्तं चिन्तयितुं योग्यं मार्गमजानन्नात्मापहारचोरोऽहं त्वदीयदास्येऽन्वयाभिनयमाकलयन् किङ्करवेषधारी वर्ते; जगति तेते जना यद्यन्मनसि कलयन्ति तत्सर्वं सदैवावस्थाय त्वमवगन्तुं प्रभवसीति विदन्नह मतिमात्रमपत्रपाभिभूतः स्वात्मनैव स्वात्मानमतीव परिहसामि ॥

श्लो० चित्तस्थं त्वां परमपुरुष ! ज्ञातुमर्होऽस्मि नाहं
दस्युर्दासो दधदपि बहिर्भामकं दास्यवेषम् ।

चित्तस्थितया हृदयकलितं त्वं समस्तं विजाना-
सीति ह्रीणो भृशमपहसाम्यात्मनैवात्मचेष्टाम् ॥ ३४ ॥

३५. (तावियन्नुलहेमल्लाम्) पुरा [त्रिविक्रमावतारे] विक्रम्य सर्वाण्यपि भुवनानि स्वपद-न्यासधन्यानि कृत्वा समाक्रान्तवन् स्वामिन्! पुण्डरीकाक्ष! सत्यं शपे त्वदन्यं न कमपि सेवेय। मज्जीवितसर्वस्वभूत! परमभोग्यामृत! मद्धारकभूत महाप्रभो! पापी सोऽयं जनः त्वदन्यं न कदाऽपि भावयिष्यति॥

श्लो० त्रैविक्रमक्रमकृताक्रमणत्रिलोक! पद्माक्ष! न त्वदितरं प्रणमेयमीश।
मत्प्राणभूत! मम धारक! दिव्यभोग्य! नैव स्मरेयमपरं कृतदुष्कृतोऽहम्॥३५॥

३६. (मळैक्कनु वरैमुनेन्दुम्) पुरा वासवसृष्टमहावृष्टिकाले गोवर्धनाद्रिमुद्धृतवन्! महाबलाढ्य! मधुरनदीनिर्विशेष सर्वश्रमापहारिन्! सकलजगन्निदान भगवन् रङ्गनाथ! मृगीदृशां दृङ्मयवागुराबद्धम् अत एव भृशं परिक्लिश्यमानं मां हंहो न कटाक्षवीक्षालक्ष्यमातनुषे; क्रन्दामि संप्रत्यगतिस्तवाग्रे बत॥

श्लो० अद्रेरुद्धरणेन वर्षविपदस्संहारक श्रीपते!
भोग्यत्वेन सुधानदीसदृश भो श्रीरङ्गपृथ्वीपते।
हाहा हन्त मृगीदृशां परवशं क्लेशैरनन्तैर्वृतम्
क्रन्दन्तं स्वकटाक्षवीक्षणकलालक्ष्यं विधत्से न माम् ॥ ३६ ॥

३७. (तेळिविलाक्कलङ्गल् नीर्शूळ्) व्यपगतप्रसादया भृशमाविलया कावेर्या परिवृते श्रीरङ्गे विराजमानः श्रीरङ्गनाथ एव खलु * माता पिता भ्रातेत्याद्युक्त सकलविधबन्धुत्वशाली विराजते; तेन प्रभुवरेण मयि कर्तव्या कृपा स्वल्पीयस्येव: तथापि मां स दयनीयार्भककोट्यां न स्वीकरोतीति महदिदं मे दौर्भाग्यम् ॥

[विवरणम्:—"व्यपगतप्रसादया भृशमाविलाया कावेर्या" इत्यत्र * दुग्धाब्धिजनको जनन्यहमियं श्रीरेव पुत्री वरः श्रीरङ्गेश्वर एतदर्हमिह किं कुर्यामितीवाकुला। चञ्चच्चामरचन्द्रचन्दनमहामाणिक्यमुक्तोत्करान् कावेरी लहरीकरैर्विदधती पर्येति सा सेव्यताम् ॥ * इति श्रीरङ्गराजस्तवश्लोकरत्नमनुसन्धेयम्। कावेर्या आविलत्वे हेतुरुपवर्णित इह ॥]

श्लो० अत्यन्ताविलनीरपूरभरितश्रीरङ्गधाम्नः पतिः
तेजस्वी स हि रङ्गराण्मम पिता माता च जातस्स्वयम्।
कर्तव्या मयि तेन या खलु कृपा स्वल्पैव सा, तामपि
क्षुद्रेऽस्मिन्न करोति हन्त! किमहं ब्रूयामिमां दुस्थितिम् ॥ ३७ ॥

३८. (मेम्बोरुळ् पोहविट्टु) सह्यजापरिवृतश्रीरङ्गनगराधिनाथ! प्राकृतजनस्पृहणीयान् लौकिकविषयान् सवासनमुत्सृज्य आत्मस्वरूपयाथात्म्यमवगत्य स्वरूपानुरूपांश्च समाचारानवबुध्य पञ्चेन्द्रियाणि च संनियम्य स्वकीयरक्षाभरं स्वशिरसोऽवतार्य "मया त्यक्तं भरं मम शिरसि नाध्यारोपयेथाः, त्वमेव भरत्वेन स्वीकुरु" इति प्रार्थ्य त्वदायतने निवासमेव समुज्जीवनं मन्वानान् स्वकार्यविमुखान् खलु भक्तमर्यानाद्रियते भवान् ॥

श्लो॰ धूत्वा प्राकृतभोगसक्तिमखिलाम् , ज्ञात्वा च तत्त्वस्थितिम्
बुध्वा स्वोचितसाध्यमप्यथ निगृह्यैवेन्द्रियाण्यात्मनि ।
स्वीये मूर्ध्नि भरं व्यपोह्य सुतरां त्वन्मन्दिराभ्यन्तरे
वास्तव्यान् अलसान् विशिष्य भगवन् ! संरक्षसि त्वं हरे ॥ ३८ ॥

३९. ( अडिमैयिल् कुडिमैयिल्ला ) भो भगवन् तुलसीमाल्यालंकृतमकुटतट श्रीरङ्गबन्धो । त्वत्कैङ्कर्यानुकूलजन्मरहितेभ्यश्चतुर्वेदपारंगतेभ्यो ब्राह्मणेभ्योऽपि, त्वत्पादारविन्दप्रावण्यभरितान् जघन्यजातीयान् क्षोदीयसोऽपि जनान् आद्रियसे त्वम् ॥ [ वि. " श्वपचोऽपि महीपाल ! विष्णुभक्तो द्विजाधिकः । विष्णुभक्तिविहीनस्तु यतिश्च श्वपचाधमः ॥ " इति प्रमाणानुगुणमनुगृहीतेयं गाथेति विभाव्यम् ॥ ]

श्लो॰ तुलसीस्रगलंकृतचूड हरे ! बहुवेदधरानपि विप्रवरान् ।
अपहाय जघन्यजनानपि भो भृशमाद्रियसे ननु भक्तिदृशा ॥ ३९ ॥

४०. ( तिरुमरुमार्व ! निन्नै ) भगवन् श्रीरङ्गनाथ श्रीपते श्रीवत्साङ्क ! विशङ्कटपृथिवीमण्डलजाता जना भयानकानि परहिंसादुरितानि विरचय्य घोरपातकिनस्सन्तोऽपि भवन्तं हृदि सम्यगवस्थाप्य दृढाध्यवसायशालिनो यदि भवेयुस्ते सत्यं पापफलोपभोगदवीयांस एव स्युः ॥

श्लो॰ श्रीमन् रङ्गधुरन्धर क्षितितले जाता जना उत्कटैः
घोरैः पातकसञ्चयैरतितरामुद्दूषिता अप्यहो ।
त्वां चित्ते विनिवेश्य सन्ततदृढप्रेमानुबन्धा यदि
स्युस्तेषां न कदाचिदप्यघफलावाप्तिप्रसक्तिर्भवेत् ॥ ४० ॥

४१. ( वानुळाररियलाहा ) अत्यन्तनिहीनदुष्कृत्यानां कर्तारः कारयितारश्च सन्तोऽपि दिविषद्दुर्गमदेवाधिदेवेति, मधुस्यन्दितुलसीस्रगलंकृतमकुटतटेति च यदि भक्त्या कथयेयुस्तर्हि तादृशा महात्मानः स्वोच्छिष्टान्नप्रदानेन जगतीं पावयितुमीशते ॥ [ विवरणम् ;— * भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते...... तस्योच्छिष्टं सुपावनम् * इति भगवच्छास्त्रवचनानुरोधेन कथितेयं गाथेति ध्येयम् ॥ ]

श्लो॰ देवानामपि दुर्गम प्रभुवरेत्याचक्षते ये जनाः
माध्वीकाढ्यतुलस्युपेतमकुटेत्याहुश्च ये, ते प्रभो ।
दुष्कृत्ये प्रवणास्स्वयं यदि च वा प्रावण्यसंपादकाः
कामं सन्तु, पुनन्ति रङ्गरमण ! स्वोच्छिष्टदानेन ते ॥ ४१ ॥

४२. ( पळुदिलावोळुहलात्तु ) प्राकारपरिवृतश्रीरङ्गमन्दिराधीश भगवान् ! अनवद्यवंशपरम्पराप्राप्तसदाचारनिष्ठान् चतुर्वेदवरान् विप्रान्प्रति पुरा त्वया कथितं तावत्— " भो वेदविदग्रेसराः ! जघन्यजातीया अपि मद्दास्यप्रवणाश्चेत्तान् यूयं प्रणमत, तेभ्य उपदिशत; तेषां सकाशादर्थविशेषान् स्वीकुरुत

च ; तान् मन्निर्विशेषं पूजयत च " इति । [ विवरणम् ;—* मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम् । स्वयमभ्यर्चनं चैव मदर्थे डम्भवर्जनम् ॥ मत्कथाश्रवणे सक्तिः स्वरनेत्राङ्गविक्रिया । ममानुस्मरणं नित्यं यश्च मां नोपजीवति । भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्ययम् ॥ * इति भगवच्छास्त्रवचनदृष्ट्याऽनुगृहीता सैषा गाथेति विभाव्यम् ॥ ]

श्लो० ध्वस्तावद्यपरम्परागतसदाचारांश्चतुर्वेदिनो
विप्रेन्द्रान्प्रति रङ्गनाथ ! भवता प्रोक्तं किलैवं पुरा ।
" मद्भक्तांस्तु जघन्यजातिजनुषोऽप्याश्रित्य संजीवत
ज्ञानं स्वीकुरुत प्रयच्छत मया तुल्यं च तानर्चत " ॥ ४२ ॥

४३. ( अमरवोरङ्गमारुम् ) श्रीरङ्गनाथप्रभो ! षडङ्गसनाथांश्चतुरो वेदान् सम्यगधीत्य " वसिष्ठस्समानानां भवती " त्युक्तरीत्या स्वसजातीयेषु समुत्तुङ्गास्सन्तोऽपि यदि भागवतनिन्दापराः भवेयुस्तर्हि क्षणमात्र एव ते चण्डाला भवितारः ॥

श्लो० षडङ्गैस्समं वेदवर्गानधीत्य स्वकीयेषु मान्या द्विजाश्चेदपीह ।
त्वदीयान् विनिन्दन्ति चेत्ते क्षणेन श्वपाका भवेयुः ध्रुवं रङ्गबन्धो ॥ ४३ ॥

४४. ( पेण्णुलाम् शडैयिनानुम् ) श्रीरङ्गनाथ भगवान् ! गङ्गासमुल्लासिजटाजूटे शिवे चतुरानने च भवद्दिदृक्षया अनादेः कालात्तप्ततपसोः व्रीडाभिभूतयोस्सतोः गजेन्द्रे परमकृपां नित्यसूरीणामपि विस्मयावहां प्रकाशितवन्तं परमदयानिधिं मयि दयाविधुरं च भवन्तं हंहो कथमहं शरण्यमाकलयेयम् ॥

श्लो० गङ्गाधारिजटाधरं पशुपतिं वाणीपतिं चाच्युत !
श्रीरङ्गाधिपते ! चिरन्तनतपश्चर्यारतौ व्रीडितौ ।
कृत्वा हस्तिपतौ प्रसादमतुलं दिव्यं चकर्थ क्षणात्
दासे निष्करुणं भगवन्तमहह ! प्रार्थ्याहमार्तोऽभवम् ॥ ४४ ॥

४५. ( वळ्वेळुन्तवळ माड ) सुसमृद्धविशुद्धसौधमण्डलमण्डितायाम् उत्तरमथुरानगर्यां व्यापादितकुवलयापीडमत्तमातङ्गं श्रीकृष्णं श्रीरङ्गशायिनमधिकृत्य तुलसीभृत्येन भक्ताङ्घ्रिरेणुना विज्ञापिता सैषा कविता ह्योदिष्टाऽपि अवद्यभरिताऽपि भगवतः श्रीरङ्गनाथस्य परमभोग्यैव ननु ॥

श्लो० हतकंसमदावलरङ्गपतिं स्तुवता तुलसीपरिचारकृता ।
प्रणतांघ्रिरजोमुनिना रचिता कविता विगुणाऽपि हरेस्सुखदा ॥ ४५ ॥

इति श्रीभक्ताङ्घ्रिरेणुसूरिप्रवरानुगृहीतश्रीमालाप्रबन्धस्य

श्रीकाञ्चीप्रतिवादिभयङ्कर. अण्णङ्गराचार्य

संकलितो विवर्तो गद्यपद्यमयः समाप्तः ॥

॥ श्रीरस्तु ॥

श्रीपराङ्कुशपरकालयतिवर वरवरमुनीन्द्रेभ्यो नमः ॥

श्रीभक्तांघ्रिरेणुदिव्यसूरिणाऽनुगृहीतः

तिरुप्पळ्ळियेळुच्चिनामा

# ॥ सुप्रभातप्रबन्धः ॥

श्रीकाञ्ची प्रतिवादिभयङ्कर - अण्णङ्गराचार्य

प्रणीत संस्कृतविवर्तसनाथः ॥

श्रीशैलेशदयापात्रमित्यादि......प्रणतोऽस्मि नित्यम् ॥

( तनियन् — मुखपद्यम् । )

तमेव मत्वा परवासुदेवं रङ्गेशयं राजवदर्हणीयम् ।

प्राबोधिकीं योऽकृत सूक्तिमालां भक्तांघ्रिरेणुं भगवन्तमीडे ॥

( द्वितीयं मुखपद्यम्—द्राविडभाषामयम् । मण्डङ्गुडियेन्बर् )

श्लोकः भ्रमरमुखरकेदाराढ्यरङ्गक्षितीशे शयनविगमकाङ्क्षापद्यगानप्रवीणः ।

जननमकृत भक्तांघ्रयब्जजरेणुर्महात्मा माहितयशासि मण्डङ्गुड्यभिख्ये प्रदेशे ॥

# ॥ सुप्रभातदिव्यप्रबन्धावतारिका ॥

श्रीभक्तांघिरेणुदिव्यसूरिणाऽनुगृहीते दिव्यप्रबन्धद्वितये द्वितीयोऽयं प्रबन्धः श्रीरङ्गनाथभगवत्सुप्रभातगानगोचरः । तिरुप्पळ्ळियेळुच्चीति द्राविडव्यपदेशः ; "पळ्ळियेळुच्चि" इतीदं द्राविडपदं शयनादुत्थापनमित्यर्थकम् ; दिव्यप्रबन्धेऽस्मिन् दशस्वपि गाथासु "श्रीरङ्गनाथ ! शयनीयादुत्तिष्ठ भोः" इति कीर्तनादन्वर्थनामा सोऽयं प्रबन्धः । "तिरु" इति पदं दिव्यप्रबन्धान्तरेष्विवात्रापि शोभनार्थकम् । यद्यपि श्रीरङ्गनाथभगवद्विषयकोऽयं दिव्यप्रबन्धः ; तथाऽपि सर्वेष्वपि दिव्यदेशेषु सकलेष्वपि भवनेषु प्रत्यहमाराधनोपक्रमे नियतमनुसन्धीयते तिरुप्पल्लाण्डुतिरुप्पावैदिव्यप्रबन्धयोर्मध्य इति ताभ्यां समानमहिमा सोऽयं वेदितव्यः । भगवतः शयनादुत्थापनमित्यस्मिन विषये काचन शङ्का भवितुमर्हति प्राकृतानामस्मादृशाम् ; सदा प्रबुद्धस्य भगवतो निद्राप्रसक्तिरेव ननु नास्ति; निद्रा च तमोगुणकार्यभूता, सा परमसत्त्वसमाश्रये परमपुरुषे संभवितुं नार्हति च । एवंच सति * शयनादुत्तिष्ठेति प्रबोधनस्य कास्वित्प्रसक्तिरिति । अत्रोच्यते; अर्चावतारे भगवतः क्रियमाणा उपचारा राजोपचारसधर्माण इति पाञ्चरात्रशास्त्रप्रणाली । लोके वन्दिनो राज्ञां शयनभवनाद्बहिरवस्थाय "अवनमदखिलमहीमण्डलमण्डना-यमानमहीपतिमकुटतटहीरमणिप्रभापुञ्जमन्दाकिनीपयः-पूरप्रक्षालितपादारविन्दयुगल महाप्रभो! जागृहि, तव सुप्रभातम्" इति गायन्ति समुत्थापनगद्यपद्यानीति प्रसिद्धमेतत् । अनयैव प्रक्रियया भगवानपि

समुद्बोध्यत इति न किञ्चिदनुपपन्नम्; एतदेव "तमेव मत्वा परवासुदेवं रङ्गेशयं राजवदर्हणीयम्" इति मुखपद्यतोऽपि विशदीकृतम्। वस्तुतो विभवावतारेषु "कौसल्यासुप्रजाराम! पूर्वा सन्ध्या प्रवर्तते। उत्तिष्ठ नरशार्दूल! कर्तव्यं दैवमाह्निकम्॥" इत्यादितः प्रबोधनस्य प्रसिद्धत्वात् तदनुकरणमर्चावतारे न विप्रतिपत्तियोग्यमिति ध्येयम्॥ इत्यवतारिका॥ ... ... ... *

१. (कदिरवन् कुणदिशैच्चिहरम्) भो भगवन् श्रीरङ्गनाथ! भास्करः प्राच्यां दिशि उदयशिखरिशिखरमाससाद; सान्द्रं तिमिरं व्यलीयत; प्राभातिकी श्रीरुदियाय। श्रेष्ठानि सर्वाण्यपि पुष्पाणि विकचानि मधुस्यन्दीनि भवन्ति। अमराश्च राजानश्च अहमहमिकया समेत्य संघीभूय प्राथमिक-कटाक्षवीक्षालाभाय पुरतोऽवतिष्ठन्ते सकलमप्यवकाशमाक्रम्य। एतैस्सह प्रविष्टाः (वाहनभूताः) करिणश्च करिण्यश्च मुरजादिवाद्यवर्गाश्च उत्तरङ्गतरङ्गमालिनिर्विशेषं मुखरा भवन्ति। अतश्च शयनं विसृज्य समुत्तिष्ठ स्वामिन् कृपया॥

श्लो० चण्डांशुस्त्रिदशेन्द्रदिङ्मुखमहो संप्राप्तवान् साम्प्रतं
सान्द्रं ध्वान्तमिह व्यलयित यतः प्राभातिकी श्रीरुदैत्।
नानापुष्पचयाः स्रवन्मधुभरा व्याकोचभावं दधुः
देवा भूपतयश्च बृन्दश इह त्वाजग्मिवांसो मुहुः॥

स्वामिन्नाग्रेमदिङ्मुखे ह्यविरला राजन्त्यमीभिस्समं
संप्राप्ताः करिणो वशाश्च विविधाः, भेर्यश्च पाथोधिवत्।
गम्भीरं निनदं वितन्वत इह श्रीरङ्गपृथ्वीपते!
भोगीन्द्राधिपभोगरूपशयनादुत्तिष्ठ कारुण्यतः॥ १॥

२. (कोळुङ्कोडि) भगवन् श्रीरङ्गनाथ! प्राच्यः पवनः सुकुमारमागधीलताविलसत्कुसुमेषु व्याप्य तत्सौरभसंभृतः पवते ततस्ततः; पुष्पतल्पेषु निद्राणा मरालाः प्रालेयसिक्तान् स्वकीयान् पक्षान् विधून्वानास्सन्त स्त्यक्तनिद्रा स्समुत्तस्थुः। स्वचरणग्राहकग्राहवक्त्रदंष्ट्राभिभूते गजेन्द्रे क्रोशति सति सरभसमुपेत्य तस्य पीडां परिहृतवन् प्रभो! समुत्तिष्ठ करुणया॥

श्लो० प्राचीनः पवनो मनोहरलतासंयुक्तसन्मागधी-
सौरभ्येण सहाभिवाति, शयनं पुष्पात्मकं संश्रिताः।
हंसाः स्वीयमनोहरच्छदततिं प्रालेयपुञ्जाञ्चितां
धून्वाना अभजन् समुत्थितिमहो संत्यक्तनिद्रासुखाः॥

घोरग्राहगुहोपमाननलसद्दंष्ट्राविषोदश्चन-
प्रोत्ताम्यद्गजराजदुःखदलनप्रख्यातविख्यातिक।
श्रीरङ्गोपवनीविहाररसिक श्रीरङ्गपृथ्वीपते!
भोगीन्द्राधिपभोगरूपशयनादुत्तिष्ठ कारुण्यतः॥ २॥

३. ( शुडरोळि परन्दन ) भगवन् श्रीरङ्गनाथ ! दिक्षु विदिक्षु च भास्करकिरणाः प्रसृमरा अभूवन् । सान्द्राणामुडुगणानां तेजो विलिल्ये । उडुपतिश्च प्रहीणतेजा अभवत् । विस्तृतं तिमिरमपाहीयत । प्राभातिकः पवनस्सुकुमारोपवनविलसत्पूगवृक्षस्थपाळीषु प्रविश्य तत्सौरभसंभृतः पवते । पराभिभवननिपुणतेजःपुञ्जहेतिराजालंकृतपाणितल ! प्रभो ! शयनादुत्तिष्ठ करुणया ॥

व्याप्तोष्णांशुमरीचिकास्समभवन् सर्वे प्रदेशा अमी
प्रोद्दीप्तान्युडुमण्डलानि विगलत्तेजांस्यभूवन् दिवि ।
ज्योतिष्मांस्तुहिनांशुरप्यतितरां जग्लौ विहीनांशुकः
भूयिष्ठं तिमिरं निरस्तमभवत् चण्डांशुभानूत्करैः ॥

प्रातर्मारुत एष रम्यविपिने सत्पूगपत्रीततिं
भिन्दंस्तत्कुहलीः प्रविश्य परितश्चाघ्राय तत्सौरभम् ।
आवातीह समन्ततः करलसत्तेजस्विचक्रायुध !
श्रीरङ्गेश ! फणीन्द्रभोगशयनादुत्तिष्ठ कारुण्यतः ॥ ३ ॥

४. ( मेट्टिल मेदिहळ ) भो भगवन् श्रीरङ्गनाथ ! उत्तुङ्गबालमहिषीणां बन्धोन्मोचनावसरे वल्लवैराध्मातस्य वेणोर्निनदो वृषभकण्ठस्थघण्टाध्वनिश्च संसृज्य दिगन्तव्यापृतोऽभूत; केदारेषु भ्रमरविततिः सझङ्कारमुत्तस्थौ सर्वतः । रक्षोगणसमूलोन्मूलनविचक्षणशार्ङ्गपाणे ! देवाधिदेव ! विश्वामित्रयागसंरक्षणेन तदवभृथस्नानप्रपूरक ! महावीर ! साकेतपुराधिनाथ ! शयनमुत्सृज्य समुत्तिष्ठ करुणया ॥

तुङ्गान् सैरिभपोतकान् विसृजतां गोपालकानां मुखे
वेणूनां निनदस्तथा गललसद्घण्टानिनादो गवाम् ।
संभूय प्रसृतो दिगन्तमगमत् केदारभागे तथा
झंकारोत्सुकचञ्चरीकनिवहाः कोलाहलं कुर्वते ॥

लङ्कावासिकुलप्रणाशकमहाकोदण्डपाणे हरे
विश्वामित्रमुनीन्द्रसत्रमभिरक्ष्यासादितख्यातिक ।
उद्दण्डातुलविक्रमोज्ज्वल विभो ! साकेतपुर्याः पते !
श्रीरङ्गेश्वर ! भोगिभोगशयनादुत्तिष्ठ कारुण्यतः ॥ ४ ॥

५. ( पुलम्बिन पुट्कळुम ) समृद्धकुसुममहोद्यानेषु पक्षिणः प्रबुध्य कलकलमातन्वते; रात्रिर्व्यपैत्, प्रभातमुदैत । प्राच्यां दिशि घुष्यतस्सागरस्य समुद्घोषस्सर्वतो व्यापृतः । मधुकरखरविञ्चिबमालाहस्ता अमराः त्वत्पादारविन्दसेवार्थं समुपस्थिताः । अतश्च लङ्केश्वरविभीषणपरिचर्यास्पदश्रीरङ्गविमानशायिन् अखिलजगत्स्वामिन् अस्मत्स्वामिन् श्रीरङ्गनाथ ! जागृहि कृपया ॥ ... *

पुष्यद्वृक्षवनक्षितौ शकुनयस्तन्वन्ति कोलाहलं
निश्शेषं प्रययौ निशा, समुदभूच्छुभ्रं प्रभातं विभो ।

उद्बोधैकपटोस्तटिन्यधिपतेः प्राच्यामजन्याग्वो
मध्वास्वादनमोदमानमधुपैर्झंकारिभिर्व्यापृताम् ॥
नानाजातिभवैस्सुमैर्विरचितां रम्यां स्रजं निस्तुलाम
आदाय त्रिदशा भवच्चरणयोस्सेवार्थमत्रागताः ।
तस्माद्भक्तविभीषणोपचरितश्रीरङ्गनाथ प्रभो
भोगीन्द्राधिपभोगरूपशयनादुत्तिष्ठ कारुण्यतः ॥ ५ ॥

६. (इरवियर्मणिनेडुन्तेरोडुमिवरो) विलक्षणबृहत्तरस्यन्दनसनाथा द्वादशादित्या इह समायुः; जगन्निर्वाहधुरन्धरा एकादश रुद्राश्चात्र समुपागताः; बर्हिवाहनः षण्मुखश्चात्र समुपस्थितः; नव मरुद्गणा अष्टौ वसवश्च अहमहमिकया समेत्य सान्द्रास्सन्ति । एषां वाहनभूता वाजिसनाथा रथाश्च तिष्ठन्ति । गीतनृत्तान्विता देवसेनासमूहाश्च बृहत्तरगिरिवरसंनिभ - तावकमन्दिरे पुरतोऽवतिष्ठन्ते । भगवन् रङ्गनाथ ! जागृहि करुणया ॥

चेतोहारिभिरुत्तमैस्सह रथैरादित्यवर्गा अमी
किंचैकादशसंख्यकास्सुमहिता रुद्रास्तथाऽत्रागताः ।
अत्यन्तप्रियकेकिवाहनसमारूढः षडास्योऽप्यमी
तेऽप्यष्टौ वसवो मरुद्वरगणाः मेरोस्समेऽत्रालये ॥
संघीभूय सवाहना उपगतास्संगीतनृत्तान्विताः
सेनेशश्च समं निजैः परिकरैरत्राययौ सादरम् ।
युष्मत्प्राथमिकाक्षिपातमखिलाः कांक्षन्ति भक्ता अमी
श्रीरङ्गेश्वर ! भोगिभोगशयनादुत्तिष्ठ कारुण्यतः ॥ ६ ॥

७ (अन्दरत्तमरर्हळ् कूट्टङ्गळिवैयो) अस्मत्स्वामिन् ! तावकीनदिव्यालयद्वारि देवेन्द्रः स्वकीय वाहनभूतेनैरावतेन गजराजेन साकं समायातः । सपरिवारा अण्डान्तर्वर्तिनो देवाः महातपस्विनस्सनकादिमहर्षयो मरुद्गणा यक्षा गन्धर्वाश्च मिथस्संघर्षसमुत्पादकास्सन्तः त्वत्पादारविन्दसेवाहेवाकेन व्यामुग्धा वर्तन्ते । द्यावापृथिव्यौ निरवकाशलेशे वर्तेते । श्रीरङ्गनाथ ! जागृहि कृपया ॥

श्लो० श्रीरङ्गाधिप ! युष्मदीयनिलयद्वारोपकण्ठे समं
सर्वैः स्वैः परिवारकैस्सुरजना अण्डान्तरस्था अमी ।
निस्संख्या मुनयः सुदुश्चरतपश्चर्या मरुद्भिस्सह
स्वीयैरावतहस्तिराजमहितः स्वर्गाधिपो वासवः ॥
गान्धर्वं च कुलं निरन्तरमिदं विद्याधराणां गणो
यक्षाणां निवहो भवच्चरणयोस्सेवार्थमत्रागताः ।
जाता मुग्धहृदो नभःक्षितितले जाते च वीतान्तरे
तद्भोगीश्वरभोगरूपशयनादुत्तिष्ठ कारुण्यतः ॥ ७ ॥

८. (वम्बविळ् वानवर्वायुर् वळङ्ग) भगवन् श्रीरङ्गनाथ! भवते समर्पयितुं सौरभसमृद्धानि दूर्वादलानि शंखनिधिपद्मनिधिप्रमुखानुत्तमनिधीन् कामधेनुम् रमणीयं मुकुरम् अन्यान्यानि च द्रव्याणि मङ्गलद्रव्याणि समाराधनोपकरणानि च समादाय देवा महर्षयस्तुम्बुरुनारदादयश्च समुपस्थिताः, भास्करश्च स्वकीयगभस्तिविततीर्विश्वतः प्रसार्य प्रादुर्बभूव । तिमिरं चाम्बरतलादपगतम्; स्वामिन् जागृहि करुणया ॥

श्लो० त्वत्पादाब्जसमर्पणाय सुरभिं दूर्वां वरिष्ठान् निधीन्
आनीय त्रिदशास्समं कपिलया सादर्शमासेवितुम् ।
देवं त्वां परमं हरिं समुचितैस्सत्साधनैस्संयुताः
योगीन्द्रास्सनकादयस्सुमहिता अत्रोपयाता अमी ॥
ख्यातौ तुम्बुरुनारदौ श्रुतिसुखं गातुं समभ्यागतौ
नैजामंशुततिं सहस्रकिरणः प्रख्यापयन् भासते ।
निश्शेषं तिमिरं विहायसतलाद्दूरीबभूव प्रभो!
श्रीरङ्गेश्वर! भोगिभोगशयनादुत्तिष्ठ कारुण्यतः ॥ ८ ॥

९. (एदमिल् तण्णुमै) भो भगवन्! निरवद्यान् लघुपटहान् एकतन्त्रीवाद्यमृदङ्गवीणामुरलीश्च दिगन्तविसृत्वरनिनदशालिनीः कुर्वन्तो गायकोत्तमाः किन्नरा गरुडा गन्धर्वाश्चात्र समुपागताः। अन्ये च महर्षयो देवाश्चारणा यक्षास्सिद्धाश्च भवत्पादारविन्दप्रणिपाताय कृत्स्नायामपि रजन्यां संघीभूय व्यामुग्धा अवतिष्ठन्ते । ततश्चैतेभ्यो दयाशिशिरितदिव्यदर्शनानुग्रहणाय श्रीरङ्गनाथ जागृहि कृपया ॥

श्लो० निर्दोषान्पटहानुत्तमानपृथुलान् गान्धालकान्मर्दलान्
सद्वीणा मुरलीस्तथैव महतीरुद्घोष्य भेरीः स्फुटम् ।
गायन्तस्सुचिरेण रात्रिसमये गन्धर्वयक्षामराः
योगीन्द्रा गरुडाश्च किन्नरगणास्सिद्धास्तथा चारणाः ॥
संजाता इह मोहयुक्तमनसस्संसेवितुं तेऽधुना
पादाम्भोजयुगं रमाप्रियपते! श्रीरङ्गपृथ्वीपते ।
एतेभ्यः करुणार्द्रदृष्टिमनघां दातुं हरे सादरं
भोगीन्द्राधिपभोगरूपशयनादुत्तिष्ठ कारुण्यतः ॥ ९ ॥

१०. (कडिमलर्क्कमलङ्गळ् मलर्न्दनविवैयो) सह्यजातीर्थपरिवृत श्रीरङ्गशय! सुरभीणि कमलकुसुमानि पुष्कलविकासं दधुः । भास्करश्चोदयशिखरिणः शिखरमासीदतिस्म । कृशोदर्यो ललनाश्च स्नात्वा केशपाशानुपशोष्य धृतचेलाः प्रस्थिताः । ग्रथितया तुलसीस्रजा गर्भितं पुष्पकण्डोलं भुजमूले बिभ्राणमुपागतं भक्ताङ्घ्रिरेणुनामानं दासमिमम् 'दयनीयोऽयम्' इति धियाऽङ्गीकृत्य त्वद्भक्तभक्तमाकलयितुं परमकृपया शयनात्समुत्तिष्ठ भो ॥ [विवरणम्;—श्रीरङ्गनाथो भगवान् साक्षाद्गोपालकृष्ण

एवंत्यध्यवसायो दिव्यसूरीणाम् । ततश्च तस्यान्तरङ्गं प्रहर्षयितुमेव ललनास्नानप्रस्तावोऽत्र कृत इति प्रतिपत्तव्यम् । ललनासामान्यवाची शब्द इह विशेषतो गोपीजनप्रतिपादक इति प्रतिपत्तव्यम् । गोपीजनस्नानप्रसङ्गे सति गोपीवस्त्रापहरणकुतूहलिनः कृष्णकिशोरस्य शयनादुत्थाने त्वरातिशयो भवेदिति हृदयम् ॥ ]

श्लो० संकोचं परिमुञ्चतिस्म कमलं सौरभ्यपूर्णं बहु
प्राचीनातपयसांनिधेस्तु मुखगाद्भास्वानुदेतिस्म च ।
ढक्कासोदरमध्ययुक्तवनिताः स्नात्वा कचान्निर्जलान्
कृत्वाऽऽस्फाल्य धृताम्बरा उपगतास्सह्याद्रिकन्यातटात् ॥

सत्पुष्पैस्तुलसीस्रजा च सहितं कण्डोलकं बिभ्रतं
भक्तांघ्रयम्बुजरेणुसंज्ञमधुना मामागतं त्वज्जनम् ।
कारुण्यार्ह इति त्वदीयकृपया त्वद्दासदासोत्तमं
कर्तुं रङ्गपते ! भुजङ्गशयनादुत्तिष्ठ कारुण्यतः ॥ १० ॥

इति श्रीभक्तांघ्रिरेणुदिव्यसूरिवरानुगृहीतस्य तिरुप्पळ्ळियेळुच्चिनाम्नः सुप्रभातदिव्यप्रबन्धस्य
श्रीकाञ्चीप्रतिवादिभयङ्कर - अण्णङ्गराचार्यविरचितो
गद्यपद्यमयः संस्कृतविवर्तः समाप्तः ॥

॥ श्रीभक्तांघ्रिरेणुमुनीन्द्रचरणौ शरणम् ॥
श्रीशठकोपयतिवरवरवरमुनीन्द्रेभ्यो नमः ॥

---

श्रीरस्तु ।

श्रीपराङ्कुशपरकालयतिवरवरवरमुनीन्द्रेभ्यो नमः ।

श्रीमुनिवाहनदिव्यसूरये नमः ॥

सरोयोगिसमारम्भां श्रीपराङ्कुशमध्यमाम् । परकालान्तिमां वन्दे दिव्यसूरिपरम्पराम् ॥

श्रीपाणसूरिसमाख्यमुनिवाहनदिव्यसूरिवरानुगृहीतः

# ॥ अमलनादिपिरान्दिव्यप्रबन्धः ॥

( श्रीरङ्गनाथभगवत्पादादिनेत्रानन्दस्तवः । )

[ श्रीकाञ्चीप्रतिवादिभयङ्कर - अण्णङ्गराचार्यप्रणीत संस्कृतविवर्तसमेतः ॥

— तानियन्नामकमुखपद्यद्वये प्रथमं पद्यम् —

श्लो० ॥ आपादचूडमनुभूय हरिं शयानं मध्ये कवेरदुहितुर्मुदितान्तरात्मा ।
अद्रष्टृतां नयनयोर्विषयान्तराणां यो निश्चिकाय मनवै मुनिवाहनं तम् ॥

( संक्षिप्तविवरणम् :— ) कवेरदुहितुर्मध्ये—कावेरीमध्यदेशे । शयानं हरिम् आपादचूडमनुभूय—फणिपतिमधिशयानं श्रीरङ्गनाथं भगवन्तं पादादिचूडान्तं दिव्यावयवसौन्दर्यमनुभूय । अत एव, मुदितान्तरात्मा—प्रहृष्टमनाः यः पाणसूरिः, नयनयोः विषयान्तराणामद्रष्टृतां निश्चिकाय—स्वकीयं नयनद्वयं श्रीरङ्गशायिनः परमपुरुषादन्यद्वस्तु नैव पश्येदिति निश्चिनोतिस्म । तं मुनिवाहनं मनवै—तिरुप्पाणाळ्वारभिधानं तं दिव्यसूरिं ध्यायानि । सूरेरस्य मुनिवाहननामविषयक इतिहासस्तावदनुपदं प्रकाश्यमाने अदसीये वैभवे द्रष्टव्यः ॥

— द्वितीयं तनियन्पद्यम् – काट्टवेकण्डपाद —

[ अस्य द्राविडपद्यस्य संस्कृतविवर्तपद्यम्— ]

श्लो० यस्सारङ्गमुनीश्वरांसविधृतः श्रीरङ्गनाथालयं
गत्वा तन्मुनिदर्शितं पदयुगं पीताम्बरं रङ्गिणः ।
नाभिं तां रशनामुरो गलमथो दिव्याधरं लोचने
दिव्यं वर्ष्म च वीक्ष्य हृष्टहृदभूत्तं पाणसूरिं स्तुमः ॥

( अथ प्रबन्धव्याख्यानावतारिका । ) दिव्यसूरिवर्गे नावमिकेन श्रीमुनिवाहनसूरिवरेण दशगाथात्मकस्सोऽयमेक एव दिव्यप्रबन्धोऽन्वग्राहि । अस्य—" अमलनादिपिरान्प्रबन्धः " इतितावदाख्या प्रथते । आख्याया अस्याः कोऽर्थ इति चेत् ; प्रकृतप्रबन्धोपक्रमस्थपदराशिप्रकाशनरूपसंकेतसिद्धा सेयं समाख्या । सोऽयं प्रबन्धः " अमलनादिपिरान् " इत्युपक्रमशालीति हेतुना उपक्रमसंकेतव्यपदेशनिबन्धना सेयं समा-

त्यैत्युक्तं भवति। एतदुपरितनप्रबन्धस्य श्रीमधुरकविप्रणीतस्य "कण्णिनुण्शिरुत्ताम्बु" इत्येष व्यपदेशोऽप्येतादृश एवेत्यवगन्तव्यम्। सोऽयं दिव्यप्रबन्धः चतुस्सहस्रदिव्य प्रबन्धवर्गे प्रथमसहस्रे नवमत्वेन परिगणितः। श्रीरङ्गनाथस्य भगवतः पादादिनेत्रान्तकतिपयदिव्यावयवसौन्दर्यानुभवपरीवाहरूपेणावतीर्णोऽयं दिव्यप्रबन्धः परमभक्तानां नित्यानुसन्धेयप्रबन्धेष्वग्रिमं स्थानमलङ्करोतीत्यनुभवरसिका विजानन्ति। दिव्यप्रबन्धेऽस्मिन् श्रीरङ्गनाथः श्रीवेङ्कटाद्रिनाथश्चेत्युभावेव दिव्यदेशस्वामिनौ कीर्तितौ। श्रीरङ्गनाथस्य कीर्तनमेवात्र प्रधानम्; अन्यत्तूपसर्जनभूतमिति वेदितव्यम् ॥......इत्यवतारिका ॥

## ॥ अथ मुनिवाहनसूरिवैभवम् ॥

वृश्चिके मासि रोहिण्यामुदितस्य महीतले। श्रीपाणसूरेर्महिमा महिष्ठः प्रतिपाद्यते ॥

चोलमण्डलीयेषु राजनगरेषु पञ्चस्वन्यतमे, धर्मवर्मनाम्नस्तनयात्वेन नीलादेव्या अवतारेण महिते च निचुलापुरे [उरैयूरुक्षेत्रे] वृश्चिकमासीये रोहिणीभे शुभे शिशुः कश्चिदवततार द्विजन्मनः कस्यचन केदारे सस्यमुखात्। तथाऽवतीर्णं तं दिव्यं शिशुं तत्रत्यः कोऽपि पञ्चमजातीयस्समवेक्ष्य जन्मान्तरसुकृतफलपरिपाकोऽयं न इति संतुष्यन् चिरंतनमनपत्यतादुःखमात्मीयमपाचिकीर्षता परमकारुणिकेन परमात्मना प्रेषित इवायं सुन्दरः शिशुरिति सुदृढमध्यवस्यन् परिगृह्य पत्नीहस्ते प्रदाय गोक्षीरादिभिः परिशुद्धाभ्यवहारैरेव परिपोषयन्नवर्तत।

एवं नाम वलक्षपक्षविधुरिव वर्धमानोऽयं महान् केवलभगवत्कृपामूलकस्वावतारो यतस्तत एव लौकिकव्यासङ्गविरहितो भगवत्पादरविन्दमधुकरीभूतमानसो वीणागानप्रवीणस्तत एव पाणसूरिरिति प्रथामुपेयिवान् नारदमहर्षिनिर्विशेषं ज्ञानवैराग्यशेवधिः संगीतकलाकुशलश्च समुल्ललास।

महाभागवताग्रणीरेष गायकमणिः श्रीरङ्गनाथभगवदन्तरङ्गप्रहर्षणाय संगीतगानकैङ्कर्यं संविधित्सुः प्रस्थाय 'जघन्यकुलसंभूतोऽहमुभयकावेरीमध्यविराजमाने श्रीरङ्गदिव्यक्षेत्रे कथमिव पादं विन्यस्येयम्।' इति चकितमना दक्षिणकावेरीतीर एव दूरादवस्थाय वीणापाणिस्सन् भगवद्रङ्गनाथविषयकाणि दिव्यभव्यकीर्तनानि कर्णामृततया गायन् किन्नरगन्धर्वादीनपि लज्जाविवशान् वितन्वन्नवर्तत।

श्रीतोताद्रिसन्निहिते * तिरुक्कुरुङ्गुडिनाम्नि दिव्यक्षेत्रे पुरा भगवद्विषयकाणि गीतानि गायंगायं, कैशिकाख्यगीतप्रभावभूम्ना ब्रह्मराक्षसमपि शरणागतं संशोध्य सद्गतिं च प्रापय्य स्वयमपि संसारादुत्तीर्णो यो * नम्पाडुवान्नामा जात्या मातङ्गः परमभागवतः, तस्मादप्यतिशयितमहिमा भक्ताग्रेसरस्सोऽयं पाणसूरिः * आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान्। सदा परगुणाविष्टः * इत्युक्तप्रक्रियया विकृतसर्वावयवो नित्यशः प्रभाते दक्षिणकवेरकन्यारोधसि भगवन्मुखोल्लासहेतुभूतदिव्यगानकैङ्कर्यनिष्णातस्सन्नेव कालं चिक्षेप।

क्षिप्यमाणे चैवं बहुले काले, नित्यं श्रीरङ्गनाथाय भगवते तीर्थमाभिषेचनिकमुपहरन् लोकसारङ्गमहामुनिर्नाम ब्राह्मणोत्तमः कस्मिंश्चन दिने तीर्थनयनाय सौवर्णकुम्भसनाथपाणिः कावेरीमुपगम्य नातिदूरेऽवतिष्ठमानं पाणसूरिं प्रेक्ष्य जुगुप्सितमनाः 'रे अधम! अपसर' इत्याचक्रन्द। अथापि सोऽयं नापासरत् यतोऽस्तमितान्यभावो भगवत्पादारविन्दैकप्रवणहृदयो * नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीत्युक्तरीत्याऽवतस्थे।

अपसरेत्यभिहितोऽपि नापसरत्ययमवलेपभरात् तिष्ठति च तत्रैव स्थाणुरिवेत्याकर्ण्य जात्यभिमानशालिनः केचन द्विजन्मानस्सरभसमभ्येत्य, अपेह्यपेहि पाप चण्डालेति मुहुराचक्रन्दुः। सर्वथाऽपि भग-

तत्पादारविन्दसक्तचित्तस्य स्वात्मानमत्यन्तं विस्मृतवतश्च पाणसूरेः कर्णकुहरे तदप्याक्रन्दनं नैव निपपात। ततोऽयं स्थानान्मनागप्यचलितो गानैकतत्परोऽवतस्थे। आगता ब्राह्मणास्तु तथानामावतस्थिवांसमेनमालोक्य 'नायं ज्ञानयोगी; अपि तु गानयोगीव' इति मन्वाना यथागतं प्रतिनिववृतिरे। जाल्मा मूर्खाश्च कतिपये विप्रास्तु यथाकथञ्चिदप्येनं प्रसभमपसार्यैव कार्यमन्यत्पश्येमेति कृतशपथा अश्मखण्डान् प्रचिक्षिपुरस्य गात्रे। वपुषि निपतितैरपि तैः कल्यऽपि नैष विव्यथे नापि चचाल; * गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः। अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः * इत्यदः पौराणिकमेव पद्यरत्नं स्मारयामास। तादृशीं स्थितिममुष्य दृष्टवन्तस्ते विस्मिता भीतभीताश्च विसर्पन्तिस्म।

यद्यप्यश्मखण्डप्रक्षेपणात् पाणसूरेर्वपुषि वा मनसि वा न काऽपि व्यथा मनागप्युदियाय, तथाऽपि पारमार्थिकभक्तजनान्तःकरणशरणस्य भगवतो रङ्गरमणस्य हृदयमतिमात्रमवसीदति स्म, फालतलं च रुधिररूषं दृदृशे। तदिदं दृष्टशिवानर्चकमहाभागो भृशं विह्वलश्चकितो भगवदालयाधिकारिणां सविधे 'हा बत! किमेतदत्याहितम्! क्षिप्रमवधत भृशम्' इति सनिर्वेदभरमावेदयामास। तं च तमिममुत्पातवृत्तान्तमविलम्बेन भूपतिमबोधयन्। स च सचिवेन सह संमन्त्रयन्नपि 'कथमिदं जातम्! कश्च परिहारमार्ग' इतीषदप्यसंविदानो भगवत एव पादारविन्दयोर्भरं विन्यस्थत्सर्वथा। ततः पूर्वं कदाचित् श्रीरङ्गरमणी स्वात्मनः प्राणवल्लभमुद्दिश्य 'नाथ! चिरादेव नौ नित्यं निध्यायन् पाणसूरिरावयोर्नेदीयान् खलु वर्तितुमर्हति; कुतो नु स दवीयान्वर्तते?' इत्यनुयुज्य, अचिरात्स भविष्यति नौ नेदीयानिति पत्युः प्रतिवचनमलभत च। संनिदधे च तस्या मनोरथपूरणावसरः। तथा पाणसूरेरसमाभ्यधिकवैभवप्रकाशनौपयिकसमयविशेषश्च समुपस्थितः। भगवत्प्राप्तिर्जातिविशेषो नानुकूलो न च प्रतिकूलः, भक्तिरेवैव तदनुकूलेति सकलशास्त्रसारार्थतत्त्वं प्रचिख्यापयिषु रङ्गनाथो भगवान् लोकसारङ्गमहामुनेः स्वप्ने समुपस्थाय 'परमपवित्रचरित्रं भक्तिभूषणं भागवताग्रगण्यमस्मदीयं पाणसूरिं स्कन्धोपरि समुपवेश्य समानय तावदिह सत्वरम्' इति दिदेश दिव्यशासनम्। ब्राह्मे मुहूर्ते शयनादुत्थितस्स मुनिपुंगवः स्वप्नलब्धं शासनमनुचिन्त्य सुबहु विस्मयमानो धन्यधन्यमात्मानं मन्यमानश्च सन् सर्वतः प्रकाश्य तद्भगवतश्शासनं भूयिष्ठया ब्राह्मणगोष्ठ्या परिवृतः कनकसरित्परिसरमुपेत्य तत्र स्नात्वा धृतधौतवस्त्रो द्वादशोर्ध्वपुण्ड्राञ्चिततनुर्निर्वर्तितप्रातराह्निकोऽथ पाणसूरेरवस्थितिस्थलमभ्युपेत्य तत्पादयोस्साष्टाङ्गं प्रणिपत्य न्यवेदयद्रङ्गरमणस्य निरुपममव्याजकरुणापरिणामरूपं शासनम्।

निशम्य चैतदेष निजं निकर्षं वस्तुतो व्याहरन् कथमहं पावनीं रङ्गभुवम् अतिमात्रहेयमत्पादन्यासेन दूषयेयम्? सर्वथा मत्स्वरूपविरुद्धमिदं शासनं कथमवतीर्णम्? कथं वा तदिदमयं जनः पालयितुं प्रभवेदिति विज्ञापयन् संकोचमात्मीयमुदघाटयत।

अथ मुनिवरो व्याचष्ट—मा नाम भूत्पादन्यासो भवतो भगवदावसथे; यथा हि भगवान् भक्तमतः स्कन्धमध्यास्ते तथा तत्रभवान् धन्यजन्मनो दासस्यास्य स्कन्धमधिरोहतात्; एवमेव चाहं भगवता संदिष्टोऽस्मीति। श्रुत्वा तदेतत्पाणसूरिः 'आः कष्टं कष्टम्! किमेतदुच्यते! कथं वैतन्मया श्रूयते? कम्पते मे गात्रम्, वेपते च हृदयम्। भागवतपादारविन्दयोर्मूर्धानमर्पयितुमप्यनर्होऽयं जनः कथमिवैतत्साहसं कलयितुमीष्टे? कृपया विसृज्यतामयं जनः' इति सप्रश्रयं प्रार्थयते स्म बद्धेनाञ्जलिना नतेन शिरसा गात्रैस्सरोमोद्गमैः कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना।

अथ च मुनिसार्वभौमस्सर्वथाऽप्यनुल्लंघनीयां भगवदाज्ञां विज्ञापयन् भृशं निबध्नन् पाणसूरिम् ओमित्यङ्गीकाराभिमुखमाततान। स्थाने चैतदत्यन्तपरतन्त्रमात्मस्वरूपमभिविदुषः। सद्यो मुनिवरस्य स्कन्धमध्यास्त बद्धाञ्जलिपुटः पाणसूरिः अनुसंधातुमारेभे च * अमलनादिपिरानित्युपक्रमशालिनमनुपमं (स्वकीयं) दिव्यप्रबन्धम्। तत्र प्रथमगाथायां प्रथमचरणे चरितमिदमंशतस्सूचयामास च * अडियार्क्कॆन्नै आट्पडुत्त विमलन् * इति। भागवतपारतन्त्र्यसीमाभूमौ निवेशितोऽभूवमहं भगवतेति तदर्थः।

स्कन्धाधिरोपितपाणसूरिर्मुनिसार्वभौमः श्रीरङ्गनाथदिव्यालये आमोदस्तम्भपरिसरं प्राप्य शेषशायिनो भगवतः पुरस्तादवतारयदमुं तथा, यथा ह्यातिवाहिकगणो मुक्तात्मानं नीत्वा श्रीमदानन्दमन्दिरमहामणिमण्डपान्तरवतारयति।

अमुनैवेतिहासेन मुनिवाहन इति नाम्ना प्रथमान एष सूरिवरः श्रीरङ्गनाथदिव्यमङ्गलविग्रहमापादचूडमनुभूय मुदितान्तरात्मा स्वात्मनयनयोरन्यविषयविमुखतां संकीर्त्य स्वकीयं दिव्यप्रबन्धं दशगाथात्मकं श्रीरङ्गनाथदिव्यावयवसुषमाभिवर्णनविचक्षणं परिसमाप्य सद्यो विलक्षणभगवदङ्गीकारभाग्यभूमानमासेदिवान् तत्पादारविन्दयोरन्तर्हित एकतत्त्वभावमवजगाहे। तमिममतिशयं तदात्वे तत्र स्थितास्सर्वेऽपि सानन्दं साक्षात्कृत्य विस्मयस्तिमितमानसा अभूवन्।

गोपालो भगवान् यथा दिव्यवेणुनादेन गोकुलं प्राहर्षयत्तथा निजदिव्यवीणागाननिनदेन भगवन्तमच्युतं शेषशायिनं हर्षप्रकर्षविवशहृदयं कृतवानेष दिव्यसूरिवरः पञ्चाशतं हायनानिह लीलाविभूत्यामत्यपातयदिति वदन्ति सन्तः।

भगवान् वेदान्तदेशिको गुरुसार्वभौम एतस्मिन्पाणसूरावतिमात्रमप्रतिमं प्रावण्यं प्रकाशयन् अदसीयमेकमेव दिव्यप्रबन्धं मुनिवाहनभोगनाम्ना कृतिरत्नेन व्याचक्षाणश्च प्रख्यापयामास वैभवमेतदीयमप्रमेयम्॥

इत्थं श्रीपाणसूरीन्द्रवैभवं ध्यायतां सताम्। काले जायेत सायुज्यमच्युतस्य रमापतेः॥

॥ इति श्रीमुनिवाहनसूरिवैभवं समाप्तम्॥

## ॥ अथ प्रबन्धोपक्रमः॥

१. (अमलनादिपिरान्) अखिलहेयप्रत्यनीकस्य निखिलजगदेकनिदानस्य महोपकारकस्य भागवतशेषतां मयि समुत्पाद्य जाज्वल्यमानस्य नित्यसूरिपरिषन्निर्वाहकस्य सुरभिमहोद्यानपरीतं श्रीवेङ्कटाद्रिमधितिष्ठतः आश्रयणदुष्करत्वादिदोषवैदेशिकस्य श्रीवैकुण्ठनिकेतनस्य समुत्तुङ्गप्राकारश्रेणिपरिवेष्टिते श्रीरङ्गनामनि धामनि शयानस्य प्रभोः पादकमले स्वयमागत्य मम दृशोरन्तरवतिष्ठते॥ [विवरणम्;—"भागवतशेषतां मयि समुत्पाद्य जाज्वल्यमानस्य" इत्यत्र वेदितव्यमेतत्; भागवतोत्तमस्य लोकसारङ्गमहामुनेः अंसोपरि निषण्णस्य पाणसूरेरस्य भागवतशेषत्वसिद्धिः कथमिति नाशङ्कनीयम्; अत्यन्तपारतन्त्र्यस्वरूपानुसन्धानेन हि सोऽयं सूरिस्तस्य मुनेरंसोपरि निषसाद; शेषत्वापेक्षया समुत्तुङ्गं पारतन्त्र्यमेव हि फलितमनया चर्यया; तुलसीदलं हि भगवतः पादमूल इव शिरस्यपि समारुह्य विराजते। किं तावता तस्य शेषत्वमपहीयते? यथेष्टविनियोगार्हता फलपर्यन्ता हि सिध्यति। अविच्छिन्नपारतन्त्र्यमनुसन्धाय मुनिवाहनतामङ्गीकृतवतोऽस्य दिव्यं चरितं भागवतशेषतायाः स्थापकमेव न भञ्जकमिति प्रतिपत्तव्यम्॥]

श्लो० ॥ मां भक्ताङ्घ्रिषु किङ्करं कृतवतो हेयप्रतिद्वन्द्विनो<br>
देवाधीशितुरादिमस्य वृषभाद्रीशस्य लोकप्रभोः।<br>
प्राकाराञ्चितरङ्गधामवसतेस्सर्वेश्वरस्य प्रभोः<br>
दिव्यं पादपयोरुहद्वयमहो अन्तस्स्थितं मद्दृशोः॥ १॥

२. ( उवंदवुळ्ळत्तनाय् ) महाबलिसविधे त्रिपदपरिमितभूमियाचनामात्रे दानधारोदकप्राप्त्या हर्षप्रकर्षमेदुरान्तःकरणतया जगन्ति क्रान्त्वा अण्डकटाहावधि समुच्छ्रितमकुटतटस्य, समुद्धतनिशाचरनिकरविनाशनविशारदपरुषसायकस्य काकुत्स्थस्य सुरभिमहोद्यानपरीतश्रीरङ्गधामनाथस्य कटितटभूषणभूतदिव्यपीताम्बरे मम चिन्तना निविशते स्म ॥

श्लो० आनन्दोल्बणचेतसा सह जगद्विक्रान्तिमाधत्त यः
यो वा दुष्टनिशाचरौघहरणोदञ्चच्छरो राघवः ।
तस्यैतस्य सुगन्धिसद्वनततीरम्योपकण्ठस्थल-
श्रीरङ्गेशितुरम्बरे कटिगते लग्नं मदीयं मनः ॥ २ ॥

३. ( मन्दिपाय् वडवेङ्गडमामले ) उत्प्लवनक्रीडासंसक्तशाखामृगसंकुले श्रीवेङ्कटाद्रौ नित्यसूरिभिराराध्यमानस्य, श्रीरङ्गे भोगिभोगशयनीयशायिनश्च महाप्रभोः सन्ध्यासमरोचिषि दिव्यपीतवाससि विरिञ्चोत्पत्तिहेतुभूतदिव्यनाभीकमले च खलु ममान्तरात्माऽवजगाहे ॥

श्लो० श्रीमद्वेङ्कटभूधरे कपिकुलक्रीडाकुले निर्जर-
स्तोमैरर्चितपादपद्मयुगलो यस्तिष्ठति श्रीधरः ।
सोऽयं भोगिनि रङ्गराजवपुषा शेतेऽस्य पीताम्बरे
सन्ध्यारोचिषि, सृष्टवधसि मनो नाभ्यां च सक्तं मम ॥ ३ ॥

४. ( शदुरमामदिळ् शूळिलङ्गै ) चतुरश्रसमुत्तुङ्गप्राकारपरिवेष्टितलङ्कानगराधिनाथस्य दशकन्धरस्य शिरांसि दश विनाशयितु मद्वितीयमस्त्रं प्रयुक्तवतः सागरसवर्णस्य, मधुकरझङ्कार मयूरताण्डवभरितवनावलीपरिवृत - श्रीरङ्गधामनाथस्य भगवत उदरबन्धनाभिधानं दिव्यभूषणं विहरति मम हृदयाभ्यन्तरे ॥

श्लो० चेतोहारकवप्रवेष्टितमहालङ्कापुरीशस्य यः
शीर्षाणां दशकं शरेण हृतवान् अम्भोधिवर्णो हरिः ।
तस्यैतस्य मयूरनृत्तमधुपारावोज्ज्वलद्रङ्गभू-
नाथस्योदरबन्धनं मम हृदि स्थित्वा भृशं खेलति ॥ ४ ॥

५. ( पारमाय पळविनै पत्तरुत्तु ) दुर्भरभारायितानादिदुरितसञ्चयग्रन्थिसम्बन्धप्रणाशनपूर्वकं मम स्वस्मिन् प्रावण्यभूमानमुत्पादितवतः मच्चेतसि च प्रविष्टस्य श्रीरङ्गनाथस्य दिव्यमौक्तिकमालिकालंकृतं श्रियाऽध्युषितं च वक्षस्थलं हि मां स्वायत्तीचकार; हा हन्त न जाने किं नु मया घोरं तपस्तप्तम् ॥

श्लो० प्राचीनानि सुदुर्भराणि दुरितान्युन्मूल्य यो मां निज-
प्रेम्णो भाजनतां निनाय भगवान् चित्तं च मे प्राविशत् ।

तस्यैतस्य तु रङ्गिणस्सुललितैर्हारैरुरश्शोभनं
मां स्वायत्तमधादहो किमु मया तप्तं तपः कर्कशम् ॥ ५ ॥

६. (तुण्डवेण् पिरैयन्) शुभ्रचन्द्रकलाधरमौलेर्महादेवस्य गुरुपातकविपद्विमोचनविचक्षणः सुन्दरच्छदचञ्चरीकभृङ्कृतमहोद्यानपरिवृतश्रीरङ्गक्षेत्रस्वामी च यो भगवान्, तस्यैतस्य देवदेवस्य अण्डान्तर्वर्तिदेवादिषण्डं बहिरण्डवृन्दं महापृथिवीं सप्त कुलाचलान् अन्यदन्यच्चाखिलमास्वादितवान् दिव्यकण्ठः खलु दासमिमं जनमुदजीवयत ॥

श्लो० शम्भोश्चन्द्रकलाढ्यमस्तकभृतो दुःखं महज्जहुषो
भृङ्गागवमनोहरोपवनभूरङ्गास्पदस्य प्रभोः ।
देवानण्डगणांश्च भूमिमखिलां सप्तापि शैलानथो
सर्वं चापि निगीर्य वस्तु विलसन् कण्ठो हि मां कर्षति ॥ ६ ॥

७. (कैयिनार् शुरिशङ्गनलाळियर्) दिव्यपाञ्चजन्य - ज्वालाचूडालहेतिराजपरिकर्मितपाणितलस्य महत्तरमहीधरोपमदिव्यमङ्गलविग्रहशालिनो दिव्यतुलसीसौरभसंभृतसमुत्तुङ्गमकुटतटस्य चास्मत्स्वामिनः फणिपतिशय्यामधिशयानस्य अत्यद्भुतचेष्टितस्य श्रीरङ्गनाथस्य विद्रुमसमो दिव्याधरो हि मम हृदयमाचकर्ष ॥

श्लो० भूषारूपसुशंखचक्रविलसत्पाणेर्महापर्वत-
श्रीभृद्दिव्यतनोः सुगन्धितुलसीमाल्याढ्यशीर्ष्णो हरेः ।
श्रीरङ्गाधिपतेः फणीन्द्रशयनव्यासङ्गिनो मत्प्रभोः
हा हा ! बिम्बनिभाधरो मम पुनश्चित्तं समाकर्षति ॥ ७ ॥

८. (परियनाहि वन्द) भक्ताग्रेसरप्रह्लादहिंसनतत्परस्य स्थूलवपुषो हिरण्यकशिपुनाम्नोऽसुरस्य वर्ष्म विदारितवतः, ब्रह्मादीनां देवानामपि सुदुर्लभस्य जगन्निदानस्य महोपकारस्य परमपावनस्य च श्रीरङ्गधुरन्धरस्य दिव्यमुखमण्डले विराजमानं श्यामवर्ण - विशाल - प्रभापुञ्जमञ्जुल - रक्तरेखाविभूषित सुदीर्घमहत्तरदिव्यलोचनद्वंद्वं हा हन्त माम् उन्मत्तमाततान ॥ [वि. श्रीरङ्गराजस्तवे "विशालस्फीतायद्रुचिरशिशिराताम्रधवले—श्रीरङ्गप्रणयिनयनाब्जे" इत्येषा दिव्यसूक्तिरत्रानुसन्धेया ।]

श्लो० स्थूलाकारभृतो हिरण्यकशिपोः कायं भिनत्तिस्म यः
सोऽयं व्योमसदां च दुर्लभतरः श्रीरङ्गशायी हरिः ।
तस्यैतस्य मुखे दृशौ शितिपुटे वैशाल्यभाजौ भृशं
दीर्घे रोहितरेखया सुमधुरे चित्तभ्रमं चक्रतुः ॥ ८ ॥

९. (आलमामरत्तिनिलैमेल्) न्यग्रोधमहीरुहदलपुटे सप्तलोकीधरडिम्भवपुषा शयानस्य फणिपतिडोलिकातलिमशयस्य च श्रीरङ्गभर्तुः महनीयमनोहररत्नखचितहारावलीभिः मौक्तिकस्रग्वितति भिश्च विभूषितोऽद्वितीयसौन्दर्यनिधिः श्यामलो दिव्यमङ्गलविग्रहो हा हन्त ! मम हृदयस्य धीरतामपाहरत ॥

श्लो॰ लोकान् सप्त निगीर्य डिम्भवपुषा न्यग्रोधपत्रे लघु-
न्याश्चर्यं शयनं चकार भगवान् यो रङ्गनाथः प्रभुः ।
तस्यैतस्य मणीन्द्रहारनिकरो मुक्ताफलस्रक्तथा
नीलो मङ्गलविग्रहश्च बत मे चक्रुर्मनोविक्रियाम् ॥ ९ ॥

१०. ( कोण्डलवण्णनै ) नीलमेघनिभं गोपालडिम्भवपुषा समास्वादितनवनीतगन्धिमुखारविन्दं मदीयहृदयापहारकं नित्यसूरिपरिषन्नियामकं श्रीरङ्गनायकं मदीयदिव्यामृतं दृष्टवत्यौ मम दृशौ नान्यत्किमपि वस्तु द्रष्टुमुत्सहेयाताम् ॥ [ वि. * स्नेहो मे परमो राजन् ! त्वयि नित्यं प्रतिष्ठितः । भक्तिश्च नियता वीर ! भावो नान्यत्र गच्छति ॥ इत्यभिहितवतः पवनात्मजस्येव पाणसूरेरस्यापि श्रीवैकुण्ठधामवैमुख्यमेव " नान्यत्किमपि वस्तु " इत्यादिना कथ्यते इति वेदितव्यम् ॥ ]

श्लो॰ जीमूताभतनुं च गोपवपुषा हैयङ्गवीनाशनं
मच्चित्तापहृतिक्षमं दिविषदामीशं मदीयामृतम् ।
श्रीमद्रङ्गमहीपतिं मम दृशौ ये दृष्टवत्यौ मुदा
सत्यं वच्मि न ते तदन्यविषयालोके दधाते स्पृहाम् ॥ १० ॥

इति श्रीकाञ्ची प्रतिवादिभयङ्कर

अण्णङ्गराचार्यकृतिषु

अमलनादिपिरान् दिव्यप्रबन्धस्य गद्यपद्यमयो विवर्तस्समाप्तः ॥

---

॥ श्रीरस्तु ॥

श्रीपराङ्कुशपरकालयतिवरवरवरमुनीन्द्रेभ्यो नमः

श्रीमधुरकविदिव्यसूरिणाऽनुगृहीतः

कण्णिनुण्शिरुत्ताम्बुनामा

# ॥ श्रीशठकोपसूरिस्तुतिरूपो दिव्यप्रबन्धः ॥

श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यप्रणीतसंस्कृतगद्यपद्यविवर्तसनाथः ।

श्रीशैलेशदयापात्रमित्यादि........प्रणतोऽस्मि नित्यम् ॥

( तनियन् – मुखपद्यम् । )

अविदितविषयान्तरश्शठारेरुपनिषदामुपगानमात्रभोगः ।
अपि च गुणवशात्तदेकशेषी मधुरकविर्हृदये ममाविरस्तु ॥

(भाव:) श्रीशठकोपमुनीन्द्रव्यतिरिक्तविषयानभिज्ञः, तदनुगृहीतद्रमिडोपनिषदनुसन्धानमात्रं परमभोग्यत्वेन स्वीकृतवान्, स्वरूपप्रयुक्तदास्येन सह गुणकृतदास्यं च बिभ्राणः तमेकमेव शठारिमुनिवरं स्वशेषिपदे निदधानो मधुरकविर्महात्मा मम मनसि प्रादुर्भवतादिति ॥

(द्वितीयं मुखपद्यम्—द्राविडभाषामयम्। वेरोन्नुम् नानरियेन्।)

श्लो० अन्यत्किञ्चन नैव वेद्म्यहमहो सद्द्राविडोक्त्या त्रयी-
सारार्थानुपगीतवान् स कुरुकाधीशः शठारिर्मुनिः।
अस्माकं भविनां भवाब्धितरणोपायोऽस्त्विति स्तोत्रयन्
सूरीन्द्रो मधुरः कविर्भवति नस्संरक्षकस्तं स्तुमः॥

[श्लोकेऽस्मिन् "अन्यत्किञ्चन नैव वेद्म्यहम्" इत्येतदपि
वाक्यम् मधुरकविवागनुवादरूपं मन्तव्यम्॥]

॥ श्रीमधुरकविसूरिवैभवम् ॥

श्रीमच्छठरिपुमुनिवरशिष्यप्रवरस्य मधुरकविनाम्नः।
मेषे चित्रोडुनि भुव्यवतीर्णस्य प्रभावमभिदध्मः॥

श्रीमच्छठकोपमुनीन्द्रावतारमहित श्रीकुरुकापुरीसन्निहिते तिरुक्कोळूरनाम्नि दिव्यदेशे मेषमासि चित्रानक्षत्रे पुरश्चूडब्राह्मणोत्तमकुले कोऽपि महानवततार। [असावेव मधुरकविः।] सूर्योदयतः पुरस्तादरुणोदयवत् वकुलभूषणभास्करोदयतः प्रागेव सोऽयं महानवतीर्णः काले काले यथाविधि चौलोपनयनादिसंस्कारसंपन्नो वेदवेदाङ्गादि निखिलमधीत्य तत्त्वविदामग्रणीः प्रचकाशे। कर्णामृतदिव्यसूक्तिग्रथनचतुरतया मधुरकविरिति नाम दिव्यमविन्दत। भक्तिभूम्ना सोऽयं क्षेत्रतीर्थयात्रासु हेवाकी प्रस्थित उत्तरभारतं पर्यट्य साकेतनगरमधिगत्य तत्र श्रीरामसीतागुणानुभवतत्पर उवास।

तदा कदाचिदसौ नक्तं दक्षिणां दिशमुदीक्षमाणस्तत्र रोदसी व्याप्य विशेषतः प्रकाशमानमप्रतिमदिव्यतेजःपुञ्जमवलोक्य तत्तत्त्वमजानन् 'ग्रामनगरादिकं दह्यते किमु! दारुणो दावानलः किमु!' इत्येवमाशङ्कमानः किमपि निर्धारयितुमप्रभविष्णुरवतस्थे। अनारतमेवमवेक्षमाणस्स सूर्यचन्द्राग्नितेजःपुञ्जादप्यतिशयेन विभासमानस्यास्य विलक्षणस्य तेजसस्तत्त्वमवगन्तव्यमिति कुतूहलेन तमेव प्रभापुञ्जं लक्ष्यपदे निधाय प्रस्थितो महता जवेन द्राघीयांसं पन्थानमतीत्य कुरुकापुरीमुपेत्य तत्र श्रीमतो वकुलाभरणमुनीन्द्रस्य दिव्यमङ्गलविग्रहं तेजसां राशिमूर्जितमिव स्थितमासेव्य सोऽयमेव तेजोराशिरुत्तरस्यां दिशि दृष्टोऽस्माभिरित्यवधार्य, शठकोपमुनीन्द्रस्य तस्य अप्राकृतमूर्तिसन्निवेशमवाङ्मनसगोचरवैभवास्पदमवेत्य तच्चरणारविन्दयुगलैकशरणस्तदेकशिष्यो बभूव।

तदा स मुनीन्द्रः पञ्चभिस्संस्कारैरिमं संस्कृत्य स्वीकृत्य, अर्चावतारवेदस्वरूपान् चतुर्वेदसारभूतान् दिव्यप्रबन्धाननुगृह्य तानस्मा उपदिश्य एतद्द्वारा जगति लब्धप्रचारानकार्षीत्।

स एष मधुरकविर्भरतैकप्रवणश्शत्रुघ्न इव भागवतप्रावण्यमेव साधीयः प्रतिपद्यमानः श्रीशठकोपमुनीन्द्रेऽस्मिन्नेव परमदेवताप्रतिपत्तिमप्रधृष्यामुद्वहन् * कण्णिनुण् शिरुत्ताम्बुनाम्ना प्रसिद्धं लघु दिव्यप्रबन्धरत्नं च तद्विषयकं विज्ञाप्य स्वकीयमनुपममध्यवसायं विश्वसिद्धं वितेने।

कालक्रमेण च दिव्यं धाम जग्मुषि शठकोपमुनीन्द्रे आचार्यविश्लेषमसहमानः परितप्य क्रमेण समाश्वस्य तस्यैव कीर्तिततीर्जगति प्रथयन्नथ जगाह गुरुचरणाचरणारुणनलिनपरिसरम् ॥

इत्थं श्रीमधुरकवेः शठकोपमुनीन्द्रचरणशरणस्य । वैभवमात्मनि दधतामाविरस्युस्सकलसंपदः क्रमशः ॥

इति श्रीमधुरकविसूरिवैभवं समाप्तम् ॥

श्रीमधुरकविसूरये नमः ॥

## कण्णिनुण्शिरुत्ताम्बुदिव्यप्रबन्धस्य व्याख्यानावतारिका ।

चतुस्सहस्रीव्यपदेशभाजने द्राविडाम्नायदिव्यप्रबन्धसमुदये प्रथमसहस्रे चरमप्रबन्धत्वेन श्रीमन्नाथमुनिना निवेशितोऽयं दिव्यप्रबन्धः । श्रीशठकोपमुनीन्द्रानुगृहीत ( सामवेदसारभूत ) सहस्रगीतिदिव्यप्रबन्धपारायणस्य प्रारम्भकालेषु समापनकालेषु च * कण्णिनुण्शिरुत्ताम्बुनाम्नो दिव्यप्रबन्धस्यास्य पारायणं नियमेन संपद्यते । प्रबन्धोऽयम् * कण्णिनुण्शिरुत्ताम्बिति वाक्येनोपक्रान्त इति हेतुना परं कण्णिनुण् शिरुत्ताम्बिति नाम लेभे । यथा हि श्रीपाणसूरेः * अमलनादिपिरान्नामा दिव्यप्रबन्धः । चतुस्सहस्रात्मकदिव्यप्रबन्धेषु सकलेष्वपि कदाचित्तिरोहितेषु सत्सु श्रीमन्नाथमुनिनामा आचार्यसार्वभौमः श्रीशठकोपमुनीन्द्रावतारस्थलीम् श्रीकुरुकापुरीमुपेत्य तत्र दिव्यतिन्त्रिणीतरुमूले मधुरकविकृतं दिव्यप्रबन्धमिमं द्वादश सहस्रकृत्वः प्रावर्त्य श्रीशठकोपमुनीन्द्रं साक्षात्कृत्य तन्मुखतो निखिलानपि दिव्यप्रबन्धानुपलेभे—इति तावत्सम्प्रदायः । श्रीसरोमुनिप्रभृति श्रीपरकालसूरिपर्यन्तैरन्यैर्दिव्यसूरिप्रवरैः प्रणीता दिव्यप्रबन्धा यथा भगवद्गुणगणानुभवपराः तथा नैष दिव्यप्रबन्धो भगवतः स्तुतौ प्रवृत्तः ; अपितु स्वाचार्यस्य श्रीशठकोपमुनेः स्तुतिरूपतयैव निबन्धोऽयं निबद्धो मधुरकविना । एतादृशस्यास्य प्रबन्धस्य भगवद्विषयकदिव्यप्रबन्धमध्ये परिगणनं कथं युज्यत इति काचिदाशङ्का जायेत । अत्रैवं समाहितिः ;—भगवान् स्वस्य स्तवनादपि भागवतोत्तमानां स्तवनेन सत्यमतिमात्रं प्रहृष्यति ; अत एव स भगवान् अष्टविधां भक्तिमाचक्षाणः * मद्भक्तजनवात्सल्यम् * इत्येव प्रथमतो निर्दिशति । एतेन च सुगमम्—भगवान् स्वविषयकभक्तितोऽपि स्वकीयभक्तजनविषयकभक्तिमतिमात्रमभिनन्दतीति । अतश्च भगवन्मुखोल्लासहेतुभूतेषु स्तवेषु भागवतोत्तमविषयकः स्तवः प्राधान्यमश्नुत इति निष्कर्षो निरपायः ।

श्रीमदष्टाक्षरमहामन्त्रं व्याचक्षाणाः पूर्वाचार्यवर्या नमःपदविवरणावसरे " अत्र भागवतशेषत्वमनुसन्धेयम् " इत्यादिशन्ति । भागवतशेषतैव नमःपदार्थ इति सारज्ञसम्मतम् । अहंकारममकारयोरात्यन्तिकविध्वंसमाचक्षाणस्य नमःपदस्यार्थे हृदि गाढनिषण्णे सति भगवच्छेषत्वकाष्ठाभूता भागवतशेषता स्वत एव हि समुन्मिषेत । तदानीमेव हि मूलमन्त्रार्थविज्ञानपौष्कल्यं निष्पद्यते । तथाच मन्त्रार्थानुसन्धानअनुभवतत्परेषु दिव्यप्रबन्धेषु भगवच्छेषत्वकाष्ठानिष्ठाप्रकाशनैदम्परस्यास्य दिव्यप्रबन्धस्यान्तर्भावो न दुष्यतीत्येतावन्मात्रं न ; अत्यावश्यकोऽपीति प्रतिपत्तव्यम् । श्रीरामायणपुरुषेषु चतुर्षु शत्रुघ्नेन महात्मना संदर्शितो ह्येष निरवद्यः पन्थाः । स तु श्रीरामचन्द्रभगवद्भक्ताग्रेसरे भरते केवलं भक्तः ; न तु रामचन्द्रे भगवति । तदिदम् *गच्छता मातुलकुलं भरतेन तदाऽनघः । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ * इत्ययोध्याकाण्डप्राथमिकश्लोकरत्नस्य पूर्वाचार्यानुगृहीतरसघनव्याख्यानतोऽवसेयमिति नात्र विस्तरः ॥ एवंच भागवतोत्तममाचार्यसार्वभौमं चाधिकृत्य आचार्यभक्तिपरीवाहरूपतया मधुरकविसूरिवरेण प्रणीतोऽयं दिव्यप्रबन्धो भगवत्परेषु दिव्यप्रबन्धेषु मध्ये सुष्ठु परिगणनामर्हतीति प्रतिपद्यन्तां प्राज्ञाः प्रामाणिकाः ॥

॥ इत्यवतारिका ॥

१. ( कण्णिनुण् शिरुत्ताम्बिनाल् ) ग्रन्थिबृन्ददन्तुरतनुतरदामबन्धविवशं स्वात्मानं स्वयमेव कृतवन्तं महामायं भगवन्तमपि विसृज्य आचार्यसार्वभौममाश्रित्य "दक्षिणकुरुकापुरीनाथ" इति तद्दिव्यनामसंकीर्तने क्रियमाणे सति परमभोग्यता भवति; ममैव जिह्वायाममृतस्रावो बोभवीति ॥ [ विवरणम् ;—स्वाचार्यः शठकोपमुनीन्द्रः स्वकीयसहस्रगीत्याम् ( १ - ३ - १ ) प्रथमशतकतृतीयदशकप्रथमगाथायां प्रथमतः स्वानुभवोपक्रमकाले नवनीतचौर्यनिबन्धनदामबन्धनवृत्तान्तमेवानुभूतवानिति विदित्वा स्वयमप्यत्र दामनिबद्धं कृष्णकिशोरमेव प्रस्तौति। मदाचार्य भूतपराङ्कुशमुनीन्द्रप्रावण्यहेतुभूतो दामोदरो ममापि प्रावण्यपात्रं भवितुमर्हति; तथापि चरमपर्वनिष्ठस्य मम चेतसे स्वाचार्यनामसंकीर्तनमेव भृशं स्वदते - इत्युक्तं भवति गाथायाऽनया ॥ कृष्णबन्धनोपकरणभूतदाम्नो ग्रन्थिबृन्ददन्तुरत्वविशेषणं किमर्थमिति चेत; कृष्णो नवनीतचौर्ये प्रवृत्तः प्रथमतो दाम्नां खण्डनं कृत्वैव मोषणे प्रवर्तते; अथ यशोदा तस्करडिम्भमेनं तनयमेकेन पाणिना परिगृह्य अन्येन पाणिना दामानमादत्ते; तां च छिन्नभिन्नामवलोक्य तया शिथिलया बन्धुमसमर्था सती तद्दामखण्डानां ग्रथनमारभते; तदा दाम्नो ग्रन्थिबृन्ददन्तुरता भवति। प्रग्रथितयाऽपि दाम्ना कृष्णो बन्धनयोग्यो न भवति स्ववपुषः पृथूकरणेन। तदात्वे "हा हन्त बन्धुमयोग्यो भवत्येष" इति निर्विण्णायां जनन्याम् कृष्णो मायी स्ववपुषः संकोचनेन बध्यो भवति सपदि ; अत एव "दामबन्धविवशं स्वात्मानं स्वयमेव कृतवन्तम्" इति, "महामायम्" इति चानुगृहीतम्। अत्र यादवाभ्युदयश्लोकाविमावनुसन्धेयौ ;—* मुहुः प्रवृत्तं नवनीतचौर्ये वत्सान् विमुञ्चन्तमदोहकाले। उलूखले कुत्रचिदात्तपुण्ये बन्धुं सतां बन्धुमियेष माता ॥ आनीतमग्रे निजबन्धनार्थं दामाखिलं संहितमप्यपूर्णम्। निरीक्ष्य निर्विण्णधियो जनन्याः संकोचशक्त्या स बभूव बध्यः ॥ * इति ॥

श्लो० सूक्ष्मग्रन्थिलदामबन्धविवशं स्वात्मानमाधत्त यः<br>
तं कृष्णं च विहाय मायिनमहो नारायणं नायकम्।<br>
स्वामिन् श्रीकुरुकापुराधिप मुनिश्रेष्ठेति संकीर्तिते<br>
जिह्वायां मम वर्धते निरुपमं सौवादवं नित्यशः ॥ १ ॥

२. ( नाविनाल्नविलु ) श्रीकुरुकापुरीश्वरं श्रीशठारिसूरिं जिह्वया स्तुत्वा हर्षप्रकर्षमनुभवामि ; तस्यैव दिव्यपादारविन्दे सत्यं समाश्रयामि। तदन्यद्दैवतं न किमपि वेद्मि। तस्यैव मुनिसार्वभौमस्य दिव्यसूक्तिगीतानि गायन् पर्यटानि ॥

श्लो० स्तुत्वा जिह्विकया शठारिमनघं संतुष्टचित्तोऽभवम्<br>
तस्यैव स्पृहणीयपादयुगले भक्तोऽभवं तत्त्वतः।<br>
तस्मात् श्रीकुरुकापुरीश्वरमुनेर्जाने न दैवं परम्<br>
तत्सूक्तिस्वरगानलोलुपमनास्सन् पर्यटेयं क्षितौ ॥ २ ॥

३. ( तिरितन्दाहिलुम ) श्रीशठकोपमुनीन्द्रैकदैवतोऽहमिति अधस्तात्प्रकटितस्याध्यवसायस्य विपर्यासं कृत्वाऽपि देवाधिदेवस्य श्रीमतो नारायणस्य दिव्यमङ्गलविग्रहमपि सेवेयाहम्। नैतावता मदध्यवसायशैथिल्यम्। कथमिति चेत, श्रीकुरुकापुरीशमुनिसार्वभौमस्य यदाऽहं दासः, तदा मम तन्मुखोल्लासहेतुभूतं भगवत्प्रावण्यमपि सुकृतमेव खलु; अवर्जनीयं ह्येतत। [ वि. यथा हि भगवतः प्रिया इति

हेतुना भागवता उपादीयन्ते, तथा भागवतानां प्रिय इति हेतुना भगवत उपादानं प्राप्तमिति शास्त्रार्थोऽत्र निर्व्यूढः । भगवत्प्रावण्यविवृद्धिरूपं भागवतप्रावण्यमिति यावत ॥ ]

श्लो० एवं सन्नपि जातुचिद्भगवतो देवाधिनाथस्य च
श्यामं कोमलविग्रहं तमपि च प्रेक्ष्य सोऽहं बत ।
औदार्याधिककारिसूनुशठजिद्दासत्वपूर्तेः फलं
मन्तव्यं तदिदं मुकुन्दभजनं, तस्मादवद्यं न मे ॥ ३ ॥

४. ( नन्मैयाल्मिक्क ) परमधार्मिकाश्चतुर्वेदधरा ब्राह्मणोत्तमा आनृशंस्यप्रधाना अपि मां दुर्गुणप्रचुरत्वहेतुना तिरस्कुर्युरिति मत्वा स्वामी श्रीशठकोपसूरिः मातृवत्पितृवच्च मत्संरक्षणैकव्रती विराजते ॥

श्लो० नानासद्गुणसम्पदा सुमहिता वेदाब्धिपारंगताः
दासं दोषमयं निरीक्ष्य करुणां नैवादधीरन्निति ।
मातेवाथ पितेव च प्रियहितं सम्पादयन् सर्वदा
श्रीमानेष पराङ्कुशो मुनिवरो जातो मयि प्रेमभाक् ॥ ४ ॥

५. ( नम्बिननन् ) इदानीं दासोऽहमित्यनुसंदधानोऽहं प्राक्काले * किं तेन न कृतं पापं चोरेणात्मापहारिणा * इत्युक्तरीत्या आत्मापहारचोर आसम्; विषयान्तरप्रवणश्चावर्तिषि । अधुना तु हिरण्मयप्रासादपरिवृतश्रीकुरुकानगरीनाथस्य मुनिपुंगवस्य भक्तस्सन् कृतकृत्यस्समभूवम् ॥

श्लो० प्राक्काले परकीयवस्तुनिवहेष्वासं समुत्कण्ठितः
किञ्चासं ललनाजनेषु बहुषु प्रेम्णा भृशं मेदुरः ।
स्वर्णोदञ्चितवप्रशालिकुरुकासत्पत्तनाधीशितुः
सूरेस्सम्प्रति दासभावमुपयन् जातोऽस्मि संशिक्षितः ॥ ५ ॥

६. ( इन्रु तोट्टुम् ) अद्यप्रभृति यावदात्मभावि स्वकीर्तिमेव दृढाध्यवसायेन सह यथाऽहं स्तुयां तथा परमकृपां प्राचीकशदस्मत्स्वामी भूधरसन्निभसौधमालावृतकुरुकापुरीपरिवृढः । इतः परं न कदाचिदपि मामुपेक्षेत स एष गुरुवरः । तदिदम् अनुभवतः क्रमशो द्रष्टुं शक्यमखिलानाम् ॥

श्लो० अद्यारभ्य समस्तजन्मनिवहे स्वामी शठारिर्मुनिः
कीर्तिं कीर्तय मामिकामिति कृपां मय्यातनोदद्भुताम् ।
भास्वच्छैलसमानसालकुरुकाक्षेत्राधिनाथस्स मां
भूयो नैव कदाऽपि निग्रहपदं कुर्यादहो पश्यत ॥ ६ ॥

७. ( कण्डुकोण्डेन्न ) परमोपकारकः कारिसूनुर्मुनिसार्वभौमः स्वमहिमानभिज्ञं मां स्वकटाक्षवीक्षालक्ष्यमाकलय्य स्वीकृत्य च मदीयचिरन्तनप्रबलपातकराशीन् व्यनीनशत । अतिमधुरद्रमिडफणितिप्रसादकश्रीशठकोपमुनेरस्यैव कृपामष्टासु दिशासु प्रथयेयम् ॥

श्लो॰ योगी कारिसुतो महान् शठरिपुर्दासे कटाक्षं निजं
संधुक्ष्य प्रबलं पुरातनमघं निश्शेषदग्धं व्यधात् ।
तस्यैतस्य महात्मनो द्रविडवागीशस्य दिव्यां कृपां
नित्यं सर्वदिगन्तवर्तिजनतावेद्यां करिष्याम्यहम् ॥ ७ ॥

८. (अरुळ्कोण्डाडुम्) सर्वाणि शास्त्राण्यपि जगतीतले उपकृतवानिति हेतुना भगवतो विष्णोः कृपामभिनन्दतां श्रीवैष्णवानाम् स्वकृपाविषयकविस्मयातिशयविवृद्धये दुरवगाहान् वेदार्थाननुगृहीतवतः, परमकृपयाऽतिमधुरद्राविडभाषामयीं सहस्रगीतिं गीतवतः श्रीशठकोपमुनेः परमकृपैव खल्विह भृशमतिशायिनी ॥ [विवरणम्:—इतः पूर्वं शास्त्रबृन्दप्रदानकृते भगवत्कृपां निरतिशयां स्तुतवन्तो भागवताः श्रीशठकोपमुनिवरदिव्यसूक्त्यवतारसमनन्तरं भगवत्कृपां लघीयसीं मत्वा तत्प्रशंसनं विहाय सूरेरस्यैव कृपामसमाधिकां प्रशशंसुरिति कथितं भवति ॥]

श्लो॰ स्वामी श्रीशठकोपसूरिरतुलां विष्णोः कृपां शंसतां
भक्तानां स्वकृपाबलं प्रकटयन् वेदार्थरत्नान्यदात् ।
अत्याश्चर्यकृपाबलाद्दशशतं गाथास्स चक्रे मुनिः
तस्यैतस्य कृपैव भूतल इह प्राबल्यमासीदति ॥ ८ ॥

९. (मिक्कवेदियर्) वैदिकोत्तमैरधीयमानानां वेदानां परमतात्पर्यं मम हृदि प्रतिष्ठापयितुं सहस्रगीतिमनुगृहीतवतो महायशस्विनः श्रीशठकोपमुनेर्विषये शेषभावविषयिणी मदीया कामना सद्य एव कैङ्कर्यपर्यन्तफलवती बभूव ॥

श्लो॰ अत्यभ्यर्हितवैदिकार्हनिगमस्तोमार्थतत्त्वं स्वयं
संकीर्त्य स्वसदुक्तिभिर्मम हृदि स्वामी य आस्थापयत् ।
तस्यैतस्य गुणाकरस्य कुरुकानाथस्य दास्ये रुचिः
या जाता मम सा फलेग्रहिरभूत्कैङ्कर्यसाम्राज्यतः ॥ ९ ॥

१०. (पयनन्नाहिलुम्) परेषां शिक्षणप्रयत्नस्य सर्वथा विफलत्वे सत्यपि तेषां शिक्षणयोग्यताविरहे सत्यपि स्वानुष्ठानमुखेन तेषां सम्यग्विनयनार्थं कोकिलकूजिताभिराममहोद्यानपरीतां श्रीकुरुकापुरीमधिवसन् मुनिसार्वभौम ! भवदीयदिव्यपादारविन्दप्रावण्यसंपादनार्थमेव सततमुद्युक्तोऽस्मि ॥

श्लो॰ त्यक्त्वा प्रत्युपकारलाभकुतुकं साद्गुण्यरिक्तानपि
प्रेम्णा साधु विनीय किंकरपदे निक्षेप्तुमिच्छावशात् ।
कूजत्कोकिलवृक्षषण्डकुरुकाक्षेत्रे निवासोत्सुक
स्वामिन् तावकदिव्यपादपरिचर्यायै व्यवस्याम्यहम् ॥ १० ॥

११. (अन्बन्तन्नै) आश्रितपक्षपातिनं भगवन्तं नारायणमाश्रितवत्सु सर्वेष्वपि भागवतेषु प्रावण्यशालिनि श्रीकुरुकापुरीश्वरे श्रीपराङ्कुशमुनौ भक्तिभूमभाजा मधुरकविना कीर्तितमिमं दिव्यप्रबन्धं हृदि शरणं कलयतां सतां यन्निवासस्थानं तदेव श्रीवैकुण्ठधाम ॥ इति फलकीर्तनेन समापितोऽयं दिव्यप्रबन्धः ॥

श्लो० श्रीशं स्वाश्रितवत्सलं श्रितवतां पादेषु भक्त्युज्ज्वले
योगीन्द्रे कुरुकेश्वरे भगवति श्रीमच्छठारौ परम् ।
भक्तेन ग्रथितां कृतिं मधुरकव्याख्येन ये विश्रम-
न्त्येते यत्र वसन्ति तत्स्थलमहो वैकुण्ठलोकायते ॥

श्लो० इत्थं वादिभयङ्करवंशीयाण्णङ्गरार्यसंग्रथिता ।
मधुरकविसूक्तिमालाप्रतिकृतिरेषा धिनोतु बुधहृदयम ॥

इति कण्णिनुणशिरुत्ताम्बुसमाख्यदिव्यप्रबन्धप्रतिकृतिस्समाप्ता ॥

इति श्रीकाञ्ची - प्रतिवादिभयङ्कर—
जगदाचार्यसिंहासनाधीश - श्रीमदण्णङ्गराचार्य
कृतिषु चतुस्सहस्रीसमाख्यद्राविडाम्नायदिव्यप्रबन्धविवर्ते
प्रथमसहस्रविवर्तः परिसमाप्तः ॥

श्रीमत्पराङ्कुशपरकालयतिवरवरवरमुनीन्द्रेभ्यो नमः ॥

---

## — प्रथमसहस्रान्तर्गता दिव्यप्रबन्धा अमी —

| | | | |
|---|---|---|---|
| १. | तिरुप्पल्लाण्डुनामा मङ्गलाशासनप्रबन्धः | गाथाः | १२ |
| २. | एरियाळवार्तिरुमोळिनामा भट्टनाथसूरिसूक्तप्रबन्धः | ,, | ४६१ |
| ३. | तिरुप्पावैनामा गोदाव्रतप्रबन्धः | ,, | ३० |
| ४. | नाच्चियार्तिरुमोळिनामा गोदासूक्तप्रबन्धः | ,, | १४३ |
| ५. | पेरुमाळ्तिरुमोळिनामा कुलशेखरसूक्तप्रबन्धः | ,, | १०५ |
| ६. | तिरुच्चन्दविरुत्तनामा भक्तिसारसूक्तप्रबन्धः | ,, | १२० |
| ७. | तिरुमालैनामा श्रीमालाप्रबन्धः | ,, | ४५ |
| ८. | तिरुप्पळ्ळियेळुच्चिनामा सुप्रभातप्रबन्धः | ,, | १० |
| ९. | अमलनादिपिरान्नामा श्रीपाणसूरिसूक्तप्रबन्धः | ,, | १० |
| १०. | कण्णिनुण्शिरुत्ताम्बुनामा श्रीमधुरकविदिव्यप्रबन्धः | ,, | ११ |
| | आहत्य सप्तचत्वारिंशदधिकनवशतगाथात्मकं प्रथमसहस्रम् ॥ | ,, | ९४७ |

---

## - विज्ञापनम् -

प्रकाशिते प्रथमसहस्रविवर्ते भूयसीनां गाथानां भूयसां च दशकानां पद्यात्मकोऽपि विवर्तः प्रकाशितो वर्तते। "तिरुमाले" प्रभृति "कण्णिनुण्शिरुत्ताम्बु" पर्यन्तानां चतुर्णां दिव्यप्रबन्धानां साकल्येन संस्कृत-पद्यविवर्तः प्रकाशितोऽस्ति। पद्यानामेषां लालित्यं माधुर्यं चानुभूतवन्तस्सुहृदो महान्त आदिशन्ति सर्वासा-मपि गाथानामेवं पद्यरचना निर्वर्त्यतामिति। अत्रास्माकमभिप्राय एषः — ललितानि मधुराण्यपि सन्ति पद्यानि विशदार्थविबोधने विवरणनिरपेक्षाणि नैव भवेयुः, अतश्च साकल्येन पद्यरूपविवर्तप्रणयने नास्मा-कमभिरुचिरेधते। "इयर्पा" नामकस्य तृतीयसहस्रस्य साकल्येनैव पद्यविवर्तोऽस्माभिरारचितः त्रिशतो वत्सरेभ्यः पूर्वम्; तेषां पद्यानां व्याख्यानसापेक्षता अत्यन्तमासीदित्यवधारणादेव तत्प्रकाशनाभिरुचिर्ना-जनि। तिरुमडल्प्रबन्धद्वयस्य पद्यविवर्तस्सुशोभन इति धियैव प्राकाश्यत। सोऽपि विवरणेन सहैव प्राकाशीति विदन्ति विपश्चितः।

इति

श्रीकाञ्ची - प्रतिवादिभयङ्कर - अण्णङ्गराचार्यः।